तान्यस्माभिर्गृहीतानि निहितानि च राघव ! ।
आनयिष्याम्यहं तानि प्रत्यभिज्ञातुमर्हसि ॥ १२ ॥
तमब्रवीत्ततो रामः सुग्रीवं प्रियवादिनम् ।
आनयस्व सखे ! शीघ्रं किमर्थं प्रविलम्बसे ॥ १३ ॥
एवमुक्तस्तु सुग्रीवः शैलस्य गहनां गुहाम् ।
प्रविवेश ततः शीघ्रं राघवप्रियकाम्यया ॥ १४ ॥
उत्तरीयं गृहीत्वा तु स तान्याभरणानि च ।
इदं पश्येति रामाय दर्शयामास वानरः ॥ १५ ॥
ततो गृहीत्वा वासस्तु शुभान्याभरणानि च ।
अभवद्बाष्पसंरुद्धो नीहारेणेव चन्द्रमाः ॥ १६ ॥
सीतास्नेहप्रवृत्तेन स तु बाष्पेण दूषितः ।
हा प्रियेति रुदन् धैर्य्यमुत्सृज्य न्यपतत्क्षितौ ॥ १७ ॥
हृदि कृत्वा स बहुशस्तमलङ्कारमुत्तमम् ।
निशश्वास भृशं सर्पो बिलस्थ इव रोषितः ॥ १८ ॥
अविच्छिन्नाश्रुवेगस्तु सौमित्रिं प्रेक्ष्य पार्श्वतः ।
परिदेवयितुं दीनं रामः समुपचक्रमे ॥ १९ ॥
पश्य लक्ष्मण ! वैदेह्या संत्यक्तं ह्रियमाणया ।

आनयिष्यामि आनेष्यामि इत्यत्र इमागमप्रदर्शनमिदम् ॥१२॥१३॥
गहनां दुष्प्रवेशाम् ॥ १४ ॥ १५ ॥ १६ ॥
हा प्रिये इतीत्यत्र सन्धिरार्षः ॥ १७ ॥

उत्तरीयमिदं भूमौ शरीराद्भूषणानि च ॥ २० ॥
शाद्वलिन्यां ध्रुवं भूम्यां सीतया ह्रियमाणया ।
उत्सृष्टं भूषणमिदं तथारूपं हि दृश्यते ॥ २१ ॥
एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् ।
नाहं जानामि केयूरे नाहं जानामि कुण्डले ॥ २२ ॥
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात् ।
ततस्तु राघवो वाक्यं सुग्रीवमिदमब्रवीत् ॥ २३ ॥
ब्रूहि सुग्रीव ! कं देशं ह्रियन्ती लक्षिता त्वया ।
रक्षसा रौद्ररूपेण मम प्राणप्रिया हृता ॥ २४ ॥
क्व वा वसति तद्रक्षो महद्व्यसनदं मम ।
यन्निमित्तमहं सर्वान्नाशयिष्यामि राक्षसान् ॥ २५ ॥
हरता मैथिलीं येन माञ्च रोषयता ध्रुवम् ।
आत्मनो जीवितान्ताय मृत्युद्वारमपावृतम् ॥ २६ ॥

हृदीति । प्रियासंबन्धेन प्रीत्यतिशयात् ॥ १८ ॥ १९ ॥ २० ॥

शाद्वलभूम्युत्सर्गे लिङ्गमाह, तथारूपमिति । अभग्नतया यथापूर्वरूपमित्यर्थः ॥ २१ ॥

नाहमिति । ऊर्ध्वदृष्ट्या परस्त्रीत्वेन कदाप्यदर्शनादिति भावः ॥ ॥ २२ ॥ २३ ॥

कं देशमुद्दिश्येति शेषः । प्राणप्रिया प्राणेभ्योऽपीष्टा प्राणसंबन्धस्य तदधीनत्वादिति भावः ॥ २४ ॥

मम दयिततमा हृता वनात्
रजनिचरेण विमथ्य येन सा ।
कथय मम रिपुं तमद्य वै
प्लवगपते ! यमसन्निधिं नयामि ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
षष्ठः सर्गः ॥ ६ ॥

यन्निमित्तं प्रियापहारि तन्निमित्तम् ॥ २५ ॥ २६ ॥
विमथ्य वञ्चयित्वा ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ।

एवमुक्तस्तु सुग्रीवो रामेणार्त्तेन वानरः ।
अब्रवीत्प्राञ्जलिर्वाक्यं सबाष्पं बाष्पगद्गदः ॥ १ ॥
न जाने निलयं तस्य सर्वथा पापरक्षसः ।
सामर्थ्यं विक्रमं वापि दौष्कुलेयस्य वा कुलम् ॥ २ ॥
सत्यं तु प्रतिजानामि त्यज शोकमरिन्दम ! ।
करिष्यामि तथा यत्नं यथा प्राप्स्यसि मैथिलीम् ॥ ३ ॥

एवमिति ॥ १ ॥

तस्य पापरक्षसः पापं कृतवतो रक्षसो निलयं निलयस्थानं गुप्तवासस्थानं सर्वथा न जाने । न हीदृशं पापं कर्म कृत्वा राजधान्यां वस्तुमर्हतीति भावः । सामर्थ्यं शौर्यादि । विक्रमं विशेषेण क्रामति पादविक्षेपं करोति यत्र तद्वासनगरम् । दौष्कुलेयस्येत्यनेन रक्षःकुलजत्वं ध्वनितम् । तज्जाने एवेति शेषः । वाशब्दौ त्वर्थे । अतएव लङ्काद्वीपं निर्दिश्य । स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः । राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेरिति हनूमदादिप्रेषणकालिकसुग्रीववचसा न विरोधः ॥ २ ॥

यद्यप्येतावज्जानामि तथापि तदुपवर्णनं निष्फलम् । तावन्मात्रज्ञानेऽपि तद्वधासम्भवात् । क्वचिद्गुप्ते स्थितिसम्भवात् । एतावत्तु अवगम्यतामित्याह, सत्यन्त्विति ॥ ३ ॥

रावणं सगणं हत्वा परितोष्यात्मपौरुषम्।
तथास्मि कर्त्ता नचिराद् यथा प्रीतो भविष्यसि ॥ ४ ॥
अलं वैक्लव्यमालम्ब्य धैर्य्यमात्मगतं स्मर।
त्वद्विधानां न सदृशमीदृशं बुद्धिलाघवम् ॥ ५ ॥
मयापि व्यसनं प्राप्तं भार्य्याविरहजं महत्।
नाहमेवं हि शोचामि धैर्य्यं नच परित्यजे ॥ ६ ॥
नाहं तामनुशोचामि प्राकृतो वानरोऽपि सन्।
महात्मा च विनीतश्च किं पुनर्धृतिमान् महान् ॥ ७ ॥
बाष्पमापतितं धैर्य्यान्निगृहीतुं त्वमर्हसि।
मर्य्यादां सत्वयुक्तानां धृतिं नोत्स्रष्टुमर्हसि ॥ ८ ॥
व्यसने वार्थकृच्छ्रे वा भये वा जीवितान्तगे।
विमृशंश्च स्वया बुध्या धृतिमान्नावसीदति ॥ ९ ॥

परितोष्यं भवतः परितोषार्हम् आत्मनः सपरिवारस्य मम पौरुषमवलम्ब्येति शेषः ॥ ४ ॥

न सदृशमयुक्तम् ॥ ५ ॥ ६ ॥

तां प्रियाम् ॥ ७ ॥

सत्वयुक्तानां सत्वगुणवताम् ॥ ८ ॥

व्यसने इष्टवियोगजे। अर्थकृच्छ्रे धननाशे। भये चौरव्याघ्रादिजे। जीवितान्तगे जीवितनाशप्रापके। विमृशन् प्रारब्धवेगमिति शेषः ॥ ९ ॥

बालिशस्तु नरो नित्यं वैक्लव्यं योऽनुवर्तते ।
स मज्जत्यवशः शोके भाराक्रान्तेव नौर्जले ॥ १० ॥
एषोऽञ्जलिर्मया बद्धः प्रणयात्त्वां प्रसादये ।
पौरुषं श्रय शोकस्य नान्तरं दातुमर्हसि ॥ ११ ॥
ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम् ।
तेजश्च क्षयते तेषां न त्वं शोचितुमर्हसि ॥ १२ ॥
शोकेनाभिप्रपन्नस्य जीविते चापि संशयः ।
स शोकं त्यज राजेन्द्र ! धैर्य्यमाश्रय केवलम् ॥ १३ ॥
हितं वयस्यभावेन ब्रूमि नोपदिशामि ते ।
वयस्यतां पूजयन्मे न त्वं शोचितुमर्हसि ॥ १४ ॥
मधुरं सान्त्वितस्तेन सुग्रीवेण स राघवः ।
मुखमश्रुपरिक्लिन्नं वस्त्रान्तेन प्रमार्जयत् ॥ १५ ॥
प्रकृतिस्थस्तु काकुत्स्थः सुग्रीववचनात्प्रभुः ।
सम्परिष्वज्य सुग्रीवमिदं वचनमब्रवीत् ॥ १६ ॥
कर्तव्यं यद्वयस्येन स्निग्धेन च हितेन च ।

यो बालिशः यश्च नित्यं वैक्लव्यमनुवर्त्तते स मज्जति। तुश्चार्थे। भाराक्रान्ता अतिभारवती ॥ १० ॥

अन्तरम् अवसरम् ॥ ११ ॥ १२ ॥ १३ ॥

ब्रूमि ब्रवीमि ॥ १४ ॥

प्रमार्जयत् प्रामार्जयत् ॥ १५ ॥ १६ ॥

अनुरूपञ्च युक्तञ्च कृतं सुग्रीव ! तत्त्वया ॥ १७ ॥
एष च प्रकृतिस्थोऽहमनुनीतस्त्वया सखे ! ।
दुर्लभो हीदृशो बन्धुरस्मिन् काले विशेषतः ॥ १८ ॥
किन्तु यत्नस्त्वया कार्य्यो मैथिल्याः परिमार्गणे ।
राक्षसस्य च रौद्रस्य रावणस्य दुरात्मनः ॥ १९ ॥
मया च यदनुष्ठेयं विस्रब्धेन तदुच्यताम् ।
वर्षास्विव च सुक्षेत्रे सर्वं सम्पद्यते तव ॥ २० ॥
मया च यदिदं वाक्यमभिमानात् समीरितम् ।
तत्त्वया हरिशार्दूल ! तत्त्वमित्युपधार्य्यताम् ॥ २१ ॥
अनृतं नोक्तपूर्वं मे नच वक्ष्ये कदाचन ।
एतत्ते प्रतिजानामि सत्येनैव शपाम्यहम् ॥ २२ ॥

कर्त्तव्यं यच्छोकनाशार्थमिति शेषः ॥ १७ ॥

प्रकृतिस्थः स्वभावस्थो दुःखहीन इत्यर्थः । अस्मिन् काले व्यसनकाले ॥ १८ ॥

रावणस्य संहारे चेति शेषः ॥ १९ ॥

मया च यदनुष्ठेयं तवेति शेषः ॥ वर्षास्विव सुक्षेत्रे उप्तं बीजमिति शेषः । सम्पद्यते सफलं भविष्यतीत्यर्थः । शैघ्र्यप्रत्यायनाय वर्त्तमानप्रयोगः ॥ २० ॥

इदं वाक्यं वालिनं वधिष्यामीति वाक्यम् । अभिमानात्तत इव ॥ २१ ॥

ततः प्रहृष्टः सुग्रीवो वानरैः सचिवैः सह।
राघवस्य वचः श्रुत्वा प्रतिज्ञातं विशेषतः ॥ २३ ॥
एवमेकान्तसंपृक्तौ ततस्तौ नरवानरौ।
उभावन्योऽन्यसदृशं सुखं दुःखमभाषताम् ॥ २४ ॥
महानुभावस्य वचो निशम्य
हरिर्नृपाणामधिपस्य तस्य।
कृतं स मेने हरिवीरमुख्य-
स्तदा च कार्य्यं हृदयेन विद्वान् ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
सप्तमः सर्गः ॥ ७ ॥

एतदनृतवचनाभावं सत्येन तत्साधितयेत्यर्थः ॥ २२ ॥ २३ ॥
संपृक्तौ कृतसख्यसम्पन्नौ अभाषताम् अभाषेताम् ॥ २४ ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे सप्तमः सर्गः ॥ ७ ॥

---

# अष्टमः सर्गः ।

परितुष्टस्तु सुग्रीवस्तेन वाक्येन हर्षितः ।
लक्ष्मणस्याग्रजं शूरमिदं वचनमब्रवीत् ॥ १ ॥
सर्वथाहमनुग्राह्यो देवतानां न संशयः ।
उपपन्नो गुणोपेतः सखा यस्य भवान्मम ॥ २ ॥
शक्यं खलु भवेद्राम ! सहायेन त्वयानघ ! ।
सुरराज्यमपि प्राप्तुं स्वराज्यं किमुत प्रभो ! ॥ ३ ॥
सोऽहं सभाज्यो बन्धूनां सुहृदाञ्चैव राघव ! ।
यस्याग्निसाक्षिकं मित्रं लब्धं राघववंशजम् ॥ ४ ॥
अहमप्यनुरूपस्ते वयस्यो ज्ञास्यसे शनैः ।
न तु वक्तुं समर्थोऽहं त्वयि आत्मगतान् गुणान् ॥ ५ ॥
महात्मनां तु भूयिष्ठं त्वद्विधानां कृतात्मनाम् ।

तेन वाक्येन अनृतं नोक्तपूर्वं मे इत्यादि वाक्येन ॥ १ ॥
उपपन्नः सम्पन्नः ॥ २ ॥ ३ ॥
सभाज्यः पूज्यः । यस्य येन । राघववंशजं मित्रं लब्धम् ॥ ४ ॥
अनुरूपः योग्यः । ज्ञास्यसे । आनुरूप्यमिति शेषः । न तु वक्तुं समर्थः । आत्मप्रशंसामरणं ममेति न्यायात् ॥ ५ ॥

निश्चला भवति प्रीतिधर्य्यमात्मवतांवर ! ॥ ६ ॥
रजतं वा सुवर्णं वा शुभान्याभरणानि च।
अविभक्तानि साधूनामवगच्छन्ति साधवः ॥ ७ ॥
आढ्यो वापि दरिद्रो वा दुःखितः सुखितोऽपि वा।
निर्दोषश्च सदोषश्च वयस्यः परमा गतिः ॥ ८ ॥
धनत्यागः सुखत्यागो देशत्यागोऽपि वानघ !।
वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥ ९ ॥
तत्तथेत्यब्रवीद्रामः सुग्रीवं प्रियदर्शनम्।
लक्ष्मणस्याग्रतो लक्ष्म्या वासवस्येव धीमतः ॥ १० ॥
ततो रामं स्थितं दृष्ट्वा लक्ष्मणञ्च महाबलम्।
सुग्रीवः सर्वतश्चक्षुर्वने लोलमपानयत् ॥ ११ ॥

भूयिष्ठमधिकं प्रीतिर्निश्चला भवति। वयस्यानामिति शेषः। आत्मवतां स्वाधीनानाम् ॥ ६ ॥

साधूनां वयस्यानाम्। साधवो वयस्याः। रजतमित्याद्युपलक्षणम् ॥ ७ ॥

वयस्यः परमा गतिः। वयस्यस्येति शेषः ॥ ८ ॥

तथाविधं स्वरसतो धनादित्यागप्रवर्त्तकमित्यर्थः ॥ ९ ॥

तत्तथेति। यदुक्तं वयस्ययोर्धनाविभागादिकं तन्ममापि सम्मतमित्यब्रवीदित्यर्थः। लक्ष्म्या कान्त्या युतो रामः वासवस्येव वासवसदृशस्य लक्ष्मणस्येत्यन्वयः। लक्ष्मणस्याग्रत इत्यनेन यथा मम लक्ष्मणस्य मैत्री तथैव तवापीत्यपि सूचितम् ॥ १० ॥

स ददर्श ततः सालमविदूरे हरीश्वरः।
सुपुष्पमीषत्पत्राढ्यं भ्रमरैरुपशोभितम् ॥ १२ ॥
तस्यैकां पर्णबहुलां शाखां भङ्क्त्वा सुशोभिताम्।
रामस्यास्तीर्य्य सुग्रीवो निषसाद सराघवः ॥ १३ ॥
तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणम्।
सालशाखां समुत्पाट्य विनीतमुपवेशयत् ॥ १४ ॥
सुखोपविष्टं रामं तु प्रसन्नमुदधिं यथा।
सालपुष्पावसङ्कीर्णे तस्मिन् गिरिवरोत्तमे ॥ १५ ॥
ततः प्रहृष्टः सुग्रीवः श्लक्ष्णया शुभया गिरा।
उवाच प्रणयाद्रामं हर्षव्याकुलिताक्षरम् ॥ १६ ॥
अहं विनिकृतो भ्रात्रा चराम्येष भयार्दितः।
ऋष्यमूकं गिरिवरं हृतभार्य्यः सुदुःखितः ॥ १७ ॥
सोऽहं त्रस्तो भये मग्नो वने संभ्रान्तचेतनः।
वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ! ॥ १८ ॥
वालिनो मे भयार्तस्य सर्वलोकाभयङ्कर !।

ततः तद्दिनापगमोत्तरम्। द्वितीयदिने इत्यर्थः। स्थितं दृष्ट्वा। भूमाविति शेषः ॥ ११ ॥

ईषत्सुपुष्पं पत्राढ्यं पत्रबहुलम् ॥ १२ ॥

सराघवः सुग्रीवो निषसाद ॥ १३ ॥ १४ ॥

सुखोपविष्टं रामं तु दृष्ट्वेति शेषः ॥ १५ ॥ १६ ॥

विनिःश्वस्य च तेजस्वी राघवं पुनरूचिवान् ॥ ३१ ॥
पुराहं वालिना राम! राज्यात् स्वादवरोपितः।
परुषाणि च संश्राव्य निर्धूतोऽस्मि बलीयसा ॥ ३२ ॥
हृता भार्य्या च मे तेन प्राणेभ्योऽपि गरीयसी।
सुहृदश्च मदीया ये संयता बन्धनेषु ते ॥ ३३ ॥
यत्नवांश्च स दुष्टात्मा मद्विनाशाय राघव!।
बहुशस्तत्प्रयुक्ताश्च वानरा निहता मया ॥ ३४ ॥
शङ्कया त्वेतयाहञ्च दृष्ट्वा त्वामपि राघव!।
नोपसर्पाम्यहं भीतो भये सर्वे हि बिभ्यति ॥ ३५ ॥
केवलं हि सहाया मे हनुमत्प्रमुखास्त्विमे।
अतोऽहं धारयाम्यद्य प्राणान् कृच्छ्रगतोऽपि सन् ॥ ३६ ॥
एते हि कपयः स्निग्धा मां रक्षन्ति समन्ततः।
सह गच्छन्ति गन्तव्ये नित्यं तिष्ठन्ति चास्थिते ॥ ३७ ॥

न शक्नोति नाशक्नोत् ॥ २९ ॥ ३० ॥ ३१ ॥

वालिविनिकारं संदिदेशाह, पुराहमिति। स्वाद्राज्यात्। विद्यमानज्येष्ठोचितादानरराज्यात्! अवरोपितोऽपहृताधिकारः। निर्धूतो भर्त्सितः ॥ ३२ ॥

बन्धनेषु बन्धनागारेषु संयता बद्धाः ॥ ३३ ॥

तत्प्रयुक्ता मद्वधाय तत्प्रेरिताः ॥ ३४ ॥

एतया शङ्कया मद्वधाय वालिप्रेरितत्वशङ्कया नोपसर्पामि नोपा-

संक्षेपस्त्वेष मे राम! किमुक्ता विस्तरं हि ते।
स मे ज्येष्ठो रिपुर्भ्राता वाली विश्रुतपौरुषः॥ ३८॥
तद्विनाशेऽपि मे दुःखं प्रमृष्टं स्यादनन्तरम्।
सुखं मे जीवितञ्चैव तद्विनाशनिबन्धनम्॥ ३९॥
एष मे राम! शोकान्तः शोकार्तेन निवेदितः।
दुःखितः सुखितो वापि सख्युर्नित्यं सखागतिः॥ ४०॥
श्रुत्वैतच्च वचो रामः सुग्रीवमिदमब्रवीत्।
किन्निमित्तमभूद्वैरं श्रोतुमिच्छामि तत्त्वतः॥ ४१॥
सुखं हि कारणं श्रुत्वा वैरस्य तव वानर!।
आनन्तर्य्याद्विधास्यामि सम्प्रधार्य्य बलाबलम्॥ ४२॥
बलवान् हि ममामर्षः श्रुत्वा त्वामवमानितम्।

सर्पम्। भये यत्किञ्चिद्द्रव्यप्राप्तौ बिभ्यति सर्वत एवेति शेषः॥ ३५॥ ॥ ३६॥ ३७॥

संक्षेपस्त्वेष इत्येतच्छब्दार्थः स मे ज्येष्ठ इति॥ ३८॥

तद्विनाशेऽपीति। यद्यपि भ्रातृनाशो दुःखाय तथापि अनन्तरं संप्रति विद्यमानं मे दुःखं तद्विनाशे एव प्रमृष्टं स्यात्। अपिरेवार्थे। तदेवाह, सुखमिति॥ ३९॥ ४०॥

तन्निमित्तं तत्त्वतः श्रोतुमिच्छामीत्यन्वयः॥ ४१॥

तव तेन वैरस्य कारणं श्रुत्वा युवयोर्बलाबलञ्च श्रुत्वानन्तर्य्यात् तदनन्तरोत्पन्नविमर्शात् संप्रधार्य्य निश्चित्य हि निश्चयेन तव सुखं त्वत्सुखसाधनं वालिवधं विधास्यामि॥ ४२॥

वर्धते हृद्योत्कम्पी प्रावृड्वेग इवाम्भसः ॥ ४३ ॥
हृष्टः कथय विस्रब्धो यावदारोप्यते धनुः ।
सृष्टश्च हि मया बाणो निरस्तश्च रिपुस्तव ॥ ४४ ॥
एवमुक्तस्तु सुग्रीवः काकुत्स्थेन महात्मना ।
प्रहर्षमतुलं लेभे चतुर्भिः सह वानरैः ॥ ४५ ॥
ततः प्रहृष्टवदनः सुग्रीवो लक्ष्मणाग्रजे ।
वैरस्य कारणं तत्त्वमाख्यातुमुपचक्रमे ॥ ४६ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
अष्टमः सर्गः ॥ ८ ॥

अम्भःसंबन्धी प्रावृट्कालिको वेग इव मे अमर्षो वर्धते ॥ ४३ ॥
यावदारोप्यते आरोपयिष्यामि सृष्टो विसृष्टः रिपुर्निरस्तश्च समुच्चयालङ्कारः व्यंग्यातिशयोक्तिश्च ॥ ४४ ॥ ४५ ॥
तत्त्वं तात्त्विकं वैरस्य कारणमित्यन्वयः ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे अष्टमः सर्गः ॥ ८ ॥

---

## नवमः सर्गः ।

वाली नाम मम भ्राता ज्येष्ठः शत्रुनिषूदनः ।
पितुर्बहुमतो नित्यं मम चापि तथा पुरा ॥ १ ॥
पितर्य्युपरते तस्मिन् ज्येष्ठोऽयमिति मन्त्रिभिः ।
कपीनामीश्वरो राज्ये कृतः परमसम्मतः ॥ २ ॥
राज्यं प्रशासतस्तस्य पितृपैतामहं महत् ।
अहं सर्वेषु कालेषु प्रणतः प्रेष्यवत्स्थितः ॥ ३ ॥
मायावी नाम तेजस्वी पूर्वजो दुन्दुभेः सुतः ।
तेन तस्य महद्वैरं वालिनः स्त्रीकृतं पुरा ॥ ४ ॥
स तु सुप्ते जने रात्रौ किष्किन्धाद्वारमागतः ।
नर्दति स्म सुसंरब्धो वालिनं चाह्वयद्रणे ॥ ५ ॥

उपक्रान्तमेवाह, वालीति । पितुः क्षेत्रिणः मात्रैक्याच्च भ्रातृत्वं भीमार्जुनादिवत् ॥ १ ॥

कपीनां राज्ये इत्यन्वयः ॥ २ ॥

पितृपैतामहम् आर्षत्वादुत्तरपदवृद्धिः ॥ ३ ॥

मायावीत्यन्वर्थं नाम । पूर्वजो ज्येष्ठः स्त्रीकृतं स्त्रीनिमित्तम् । अयमितिहासः क्वचित्पुराणे शोधनीयो बहुदर्शिभिः ॥ ४ ॥

प्रसुप्तस्तु मम भ्राता नर्दतो भैरवस्वनम्।
श्रुत्वा न मम्रृषे वाली निष्पपात जवात्तदा ॥ ६ ॥
स तु वै निःसृतः क्रोधात् तं हन्तुमसुरोत्तमम्।
वार्य्यमाणस्ततः स्त्रीभिर्मया च प्रणतात्मना ॥ ७ ॥
स तु निर्धूय ताः सर्व्वा निर्जगाम महाबलः।
ततोऽहमपि सौहार्द्दान्निःसृतो वालिना सह ॥ ८ ॥
स तु मे भ्रातरं दृष्ट्वा माञ्च दूरादवस्थितम्।
असुरो जातसन्त्रासः प्रदुद्राव तदा भृशम् ॥ ९ ॥
तस्मिन् द्रवति संत्रस्ते ह्यावां द्रुततरं गतौ।
प्रकाशोऽपि कृतो मार्गश्चंद्रेणोद्गच्छता तदा ॥ १० ॥
स तृणैरावृतं दुर्गं धरण्या विवरं महत्।
प्रविवेशासुरो वेगादावामासाद्य विष्ठितौ ॥ ११ ॥
तं प्रविष्टं रिपुं दृष्ट्वा बिलं रोषवशं गतः।
मामुवाच ततो वाली वचनं क्षुभितेन्द्रियः ॥ १२ ॥
इह तिष्ठाद्य सुग्रीव! बिलद्वारि समाहितः।
यावदत्र प्रविश्याहं निहन्मि समरे रिपुम् ॥ १३ ॥

सुप्ते जने रात्रौ सुप्तजने भागे अर्धरात्रे स्त्रीनिमित्तम् ॥ ५ ॥ ६ ॥
॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

तृणैरावृतं छन्नं विवरं बिलं आसाद्य प्राप्य विष्ठितौ स्थितौ ॥११॥
बिलं प्रविष्टं दृष्ट्वा ॥ १२ ॥ १३ ॥

मया त्वेतद्वचः श्रुत्वा याचितः स परन्तपः ।
श्रापयित्वा स मां पद्भ्यां प्रविवेश बिलं ततः ॥ १४ ॥
तस्य प्रविष्टस्य बिलं साग्रः सम्वत्सरो गतः ।
स्थितस्य च बिलद्वारि स कालो व्यत्यवर्तत ॥ १५ ॥
अहं तु नष्टं तं ज्ञात्वा स्नेहादागतसंभ्रमः ।
भ्रातरं न प्रपश्यामि पापशङ्कि च मे मनः ॥ १६ ॥
अथ दीर्घस्य कालस्य बिलात्तस्माद्विनिःसृतम् ।
सफेनं रुधिरं दृष्ट्वा ततोऽहं भृशदुःखितः ॥ १७ ॥
नर्दतामसुराणाञ्च ध्वनिर्मे श्रोत्रमागतः ।
न रतस्य च संग्रामे क्रोशतोऽपि स्वनो गुरोः ॥ १८ ॥

एतद्वचो रिपुवधाय बिलप्रवेशवचनं याचितः सहप्रवेशमिति शेषः । स्वपादाभ्यां शापयित्वा स्वपादशपथपूर्वं सहप्रवेशान्निवार्य्य यावन्मदागमनं तावद् बिलद्वारि तिष्ठेति चोक्त्वेत्यर्थः ॥ १४ ॥

साग्रः संवत्सरः किञ्चिदधिकः संवत्सरः द्वारि स्थितस्य च मम स कालः साग्रः संवत्सरो व्यत्यवर्त्तत अतिक्रान्तः तावत्पर्यन्तं मयात्रैव स्थितमित्याशयः ॥ १५ ॥

ततो यदाहं तं भ्रातरं न पश्यामि तदाहं भ्रातरं नष्टं दर्शना-विषयं ज्ञातं स्नेहादागतसंभ्रम आगतक्षोभो जातः । पापशङ्कि मरणाशङ्कि मे मनोजातञ्च ॥ १६ ॥ १७ ॥

संग्रामे रतस्य निरतस्य क्रोशतोऽपि गुरोः स्वनो न श्रोत्रमागत इत्यनुकर्षः ॥ १८ ॥

अहं त्ववगतो बुध्वा चिह्नैस्तैर्भ्रातरं हतम् ।
पिधाय च बिलद्वारं शिलया गिरिमात्रया ॥ २९ ॥
शोकार्तश्चोदकं कृत्वा किष्किन्धामागतः सखे ! ।
गूहमानस्य मे तत्त्वं यत्नतो मन्त्रिभिः श्रुतम् ॥ ३० ॥
ततोऽहं तैः समागम्य समेतैरभिषेचितः ।
राज्यं प्रशासतस्तस्य न्यायतो मम राघव ! ॥ ३१ ॥
आजगाम रिपुं हत्वा दानवं स तु वानरः ।
अभिषिक्तं तु मां दृष्ट्वा क्रोधात् संरक्तलोचनः ॥ ३२ ॥
मदीयान् मन्त्रिणो बध्वा परुषं वाक्यमब्रवीत् ।
निग्रहे च समर्थस्य तं पापं प्रति राघव ! ॥ ३३ ॥
न प्रावर्तत मे बुद्धिर्भ्रातृगौरवयन्त्रिता ।

चिह्नैर्बिलद्वारि रुधिरनिःसरणासुरीयसंग्रामक्रोशनादिभिर्भ्रातरं हतमवगतः ज्ञातवान् पिधाय राक्षसनिर्गमशङ्कया ॥ २९ ॥

यत्नतो गूहमानस्यापि मे तत्त्वं वालिवृत्तान्तविषयं मन्त्रिभिर्वालिमन्त्रिभिः श्रुतम् ॥ ३० ॥

समेतैर्मिलितैः तस्य राज्यमिति बुध्यैव न्यायतः प्रशासतो मम समीपमाजगाम स वानर इत्यन्वयः ॥ ३१ ॥ ३२ ॥

मदीयान् मदभिषेककर्तॄन् । निग्रहे समर्थस्यापि मे बुद्धिर्भ्रातृगौरवेण यन्त्रिता संकुचिता सती तं पापं प्रति निग्रहाय न प्रावर्तत ॥ ३३ ॥

हत्वा शत्रुं स मे भ्राता प्रविवेश पुरं तदा ॥ २४ ॥
मानयंस्तं महात्मानं यथावच्चाभिवादयम् ।
उक्ताश्च नाशिषस्तेन प्रहृष्टेनान्तरात्मना ॥ २५ ॥
नत्वा पादावहन्तस्य मुकुटेनास्पृशं प्रभो ! ।
अपि वाली मम क्रोधान्न प्रसादं चकार सः ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
नवमः सर्गः ॥ ९ ॥

उक्तानुवादपूर्वमवशिष्टव्यापारकथनं हत्वेत्यादि ॥ २४ ॥ २५ ॥
अपि तथापीत्यर्थः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे नवमः सर्गः ॥ ९ ॥

---

## दशमः सर्गः ।

ततः क्रोधसमाविष्टं संरब्धं तमुपागतम् ।
अहं प्रसादयाञ्चक्रे भ्रातरं हितकाम्यया ॥ १ ॥
दिष्ट्यासि कुशली प्राप्तो निहतश्च त्वया रिपुः ।
अनाथस्य हि मे नाथस्त्वमेकोऽनाथनन्दन ! ॥ २
इदं बहुशलाकं ते पूर्णचन्द्रमिवोदितम् ।
छत्रं सवालव्यजनं प्रतीच्छस्व मया धृतम् ॥ ३ ॥
आर्तस्तस्य बिलद्वारि स्थितः संवत्सरं नृप ! ।
दृष्ट्वा च शोणितं द्वारि बिलाच्चापि समुत्थितम् ॥ ४ ॥
शोकसंविग्नहृदयो भृशं व्याकुलितेन्द्रियः ।
अपिधाय बिलद्वारं शैलशृङ्गेण तत्तदा ॥ ५ ॥
तस्माद् देशादपाक्रम्य किष्किन्धां प्राविशं पुनः ।
विषादात्त्विह मां दृष्ट्वा पौरैर्मन्त्रिभिरेव च ॥ ६ ॥
अभिषिक्तो न कामेन तन्मे क्षन्तुं त्वमर्हसि ।
त्वमेव राजा मानार्हः सदा चाहं यथा पुरा ॥ ७ ॥

संरब्धं क्रोधावेशादेव क्षुभितचित्तं हितकाम्यया आत्महितेच्छया
॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥
विषादात्प्राविशमित्यन्वयः ॥ ६ ॥

राजभावे नियोगोऽयं मम त्वद्विरहात् कृतः।
सामात्यपौरनगरं स्थितं निहतकण्टकम् ॥ ८ ॥
न्यासभूतमिदं राज्यं तव निर्य्यातयाम्यहम्।
मा च रोषं कृथाः सौम्य! मम शत्रुनिषूदन! ॥ ९ ॥
याचे त्वां शिरसा राजन्! मया बद्धोऽयमञ्जलिः।
बलादस्मिन् समागम्य मन्त्रिभिः पुरवासिभिः ॥ १० ॥
राजभावे नियुक्तोऽहं शून्यदेशजिगीषया।
स्निग्धमेवं ब्रुवाणं स विनिर्भर्त्स्य च वानरः ॥ ११ ॥
धिक्त्वामिति च मामुक्त्वा बहुतत्तदुवाच ह।
प्रकृतीश्च समानीय मन्त्रिणश्चैव सम्मतान् ॥ १२ ॥
मामाह सुहृदां मध्ये वाक्यं परमगर्हितम्।

अभिषिक्तो बलात् न कामेन न मदीयराज्येच्छया तत्तस्मान्मे दैवागतापराधं क्षन्तुमर्हसि यथा पुरा तव सेवकस्तथैव सदा इदानीमपीत्यर्थः ॥ ७ ॥

राजभावे। राज्येऽयं मम नियोगो मन्त्रिभिस्त्वद्विरहात् कृतोऽमात्यपौरसहितं नगरं निहतकण्टकं अराजत्वप्रयुक्तदोषरहितं कर्तुमिति शेषः। तथेदं त्वदीयराज्यं मयि न्यासभूतं स्थितम्। अहं तव निर्यातयामि मा रोषं कृथा इत्यन्वयः ॥ ८ ॥ ९ ॥ १० ॥

शून्यदेशस्य राजहीनदेशस्य या परेषां जिगीषा तया तन्निवृत्तिहेतुना। मशकार्थो धूम इति वदयं प्रयोगः ॥ ११ ॥

तत्तदुवाच अवाच्यवचनजातमित्यर्थः। प्रकृतीः स्वीयप्रजाः ॥१२॥

विदितं वो मया रात्रौ मायावी स महासुरः ॥ १३ ॥
मां समाह्वयत क्रुद्धो युद्धाकाङ्क्षी तदा पुरा।
तस्य तद्भाषितं श्रुत्वा निःसृतोऽहं नृपालयात् ॥ १४ ॥
अनुयातश्च मां तूर्णमयं भ्राता सुदारुणः।
स तु दृष्ट्वैव मां रात्रौ सद्वितीयं महाबलः ॥ १५ ॥
प्राद्रवद्भयसंत्रस्तो वीक्ष्यावां समुपागतौ।
अभिद्रुतस्तु वेगेन विवेश स महाबिलम् ॥ १६ ॥
तं प्रविष्टं विदित्वा तु सुघोरं सुमहद्बिलम्।
अयमुक्तोऽथ मे भ्राता मया तु क्रूरदर्शनः ॥ १७ ॥
अहत्वा नास्ति मे शक्तिः प्रतिगन्तुमितः पुरीम्।
बिलद्वारि प्रतीक्ष त्वं यावदेनं निहन्म्यहम् ॥ १८ ॥
स्थितोऽयमिति मत्वाहं प्रविष्टस्तु दुरासदम्।
तं मे मार्गयतस्तत्र गतः संवत्सरस्तदा ॥ १९ ॥
स तु दृष्टो मया शत्रुरनिर्वेदाद्भयावहः।

मां प्रति परमं गर्हितं वाक्यं सुहृदां मध्ये आह, मम विगर्हणाहेतुञ्च सभासदानभ्येत्याह, विदितं युष्माकं विदितं व इति। प्रत्यक्षसिद्धम् ॥ १३ ॥ १४ ॥

सद्वितीयं भ्राता ससहायम् ॥ १५ ॥ १६ ॥ १७ ॥

शक्तिरिच्छाशक्तिः प्रतीक्ष प्रतीक्षस्व ॥ १८ ॥

स्थितोऽयं बिलद्वारीति शेषः ॥ १९ ॥

निहतश्च मया सद्यः स सर्वैः सह बन्धुभिः ॥ २० ॥
तस्यैव च प्रवृत्तेन रुधिरौघेण तद्बिलम्।
पूर्णमासीद्दुराक्रामं स्तनतस्तस्य भूतले ॥ २१ ॥
सूदयित्वा तु तं शत्रुं विक्रान्तं तमहं सुखम्।
निष्क्रामं नेह पश्यामि बिलस्य पिहितं मुखम् ॥ २२ ॥
विक्रोशमानस्य तु मे सुग्रीवेति पुनः पुनः।
यतः प्रतिवचो नास्ति ततोऽहं भृशदुःखितः ॥ २३ ॥
पादप्रहारैस्तु मया बहुभिः परिपातितम्।
ततोऽहं तन निष्क्रम्य यथा पुरमुपागतः ॥ २४ ॥
तत्रानेनास्मि संरुद्धो राज्यं मृगयतात्मनः।
सुग्रीवेण नृशंसेन विस्मृत्य भ्रातृसौहृदम् ॥ २५ ॥
एवमुक्त्वा तु मां तत्र वस्त्रेणैकेन वानरः

अनिर्वेदात् संवत्सरान्वेषणेऽपि दर्शनाभावाद्भूयान्वहः स तु कथञ्चिद्दृष्टो निहतश्च समुच्चयालङ्कारः ॥ २० ॥

भुवस्तलेऽधस्तले पाताले स्तनतः शब्दं कुर्वतस्तस्यास्यात्प्रवृत्तेन रुधिरौघेण पूर्णं तद् बिलं दुराक्रममासीत् ॥ २१ ॥

विक्रान्तं शूरं तं प्रसिद्धं मायाविनं सुखं सूदयित्वा तु इहागन्तुं निष्क्रामं निर्गममार्गं न पश्यामि। यतो बिलस्य मुखं पिहितम् ॥२२॥

॥ २३ ॥

तेन यथा बिलद्वारमार्गेण ॥ २४ ॥

तदा निर्वासयामास वाली विगतसाध्वसः ॥ २६ ॥
तेनाहमपविद्धश्च हृतदारश्च राघव ! ।
तद्भयाच्च महीं सर्वां क्रान्तवान् सवनार्णवाम् ॥ २७ ॥
ऋष्यमूकं गिरिवरं भार्य्याहरणदुःखितः ।
प्रविष्टोऽस्मि दुराधर्षं वालिनः कारणान्तरे ॥ २८ ॥
एतत्ते सर्वमाख्यातं वैरानुकथनं महत् ।
अनागसा मया प्राप्तं व्यसनं पश्य राघव ! ॥ २९ ॥
वालिनश्च भयार्तस्य सर्वलोकभयापह ! ।
कर्तुमर्हसि मे वीर ! प्रसादं तस्य निग्रहात् ॥ ३० ॥
एवमुक्तः स तेजस्वी धर्मज्ञो धर्मसंहितम् ।
वचनं वक्तुमारेभे सुग्रीवं प्रहसन्निव ॥ ३१ ॥

आत्मनो राज्यं स्वगयता मार्गयतानेन तत्र बिलद्वारे संरुद्धः निरुद्धगतिकः कृतः ॥ २५ ॥

एकेन वस्त्रेणेति । अन्यत्सर्वं मम हृत्वेत्यर्थः ॥ २६ ॥

अपविद्धो निरस्तः ॥ २७ ॥

ऋष्यमूकं प्रविष्टोऽस्मि । अन्यत्र निर्भयस्थितिमलभमानः । अत्र निर्भयस्थितिः कथं तत्राह, दुराधर्षमिति । मतङ्गशापलक्षणे कारणविशेषे सति वालिना दुराधर्षं दुष्प्रवेशम् ॥ २८ ॥

वैरानुकथनं वैरकारणम् ॥ २९ ॥

वालिन इति पञ्चमी ॥ ३० ॥ ३१ ॥

अमोघाः सूर्य्यसंकाशा निशिता मे शरा इमे।
तस्मिन् वालिनि दुर्वृत्ते पतिष्यन्ति रुषान्विताः॥ ३२॥
यावत्तं न हि पश्येयं तव भार्य्यापहारिणम्।
तावत्स जीवेत् पापात्मा वाली चारित्रदूषकः॥ ३३॥
आत्मानुमानात्पश्यामि मग्नस्त्वं शोकसागरे।
त्वामहं तारयिष्यामि बाढ़ं प्राप्स्यसि पुष्कलम्॥ ३४॥
तस्य तद्वचनं श्रुत्वा हर्षपौरुषवर्धनम्।
सुग्रीवः परमप्रीतः सुमहद्वाक्यमब्रवीत्॥ ३५॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
दशमः सर्गः॥ १०॥

रुषान्विताः रुष्टेन मया पातिताः॥ ३२॥

चारित्रदूषकः निषिद्धानिषिद्धज्ञानवत्त्वे सति जीवतो भ्रातुर्भार्य्यापहारात्॥ ३३॥

आत्मानुमानात् अयं शोकाब्धिमग्नो रिपुहृतदारत्वात् मद्वदित्यनुमानं। बाढं प्राप्स्यसि भार्य्यां पुष्कलं राज्यञ्च॥ ३४॥ ३५॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे दशमः सर्गः॥ १०॥

## एकादशः सर्गः ।

रामस्य वचनं श्रुत्वा हर्षपौरुषवर्धनम् ।
सुग्रीवः पूजयाञ्चक्रे राघवं प्रशशंस च ॥ १ ॥
असंशयं प्रज्वलितैस्तीक्ष्णैर्मर्मातिगैः शरैः ।
त्वं दहेः कुपितो लोकान् युगान्त इव भास्करः ॥ २ ॥
वालिनः पौरुषं यत्तद् यच्च वीर्य्यं धृतिश्च या ।
तन्ममैकमनाः श्रुत्वा विधत्स्व यदनन्तरम् ॥ ३ ॥
समुद्रात् पश्चिमात् पूर्वं दक्षिणादपि चोत्तरम् ।
क्रामत्यनुदिते सूर्य्ये वाली व्यपगतक्लमः ॥ ४ ॥
अग्राण्यारुह्य शैलानां शिखराणि महान्त्यपि ।
ऊर्ध्वमुत्पात्य तरसा प्रतिगृह्णाति वीर्य्यवान् ॥ ५ ॥

इदानीं वालिनो बलमाह, रामस्येति । वचनं वालिबधविषयम् ॥ १ ॥

राघवं प्रशशंसेत्युक्तां तां प्रशंसामाह, असंशयमिति ॥ २ ॥

पौरुषं बलवैभवम् । वीर्यं परसंहारशक्तिः । धृतिः रणे धैर्यम् ॥ ३ ॥

अनुदिते सूर्येऽक्रामति ब्राह्मे मुहूर्त्ते उत्थायेति शेषः ॥ ४ ॥

बहवः सारवन्तश्च वनेषु विविधा द्रुमाः ।
वालिना तरसा भग्ना बलं प्रथयतात्मनः ॥ ६ ॥
महिषो दुन्दुभिर्नाम कैलासशिखरप्रभः ।
बलं नागसहस्रस्य धारयामास वीर्य्यवान् ॥ ७ ॥
स वीर्य्योत्सेकदुष्टात्मा वरदानेन मोहितः ।
जगाम स महाकायः समुद्रं सरितां पतिम् ॥ ८ ॥
ऊर्मिमन्तमतिक्रम्य सागरं रत्नसञ्चयम् ।
मम युद्धं प्रयच्छेति तमुवाच महार्णवम् ॥ ९ ॥
ततः समुद्रो धर्मात्मा समुत्थाय महाबलः ।
अब्रवीद्वचनं राजन्नसुरं कालचोदितम् ॥ १० ॥
समर्थो नास्मि ते दातुं युद्धं युद्धविशारद ! ।
श्रूयतां त्वभिधास्यामि यस्ते युद्धं प्रदास्यति ॥ ११ ॥
शैलराजो महारण्ये तपस्विशरणं परम् ।
शङ्करश्वशुरो नाम्ना हिमवानिति विश्रुतः ॥ १२ ॥
महाप्रस्रवणोपेतो बहुकन्दरनिर्झरः ।
स समर्थस्तव प्रीतिमतुलां कर्तुमर्हति ॥ १३ ॥

उत्क्षिप्य उत्पात्य कन्दुकवदिति भावः ॥ ५ ॥ ६ ॥

महिषस्तद्रूपधरः ॥ ७, ८ ॥

ऊर्मिमन्तं ऊर्मिमत्त्वाद्याकारवन्तं समुद्रमतिक्रम्याविगाह्य तं तद-धिष्ठातृदेवतामुवाच ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

तं भीतमिति विज्ञाय समुद्रमसुरोत्तमः ।
हिमवद्वनमागच्छ शरश्चापादिव च्युतः ॥ १४ ॥
ततस्तस्य गिरेः श्वेता गजेन्द्रप्रतिमाः शिलाः ।
चिक्षेप बहुधा भूमौ दुन्दुभिर्विननाद च ॥ १५ ॥
ततः श्वेताम्बुदाकारः सौम्यः प्रीतिकराकृतिः ।
हिमवानब्रवीद्वाक्यं स्व एव शिखरे स्थितः ॥ १६ ॥
क्लेष्टुमर्हसि मां न त्वं दुन्दुभे ! धर्मवत्सल ! ।
रणकर्मस्वकुशलस्तपस्विशरणो ह्यहम् ॥ १७ ॥
तस्य तद्वचनं श्रुत्वा गिरिराजस्य धीमतः ।
उवाच दुन्दुभिर्वाक्यं क्रोधात् संरक्तलोचनः ॥ १८ ॥
यदि युद्धे समर्थस्त्वं मद्भयाद्वा निरुद्यमः ।
तमाचक्ष्व प्रदद्यान्मे यो हि युद्धं युयुत्सतः ॥ १९ ॥
हिमवानब्रवीद्वाक्यं श्रुत्वा वाक्यविशारदः ।
अनुक्तपूर्वं धर्मात्मा क्रोधात्तमसुरोत्तमम् ॥ २० ॥
वाली नाम महाप्राज्ञ ! शक्रपुत्रः प्रतापवान् ।
अध्यास्ते वानरः श्रीमान् किष्किन्धामतुलप्रभाम् ॥ २१ ॥

गजेन्द्र ऐरावतः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥
युद्धे असमर्थ इति च्छेदः ॥ १९ ॥
अनुक्तपूर्वम् इतः पूर्वं न उक्तो युद्धदाताऽस्य तमसुरम् ॥२०॥२१॥

स समर्थो महाप्राज्ञस्तव युद्धविशारदः ।
द्वन्द्वयुद्धं स दातुं ते नमुचेरिव वासवः ॥ २२ ॥
तं शीघ्रमभिगच्छ त्वं यदि युद्धमिहेच्छसि ।
स हि दुर्मर्षणो नित्यं शूरः समरकर्मणि ॥ २३ ॥
श्रुत्वा हिमवतो वाक्यं कोपाविष्टः स दुन्दुभिः ।
जगाम तां पुरीं तस्य किष्किन्धां वालिनस्तदा ॥ २४ ॥
धारयन्माहिषं वेषं तीक्ष्णशृङ्गो भयावहः ।
प्रावृषीव महामेघस्तोयपूर्णो नभस्तले ॥ २५
ततस्तु द्वारमागम्य किष्किन्धाया महाबलः ।
ननर्द कम्पयन् भूमिं दुन्दुभिर्दुन्दुभिर्यथा ॥ २६ ॥
समीपजान् द्रुमान् भञ्जन् वसुधां दारयन् खुरैः ।
विषाणेनोल्लिखन् दर्पात् तद् द्वारं द्विरदो यथा ॥ २७ ॥
अन्तःपुरगतो वाली श्रुत्वा शब्दममर्षणः ।
निष्पपात सह स्त्रीभिस्ताराभिरिव चन्द्रमाः ॥ २८ ॥
मितं व्यक्ताक्षरपदं तमुवाच स दुन्दुभिम् ।
हरीणामीश्वरो वाली सर्वेषां वनचारिणाम् ॥ २९ ॥

एकः सशब्दः प्रसिद्धपराक्रमार्थकः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ॥ २३ ॥ २७ ॥ २८ ॥

हरीणामीश्वरोऽहमस्मीति शेषः ॥ २९ ॥

किमर्थं नगरद्वारमिदं रुद्ध्वा विनर्दसे।
दुन्दुभे! विदितो मेऽसि रक्ष प्राणान्महाबल! ॥ ३० ॥
तस्य तद्वचनं श्रुत्वा वानरेन्द्रस्य धीमतः।
उवाच दुन्दुभिर्वाक्यं क्रोधात् संरक्तलोचनः ॥ ३१ ॥
न त्वं स्त्रीसन्निधौ वीर! वचनं वक्तुमर्हसि।
मम युद्धं प्रयच्छाद्य ततो ज्ञास्यामि ते बलम् ॥ ३२ ॥
अथवा धारयिष्यामि क्रोधमद्य निशामिमाम्।
गृह्यतामुदयः स्वैरं कामभोगेषु वानर! ॥ ३३ ॥
दीयतां सम्प्रदानञ्च परिष्वज्य च वानरान्।
सर्वशाखामृगेन्द्रस्त्वं संसाधय सुहृज्जनम् ॥ ३४ ॥
सुदृष्टां कुरु किष्किन्धां कुरुष्वात्मसमं पुरे।

नगरद्वारं मामकमिति शेषः। मे विदितोऽसि मया ज्ञातबलोऽसि अतः प्राणान् रक्ष ॥ ३० ॥ ३१ ॥ ३२ ॥

स्त्रीसमूहगतो युद्धाय नाक्रान्तव्य इति मत्वा पक्षान्तरमाह, अथवेति। स्वैरं कामभोगेषु उदयस्तावत्पर्य्यन्तं वालिना मत्प्रोक्तोऽवधिर्गृह्यताम् उदयपर्य्यन्तं त्वां प्रतीक्ष इत्यर्थः ॥ ३३ ॥

वानरान् परिष्वज्य तेभ्यः सम्प्रदानं प्रीतिदानं दीयतां संसाधय आमन्त्रयस्व। पाठान्तरेऽपि उक्तार्थ एव ॥ ३४ ॥

सुदृष्टां पुनर्दर्शनासम्भवात्। आत्मसमं पुत्रादिकं राज्यरक्षार्थे राजानं कुरुष्व क्रीडस्व। आ उदयम् ॥ ३५ ॥

क्रीड़स्व च समं स्त्रीभिरहं ते दर्पशासनः ॥ ३५ ॥
यो हि मत्तं प्रमत्तं वा भग्नं वा रहितं कृशम् ।
हन्यात् स भ्रूणहा लोके त्वद्विधं मदमोहितम् ॥ ३६ ॥
स प्रहस्याब्रवीन्मन्दं क्रोधात्तमसुरेश्वरम् ।
विसृज्य ताः स्त्रियः सर्वास्ताराप्रभृतिकास्तदा ॥ ३७ ॥
मत्तोऽयमिति मामंस्था यद्यभीतोऽसि संयुगे ।
मदोऽयं संप्रहारेऽस्मिन् वीरपानं समर्थ्यताम् ॥ ३८ ॥
तमेवमुक्त्वा संक्रुद्धो मालामुत्क्षिप्य काञ्चनीम् ।
पित्रा दत्तां महेन्द्रेण युद्धाय व्यवतिष्ठत ॥ ३९ ॥
विषाणयोर्गृहीत्वा तं दुन्दुभिं गिरिसन्निभम् ।
अविध्यत तदा वाली विनदन् कपिकुञ्जरः ॥ ४० ॥
वाली व्यापादयाञ्चक्रे ननर्द च महास्वनम् ।
श्रोत्राभ्यामथ रक्तं तु तस्य सुस्राव पात्यतः ॥ ४१ ॥

मत्तं पानादिना प्रमत्तमनवहितम् । रहितमायुधादिभिः त्वद्विधं त्वामिव स्त्रीमध्यगं मदमोहितं स्त्रीभोगार्थं कृतमधुपानादिति कर्त्तव्यतामूढम् ॥ ३६ ॥ ३७ ॥

मदोऽयं स्त्रीगोष्ठीजनितोऽपि वीरपानं वीरै रणे मन उत्साहार्थं क्रियमाणः पानविशेषः समर्थ्यतां ज्ञायताम् ॥ ३८ ॥

उत्क्षिप्य कण्ठे प्रतिमुच्य एषा हि माला संग्रामजयदा ॥ ३९ ॥

अविध्यत क्षिप्तवान् ॥ ४० ॥

तयोस्तु क्रोधसंरम्भात्परस्परजयैषिणोः ।
युद्धं समभवद्घोरं दुन्दुभेर्वालिनस्तथा ॥ ४२ ॥
अयुध्यत तदा वाली शक्रतुल्यपराक्रमः ।
मुष्टिभिर्जानुभिः पद्भिः शिलाभिः पादपैस्तथा ॥ ४३ ॥
परस्परं घ्नतोस्तत्र वानरासुरयोस्तदा ।
आसीद्धीनोऽसुरो युद्धे शक्रसूनुर्व्यवर्धत ॥ ४४ ॥
तं तु दुन्दुभिमुद्यम्य धरण्यामभ्यपातयत् ।
युद्धे प्राणहरे तस्मिन् निष्पिष्टो दुन्दुभि तदा ॥ ४५ ॥
स्रोतोभ्यो बहुरक्तं तु तस्य सुस्राव पात्यतः ।
पपात च महाबाहुः क्षितौ पञ्चत्वमागतः ॥ ४६ ॥
तं तोलयित्वा बाहुभ्यां गतसत्त्वमचेतनम् ।
चिक्षेप वेगवान् वाली वेगेनैकेन योजनम् ॥ ४७ ॥
तस्य वेगप्रविद्धस्य वक्त्रात् क्षतजबिन्दवः ।
प्रपेतुर्मारुतोत्क्षिप्ता मतङ्गस्याश्रमं प्रति ॥ ४८ ॥

व्यापादयाञ्चक्रे पातितवान् । पात्यतः पात्यमानस्य ॥ ४१ ॥
अस्यैव प्रपञ्चस्तयोरित्यादि ॥ ४२ ॥ ४३ ॥
हीनः हीनबलः ॥ ४४ ॥
उद्यम्य हस्ताभ्यामूर्ध्वीकृत्य । उत्पाट्येति पाठे उत्पाटितविषाणं कृत्वेत्यर्थः ॥ ४५ ॥
स्रोतोभ्यो नासादिद्वारेभ्यः ॥ ४६ ॥

तान् दृष्ट्वा पतितांस्तत्र मुनिः शोणितविप्रुषः ।
क्रुद्धस्तस्य महाभाग ! चिन्तयामास कोन्वयम् ॥ ४९ ॥
येनाहं सहसा स्पृष्टः शोणितेन दुरात्मना ।
कोऽयं दुरात्मा दुर्बुद्धिरकृतात्मा च बालिशः ॥ ५० ॥
इत्युक्त्वा स विनिष्क्रम्य ददृशे मुनिसत्तमः ।
महिषं पर्वताकारं गतासुं पतितं भुवि ॥ ५१ ॥
स तु विज्ञाय तपसा वानरेण कृतं हि तत् ।
उत्ससर्ज महाशापं क्षेप्तारं वानरं प्रति ॥ ५२ ॥
इह तेनाप्रवेष्टव्यं प्रविष्टस्य वधोभवेत् ।
वनं मत्संश्रयं येन दूषितं रुधिरस्रवैः ॥ ५३ ॥
क्षिपता पादपाश्चेमे संभग्नाश्चासुरीं तनुम् ।
समन्तादाश्रमं पूर्णं योजनं मामकं यदि ॥ ५४ ॥
आक्रमिष्यति दुर्बुद्धिर्व्यक्तं स न भविष्यति ॥

तोलयित्वा हस्तग्रहणेन भारं ज्ञात्वा योजनं तावद्दूरम् ॥४७॥४८॥

तस्य विप्रुषः कर्त्तारं कोन्वयमिति चिन्तयामास। चिन्ताया एवाभिनयो येनेत्यादि ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

अप्रवेष्टव्यं न प्रवेष्टव्यमित्यर्थः ॥ ५३ ॥

आसुरीं तनुं क्षिपता येनेमे पादपाः संभग्ना इत्यन्वयः। स यदि मामकम् आश्रमं तदागमनमुद्दिश्य समन्तात्परिसरवर्त्ति पूर्णं योजनं तत्पर्यन्तम् ॥ ५४ ॥

ये चास्य सचिवाः केचित् संश्रिता मामकं वनम् ॥ ५५ ॥
न च तैरिह वस्तव्यं श्रुत्वा यान्तु यथासुखम्।
तेऽपि वा यदि तिष्ठन्ति शपिष्ये तानपि ध्रुवम् ॥ ५६ ॥
वनेऽस्मिन् मामके नित्यं पुत्रवत्परिरक्षिते।
पत्रांकुरविनाशाय फलमूलाभवाय च ॥ ५७ ॥
दिवसश्चाद्य मर्य्यादा यं द्रष्टा श्वोऽस्मि वानरम्।
बहुवर्षसहस्राणि स वै शैलो भविष्यति ॥ ॥ ५८ ॥
ततस्ते वानराः श्रुत्वा गिरं मुनिसमीरिताम्।
निश्चक्रमुर्वनात्तस्मात्तान् दृष्ट्वा वालिरब्रवीत् ॥ ५९ ॥
किं भवन्तः समस्ताश्च मतङ्गवनवासिनः।
मत्समीपमनुप्राप्ता अपि स्वस्ति वनौकसाम् ॥ ६० ॥
ततस्ते कारणं सर्वं तथा शापञ्च वालिनः।

आक्रमिष्यति पद्भ्यां स्प्रक्ष्यति तर्हि न भविष्यति न जीविष्यतीत्यर्थः ॥ ५५ ॥

तैर्वालिसचिवैः श्रुत्वा मदुक्तं शापम् ॥ ५६ ॥

शापमेव हेतूपन्यासपूर्वमाह, वने इति। फलाद्यभावाय तन्नाशाय जायन्ते यतोऽतः शपिष्यामि ॥ ५७ ॥

अद्य दिवसः अयं दिवसः मर्य्यादा दास्यमानशापस्य। तदेवाह, यमिति। अस्मि अहं यं वानरं वालिसंबन्धिनं श्वोद्रष्टा स शैलो भविष्यति ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥

शशंसुर्वानराः सर्वे वालिने हेममालिने ॥ ६१ ॥
एतच्छ्रुत्वा तदा वाली वचनं वानरेरितम् ।
स महर्षिं समासाद्य याचते स्म कृताञ्जलिः ॥ ६२ ॥
महर्षिस्तमनादृत्य प्रविवेशाश्रमं प्रति ।
शापधारणभीतस्तु वाली विह्वलतां गतः ॥ ६३ ॥
ततः शापभयाद्भीतो ऋष्यमूकं महागिरिम् ।
प्रवेष्टुं नेच्छति हरिर्द्रष्टुं वापि नरेश्वर ! ॥ ६४ ॥
तस्याप्रवेशं ज्ञात्वाहं इदं राम ! महावनम् ।
विचरामि सहामात्यो विषादेन विवर्जितः ॥ ६५ ॥
एषोऽस्थिनिचयस्तस्य दुन्दुभेः संप्रकाशते ।
वीर्य्योत्सेकान्निरस्तस्य गिरिकूटनिभो महान् ॥ ६६ ॥
इमे च विपुलाः सालाः सप्तशाखावलम्बिनः ।
यत्रैकं घटते वाली निष्पत्रयितुमोजसा ॥ ६७ ॥

याचते स्म अयाचत । शापमोक्षमिति शेषः ॥ ६२ ॥

शापधारणेन शापविषयदोषज्ञानेन ॥ ६३ ॥ ६४ ॥ ६५ ॥

अस्थिनिचयः शुष्ककायः ॥ ६६ ॥

इमे विपुलाः विशालमूलस्कन्धाः शाखावलंबिनः प्रशस्तबहुशाखावन्तः । यत्र येषु एकं एककालमेव वाली ओजसा ओजे युक्तकम्पनेन सर्वान्निष्पत्रयितुं पत्रहीनान् कर्तुं घटते चेष्टते ते इमे सप्त साला इत्यर्थः । अनेन वायोरप्यधिकं बलं सूचितम् । न हि वायोर्युगपत्कम्पनेन सकलाङ्गपत्रपातनं क्वचिद् दृष्टचरम् । कश्चित्तु निष्पत्र-

एतदस्यासमं वीर्य्यं मया राम! प्रकाशितम्।
कथं तं वालिनं हन्तुं समरे शक्ष्यसे नृप!॥ ६८॥
तथाब्रुवाणं सुग्रीवं प्रहसन् लक्ष्मणोऽब्रवीत्।
कस्मिन् कर्मणि निर्वृत्ते श्रद्दध्या वालिनो वधम्॥ ६९॥
तमुवाचाथ सुग्रीवः सप्तसालानिमान् पुरा।
एवमेकैकशो वाली विव्याधाथ स चासकृत्॥ ७०॥
रामो निर्द्दारयेदेषां बाणेनैकेन च द्रुमम्।
वालिनं निहतं मन्ये दृष्ट्वा रामस्य विक्रमम्॥ ७१॥
हतस्य महिषस्यास्थि पादेनैकेन लक्ष्मण!।
उद्यम्य प्रक्षिपेच्चापि तरसा द्वे धनुःशते॥ ७२॥

यितुं निष्पत्रीकर्तुमित्यर्थः। एकं सालं शरेण भित्त्वा शरो निष्पत्रं यथा गच्छति तथाकर्तुमतिव्यथयितुमिति यावत्। सपत्रनिष्पत्रादति-व्यथन इति शास्त्रात्। अप्राकृतकपित्वाच्च बाणव्यापारस्यापि सम्भव इति व्याचख्यौ॥ ६७॥

उक्तं वालिवीर्य्यमुपसंहरति, एतदिति॥ ६८॥

प्रहसन् भगवद्वीर्य्याज्ञानादेवं वाद इति हासः॥ ६९॥

एवमुक्तप्रकारेण, एकैकशः एकैकस्मिन् काले सप्तापि स वाली असकृद्विव्याध पीडितवान्। आर्षं परस्मैपदं सकृत्कृतः काकताली-यत्वव्युदासायासकृदिति। विव्याधेति पाठान्तरं तुल्योऽर्थः॥ ७०॥

एकेन बाणेनैषामेकं द्रुममपि चेन्निर्दारयेत्। तदापि वालिनं हतं मन्ये तद्वधयोग्यतासम्भावनयेति भावः। पादेनास्थ्नो हस्तेन स्पर्शा-

एवमुक्का तु सुग्रीवो रामं रक्तान्तलोचनः।
ध्यात्वा मुहूर्त्तं काकुत्स्थं पुनरेव वचोऽब्रवीत्॥ ७३॥
शूरश्च शूरमानी च प्रख्यातबलपौरुषः।
बलवान् वानरो वाली संयुगेष्वपराजितः॥ ७४॥
दृश्यन्ते चास्य कर्माणि दुष्कराणि सुरैरपि।
यानि सञ्चिन्त्य भीतोऽहं ऋष्यमूकमुपाश्रितः॥ ७५॥
तमजय्यमधृष्यञ्च वानरेन्द्रममर्षणम्।
विचिन्तयन्न मुञ्चामि ऋष्यमूकममुं त्वहम्॥ ७६॥
उद्विग्नः शङ्कितश्चाहं विचरामि महावने।
अनुरक्तैः सहामात्यैर्हनुमत्प्रमुखैर्वरैः॥ ७७॥
उपालब्धञ्च मे श्लाघ्यं सन्मित्रं मित्रवत्सल!।
त्वामहं पुरुषव्याघ्र! हिमवन्तमिवाश्रितः॥ ७८॥
किं तु तस्य बलज्ञोऽहं दुर्भ्रातुर्बलशालिनः।

योग्यत्वात् तरसा बलेन प्रच्छिन्द्यादपि चेत्तदापि रामस्य विक्रमं दृष्ट्वा वालिनं हतं मन्य इति संबन्धः॥ ७१॥ ७२॥

ध्यात्वा रामवीर्यंतस्याप्रत्ययत्वाद्रामेण वालिवधः शक्यो न वेति सञ्चिन्त्य पुनर्मित्रभावेनाह, शूरश्चेति॥ ७३॥ ७४॥

यानि वालिकर्माणि सञ्चिन्त्य भीतस्तेन सह रणाय भीतः॥७५॥

उक्तमेव भीत्या पुनराह, तमजय्यमिति॥ ७६॥ ७७॥

त्वां मित्रभूतम्॥ ७८॥

अप्रत्ययस्तु म वीर्य्यं समरे तव राघव! ॥ ७९ ॥
न खल्वहं त्वां तुलये नावमन्ये न भीषये।
कर्मभिस्तस्य भीमैश्च कातर्य्यं जनितं मम ॥ ८० ॥
कामं राघव! ते वाणी प्रमाणं धैर्य्यमाकृतिः।
सूचयन्ति परं तेजो भस्मच्छन्नमिवानलम् ॥ ८१ ॥
तस्य तद्वचनं श्रुत्वा सुग्रीवस्य महात्मनः।
स्मितपूर्वमतो रामः प्रत्युवाच हरिं प्रति ॥ ८२ ॥
यदि न प्रत्ययोऽस्मासु विक्रमे तव वानर!।
प्रत्ययं समरे श्लाघ्यमहमुत्पादयामि ते ॥ ८३ ॥
एवमुक्त्वा तु सुग्रीवं सान्त्वयन् लक्ष्मणाग्रजः।
राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन लीलया ॥ ८४ ॥
तोलयित्वा महाबाहुश्चिक्षेप दशयोजनम्।

यदि मामाश्रितस्तर्हि त्यज वालिभयं तत्राह, किं त्विति। तद्बलं ज्ञातं त्वद्बलस्याज्ञातमतो भयमित्यर्थः ॥ ७९ ॥

तुलये तद्बलपरीक्षां न कुर्वे इति भावः। नावमन्ये न भीषये च। किंतु स्वकातर्य्यादेव पुनर्ब्रवीमीति भावः ॥ ८० ॥

वाणी वालिवधविषया प्रमाणं विश्वसनीया। यतो धैर्य्यमकातर्य्यं तूर्णीकृत्य वादः आकृतिरनुभवसिद्धो दिव्यविग्रह एते द्वे। परं तेजः सकलजगत्संहारकं तेजः काममतिशयेन सूचयन्ति सूचयतः भस्मच्छन्नानलोपमया गुप्तावस्थितिमहाशक्तिमत्त्वं सूचितम् ॥८१॥८२॥

अस्मासु विक्रमे अस्मन्निष्ठविक्रमे प्रत्ययो विश्वासः ॥८३॥८४॥८५॥

असुरस्य तनुं शुष्कां पादाङ्गुष्ठेन वीर्य्यवान्॥ ८५॥

क्षिप्तं दृष्ट्वा ततः कायं सुग्रीवः पुनरब्रवीत्।
लक्ष्मणस्याग्रतो रामं तपन्तमिव भास्करम्।
हरीणामग्रतो वीरमिदं वचनमर्थवत्॥ ८६॥

आर्द्रः समांसः प्रत्यग्रः क्षिप्तः कायः पुरा सखे!।
परिश्रान्तेन मत्तेन भ्रात्रा मे वालिना तदा॥ ८७॥

लघुः सम्प्रतिनिर्मांसस्तृणभूतश्च राघव!।
क्षिप्त एवं प्रहर्षेण भवता रघुनन्दन!॥ ८८॥

नात्र शक्यं बलं ज्ञातुं तव वा तस्य वाधिकम्।
आर्द्रं शुष्कमिति ह्येतत् सुमहद्राघवान्तरम्॥ ८९॥

स एव संशयस्तात! तव तस्य च यद्बलम्।
सालमेकं विनिर्भिद्य भवेद्व्यक्तिर्बलाबले॥ ९०॥

कृत्वैतत्कार्मुकं सज्यं हस्तिहस्तमिवापरम्।

अर्थवदुपपत्तियुक्तमिदं वचनमब्रवीत्। अनुत्पन्नप्रत्यय इति शेषः॥ ८६॥

तदेवाह, आर्द्र इति। प्रत्यग्रो नूतनः मत्तेन भोगार्थं पीतमदेन॥ ८७॥ ८८॥

बलाधिक्यनिर्णये हेतुमाह, आर्द्रमिति॥ ८९॥

यद् बलं तत्रेति शेषः। यद् बले इति पाठे यदिति अव्ययं यः संशयोऽस्थिप्रक्षेपात् प्राक् बलविषये आसीत् सोऽद्याप्यस्त्येवेत्यर्थः।

आकर्णपूर्णमायम्य विसृजस्व महाशरम् ॥ ८१ ॥

इमं हि सालं प्रहितस्त्वया शरो
न संशयोऽत्रास्ति विदारयिष्यति।
अलं विमर्शेण मम प्रियं ध्रुवम्
कुरुष्व राजन्! प्रतिशापितो मया ॥ ८२ ॥

यथा हि तेजःसु वरः सदा रवि-
र्यथा हि शैलो हिमवान् महाद्रिषु।
यथा चतुष्पात्सु च केशरीवर-
स्तथा नराणामसि विक्रमे वरः ॥ ८३ ॥

## इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकादशः सर्गः ॥ ११ ॥

तर्हि किं ते प्रत्ययकारकं तत्राह, सालमेकमिति। एकं सालं उतोषु विनिर्भिद्य बलाबलविषये व्यक्तिः प्रकटता भवेत् ॥ ८० ॥ ८१ ॥

त्वया प्रहितः क्षिप्तः शरः इमं सालं विदारयिष्यति। अत्र न सन्देहस्तस्मात्त्वया विमर्शो विचारो न कर्त्तव्यः मया सख्या सम्प्रति शापितः शपथपूर्वं नियुक्तोऽतो मम प्रियं ध्रुवं कुरुष्वेत्यर्थः ॥ ८२ ॥

तेजःसु तेजस्विषु। विक्रमे वरः श्रेष्ठत्वेनाभिमतोऽसि भवसी-त्यर्थः। सालभेदने सतीति शेषः ॥ ८३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धाकाण्डे एकादशः सर्गः ॥ ११ ॥

---

## द्वादशः सर्गः ।

एतच्च वचनं श्रुत्वा सुग्रीवस्य सुभाषितम् ।
प्रत्ययार्थं महातेजा रामो जग्राह कार्मुकम् ॥ १ ॥
स गृहीत्वा धनुर्घोरं शरमेकञ्च मानदः ।
सालमुद्दिश्य चिक्षेप पूरयन् स रवैर्दिशः ॥ २ ॥
स विसृष्टो बलवता बाणः स्वर्णपरिष्कृतः ।
भित्वा तालान् गिरिप्रस्थं सप्तभूमिं विवेश ह ॥ ३ ॥
सायकस्तु मुहूर्तेन तालान् भित्वा महाजवः ।
निष्पत्य च पुनस्तूणं तमेव प्रविवेश ह ॥ ४ ॥
तान् दृष्ट्वा सप्त निर्भिन्नान् तालान् वानरपुङ्गवः ।
रामस्य शरवेगेन विस्मयं परमं गतः ॥ ५ ॥

स एकतालोद्देशेनैव क्षिप्तोऽपि बाणः सप्त तालान् भित्वा तदाश्रमगिरिप्रस्थमपि भित्वा तदाधारभूमिमपि भित्वा सप्तभूमिरसातलं विवेशेत्यर्थः ॥ १ ॥ २ ॥ ३ ॥

निष्पत्य रसातलपर्यन्तं गत्वा तत्रत्यासुरान् हत्वा तमेव तूणं पूर्वाधारं तूणम् । अनेन रामबाणानां चेतनपरशक्तिमद्देवताधिष्ठितत्वं सूचयति, तदुक्तम् ।

युगपत्सप्ततालांश्च रघुनाथो बिभेद ह ।
पातालदानवान् हत्वा पुनस्तूणं विवेश च ॥

इति ॥ ४ ॥ ५ ॥

स मूर्द्धान्यपतद्भूमौ प्रलम्बीकृतभूषणः।
सुग्रीवः परमप्रीतो राघवाय कृताञ्जलिः ॥ ६ ॥
इदञ्चोवाच धर्मज्ञं कर्मणा तेन हर्षितः।
रामं सर्वास्त्रविदुषां श्रेष्ठं शूरमवस्थितम् ॥ ७ ॥
सेन्द्रानपि सुरान् सर्वांस्त्वं बाणैः पुरुषर्षभ !।
समर्थः समरे हन्तुं किं पुनर्वालिनं प्रभो ! ॥ ८ ॥
येन सप्त महातालाः गिरिर्भूमिश्च दारिता।
बाणेनैकेन काकुत्स्थ ! स्थाता ते को रणाग्रतः ॥ ९ ॥
अद्य मे विगतः शोकः प्रीतिरद्य परा मम।
सुहृदं त्वां समासाद्य महेन्द्रवरुणोपमम् ॥ १० ॥
तमद्यैव प्रियार्थं मे वैरिणं भ्रातृरूपिणम्।
वालिनं जहि काकुत्स्थ ! मया बद्धोऽयमञ्जलिः ॥ ११ ॥
ततो रामः परिष्वज्य सुग्रीवं प्रियदर्शनम्।
प्रत्युवाच महाप्राज्ञो लक्ष्मणानुगतं वचः ॥ १२ ॥

प्रलंबीकृतभूषणः साष्टाङ्गप्रणामवशाल्लंबमानावस्थापन्नो रःकण्ठादिवर्त्तिसकलभूषणः कृताञ्जलिरुत्थानानन्तरमिति शेषः ॥६॥७॥८॥
भूमिश्च चात्सप्ततालाश्रितवर्त्तिनोऽसुराश्च ॥ ९ ॥ १० ॥ ११ ॥
लक्ष्मणानुगतं तत्सममित्यर्थः। यद्वा लक्ष्मणवर्त्तिप्रयत्नेनानुगतं स्वीकृतं सुग्रीवमित्यर्थः ॥ १२ ॥

अस्मादृच्छाम किष्किन्धां चिप्रं गच्छ त्वमग्रतः ।
गत्वा चाह्वय सुग्रीव ! वालिनं भ्रातृगन्धिनम् ॥ १३ ॥
सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम् ।
वृक्षैरात्मानमावृत्य ह्यतिष्ठन् गहने वने ॥ १४ ॥
सुग्रीवोऽप्यनदद्घोरं वालिनो ह्वानकारणात् ।
गाढं परिहितो वेगान्नादैर्भिन्दन्निवाम्बरम् ॥ १५ ॥
तं श्रुत्वा निनदं भ्रातुः क्रुद्धो वाली महाबलः ।
निष्पपात सुसंरब्धो भास्करोऽस्ततटादिव ॥ १६ ॥
ततः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत् ।
गगने ग्रहयोर्घोरं बुधाङ्गारकयोरिव ॥ १७ ॥

अस्मादृष्यमूकात् । भ्रातृगन्धिनं अनर्थकभ्रातृव्यपदेशम् ॥ १३ ॥
आत्मानं स्वदेहान् ॥ १४ ॥

ह्वानकारणादाह्वाननिमित्तं गाढं परिहितं वस्त्रं येनेत्यर्थः। वाससा दृढं कटिं बध्वेत्यर्थः। वेगात् नादकारणप्राणवेगादुत्पन्नैरिति शेषः ॥ १५ ॥

भास्करोऽस्ततटादतिदूरमप्युदयपर्वतम् अत्यल्पेन कालेन याति। एवमदृश्यस्थानतया तत्तुल्यगुहातः क्षणेन बहिरागत इत्यर्थः। यत्त्वस्तपदेनोदयगिरिलक्षणं यदपि मेर्वुत्तरवासिनोऽधिकृत्येयमुक्तिरिति व्याख्यानं तत्क्लिष्टमसङ्गतञ्चेति स्पष्टम् सुधियां ॥ १६ ॥

बुधाङ्गारकयोरिव वज्रगोकर्णयोर्येति पाठान्तरम्। वज्रगोकर्णौ तदाख्यपर्वतौ यथा तथेति शेषः ॥ १७ ॥

नखैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः ।
जघ्नतुः समरेऽन्योऽन्यं भ्रातरौ क्रोधमूर्च्छितौ ॥ १८ ॥
ततो रामो धनुष्पाणिस्तावुभौ समुदैक्षत ।
अन्योऽन्यसदृशौ वीरावुभौ देवाविवाश्विनौ ॥ १९ ॥
यन्नावगच्छत्सुग्रीवं वालिनं वापि राघवः ।
ततो न कृतवान् बुद्धिं मोक्तुमन्तकरं शरम् ॥ २० ॥
एतस्मिन्नन्तरे भग्नः सुग्रीवस्तेन वालिना ।
अपश्यन् राघवं नाथं ऋष्यमूकं प्रदुद्रुवे ॥ २१ ॥
क्लान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्जरीकृतः ।
वालिनाभिद्रुतः क्रोधात्प्रविवेश महावनम् ॥ २२ ॥
तं प्रविष्टं वनं दृष्ट्वा वाली शापभयात्ततः ।
मुक्तो ह्यसि त्वमित्युक्त्वा सन्निवृत्तो महाबलः ॥ २३ ॥
राघवोऽपि सह भ्रात्रा सह चैव हनूमता ।
तदेव वनमागच्छत्सुग्रीवो यत्र वानरः ॥ २४ ॥

अशनिर्दम्भोलिः वज्रं वज्रायुधम् ॥ १८ ॥ १९ ॥
नावगच्छद्विविच्येति शेषः ॥ २० ॥
राघवं नाथं रक्षकमित्यपश्यन् अजानन् ॥ २१ ॥ २२ ॥
वनं प्रविष्टं ऋष्यमूकस्येति शेषः । सन्निवृत्तः परावृत्तः ॥२३॥२४॥

तं समीच्यागतं रामं सुग्रीवः सहलक्ष्मणम् ।
ह्रीमान् दीनमुवाचेदं वसुधामवलोकयन् ॥ २५ ॥
आह्वयस्वेति मामुक्त्वा दर्शयित्वा च विक्रमम् ।
वैरिणा घातयित्वा च किमिदानीं त्वया कृतम् ॥ २६ ॥
तामेव वेलां वक्तव्यं त्वया राघव ! तत्त्वतः ।
वालिनं न निहन्मीति ततो नाहमितो व्रजे ॥ २७ ॥
तस्य चैवं ब्रुवाणस्य सुग्रीवस्य महात्मनः ।
करुणं दीनया वाचा राघवः पुनरब्रवीत् ॥ २८ ॥
सुग्रीव ! श्रूयतां तात ! क्रोधश्च व्यपनीयताम् ।
कारणं येन बाणोऽयं स मया न विसर्जितः ॥ २९ ॥
अलङ्कारेण वेषेण प्रमाणेन गतेन च ।
त्वञ्च सुग्रीव ! वाली च सदृशौ स्थः परस्परम् ॥ ३० ॥

ह्रीमान् पराभूतत्वात् ॥ २५ ॥

विक्रमं तालभेदनेन । घातयित्वा युद्धप्रेरणद्वारा । किं कृतमनुचितमेव कृतमित्यर्थः ॥ २६ ॥

तामेव वेलां समम्यर्थे द्वितीया । वालिना युद्धप्रेरणवेलायाम् । ततस्तदेत्यर्थः । इतः ऋष्यमूकवनादित्यर्थः ॥ २७ ॥ २८ ॥

स बाणो वालिसंहारको बाणः ॥ २९ ॥

तदेव कारणमाह, अलङ्कारेणेति ॥ ३० ॥

खरेण वर्चसा चैव प्रेक्षितेन च वानर!।
विक्रमेण च वाक्यैश्च व्यक्तिं वां नोपलक्षये॥ ३१॥
ततोऽहं रूपसादृश्यान्मोहितो वानरोत्तम!।
नोत्सृजामि महावेगं शरं शत्रुनिवर्हणम्॥ ३२॥
जीवितान्तकरं घोरं सादृश्यात्तु विशङ्कितः।
मूलघातो न नौ स्यान्हि द्वयोरिति कृतो मया॥ ३३॥
त्वयि वीर! विपन्ने हि अज्ञानाल्लाघवान्मया।
मौढ्यञ्च मम बाल्यञ्च ख्यापितं स्यात् कपीश्वर!॥ ३४॥

वर्चः शरीरकान्तिः वां युवयोः॥ ३१॥

मोहित इति। नन्विदमनुचितं यद्भगवतो मोहः। अमोहे मोह इत्यनृतकथनञ्च। किञ्च पलायनसमये ऋष्यमूकाभिमुखधावनेन व्यक्तिरस्त्येवेति चेन्न। वालिन आयुर्दायासमाप्त्या तथाकरणेऽपि सुग्रीवसन्तोषाय स्वस्मिन्मानुष्यबुध्द्युत्पादनाय चात्मनि मोहोत्प्रेक्षया समाधानाद्दत्तेः। मोहित इत्यस्येवेति शेषः। ईदृशे विषये एवं-विधानृतवचनं न दोषायेत्यप्यनेन ध्वनितम्। नोत्सृजामि नोद-सृजम्॥ ३२॥

विशङ्कितः शङ्कावान्। हि निश्चयेन नौ आवयोर्द्वयोरपि त्वन्नाशेन मूलघातो न स्यात् माभूदिति एतदर्थं मया कृतः। शराऽनुत्सर्ग इति शेषः॥ ३३॥

मूलघातमेव दर्शयति, त्वयीति। मया विपन्ने मद्व्यापारतो नाशिते। अज्ञानमनिश्चयप्रवृत्तिः। लाघवाच्चापल्यात्॥ ३४॥

दत्ताभयवधो नाम पातकं महदद्भुतम्।
अहञ्च लक्ष्मणश्चैव सीता च वरवर्णिनी ॥ ३५ ॥
त्वदधीना वयं सर्वे वनेऽस्मिन् शरणं भवान्।
तस्माद् युद्धस्व भूयस्त्वं मा माशङ्कीश्च वानर ! ॥ ३६ ॥
एतन्मुहूर्त्ते तु मया पश्य वालिनमाहवे।
निरस्तमिषुणैकेन चेष्टमानं महीतले ॥ ३७ ॥
अभिज्ञानं कुरुष्व त्वमात्मनो वानरेश्वर ! ।
येन त्वामभिजानीयां द्वन्द्वयुद्धमुपागतम् ॥ ३८ ॥
गजपुष्पीमिमां फुल्लामुत्पाट्य शुभलक्षणाम्।
कुरु लक्ष्मण ! कण्ठेऽस्य सुग्रीवस्य महात्मनः ॥ ३९ ॥
ततो गिरितटे जातामुत्पाट्य कुसुमायुताम्।
लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे व्यसर्जयत् ॥ ४० ॥

बाधकान्तरमाह, दत्तमभयमस्मै स दत्ताभयस्तस्य वधो महत्पातकमिति नाम प्रसिद्धम्। स्वमूलघातमप्याह, अहमिति ॥ ३५ ॥

मा माशङ्कीरित्याबाधायां द्वित्वम् ॥ ३६ ॥ ३७ ॥ ३८ ॥

गजपुष्पी नागपुष्पीलता शुभं सम्यक् लक्षयतीति शुभलक्षणा ताम् ॥ ३९ ॥

व्यसर्जयन्निसृष्टवान् समर्पितवानित्यर्थः ॥ ४० ॥

स तया शुशुभे श्रीमान् लतया कण्ठसक्तया।
मालयेव बलाकानां ससन्ध्य इव तोयदः ॥ ४१ ॥
विभ्राजमानो वपुषा रामवाक्यसमाहितः।
जगाम सह रामेण किष्किन्धां पुनराप सः ॥ ४२ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
द्वादशः सर्गः ॥ ७ ॥

लतया सुश्लपुष्पनागपुष्पीलतया सन्ध्यारागसहिततोयद इव स्वयं बलाकानां मालयेव तया लतया सुशुभे ॥ ४१ ॥

रामवाक्ये तत्करणे समाहित उद्युक्तः ॥ ४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे द्वादशः सर्गः ॥ ७ ॥

---

## त्रयोदशः सर्गः।

ऋष्यमूकात्स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः।
जगाम सह सुग्रीवो वालिविक्रमपालिताम् ॥ १ ॥
समुद्यम्य महच्चापं रामः काञ्चनभूषितम् ॥
शरांश्चादित्यसंकाशान् गृहीत्वा रणसाधकान् ॥ २ ॥
अग्रतस्तु ययौ तस्य राघवस्य महात्मनः।
सुग्रीवः संहतग्रीवो लक्ष्मणस्य महाबलः ॥ ३ ॥
पृष्ठतो हनुमान् वीरो नलो नीलश्च वीर्य्यवान्।
तारश्चैव महातेजा हरियूथपयूथपः ॥ ४ ॥
ते वीक्षमाणा वृक्षांश्च पुष्पभारावलम्बिनः।
प्रसन्नाम्बुवहाश्चैव सरितः सागरङ्गमाः ॥ ५ ॥
कन्दराणि च शैलांश्च निर्दराणि गुहास्तथा।
शिखराणि च मुख्यानि दरीश्च प्रियदर्शनाः ॥ ६ ॥

ऋष्यमूकादिति ॥ १ ॥ २ ॥
संहतग्रीवः दृढबन्धबद्धग्रीवः ॥ ३ ॥
हरियूथपानामपि यूथं पाति तादृशः ॥ ४ ॥ ५ ॥
कन्दराणि मन्दिराकारपर्वतविवराणि निर्दराणि शिलाविवराणि गुहाः देवखातगिरिबिलानि। दर्यो गह्वराणि ॥ ६ ॥
आकोशमग्रभागपर्यन्तं कुड्मलैर्मुकुलरूपैः तेनेषद्विकसितैः पद्मैः

वैदूर्य्यविमलैस्तोयैः पद्मैश्चाकोशकुड्मलैः।
शोभितान् सजलान् मार्गे तटाकांश्चावलोकयन् ॥ ७ ॥
कारण्डैः सारसैर्हंसैर्वञ्जुलैर्जलकुक्कुटैः।
चक्रवाकैस्तथा चान्यैः शकुनैः प्रतिनादितान् ॥ ८ ॥
मृदुशष्पांकुराहारान्निर्भयान वनचारिणः।
चरतः सर्वतः पश्यन् स्थलीषु हरिणान् स्थितान ॥ ९ ॥
तटाकवैरिणश्चापि शुक्लदन्तविभूषितान्।
घोरानेकचरान् वन्यान् द्विरदान् कूलघातिनः ॥ १० ॥
मत्तान् गिरितटोद्घुष्टान् पर्वतानिव जङ्गमान्।
वानरान् द्विरदप्रख्यान्महीरेणुसमुच्छितान् ॥ ११ ॥
वने वनचरांश्चान्यान् खेचरांश्च विहङ्गमान्।
पश्यन्तस्त्वरिता जग्मुः सुग्रीववशवर्त्तिनः ॥ १२ ॥
तेषान्तु गच्छतां तत्र त्वरितं रघुनन्दनः।
द्रुमखण्डवनं दृष्ट्वा रामः सुग्रीवमब्रवीत् ॥ १३ ॥

शोभितान्। अवलोकयन् ॥ ७ ॥
कारण्डैः कारण्डवैः ॥ ८ ॥
शष्पं तृणम् ॥ ९ ॥
कूलघातित्वादेव तटाकवैरित्वम् एकचरान् असहायचरान् ॥१०॥
द्विरदप्रख्यान् गजतुल्यान् ॥ ११ ॥ १२ ॥
द्रुमाणां खण्डः समूहो यस्मिन् तादृशं वनम् ॥ १३ ॥

  

एष मेघ इवाकाशे वृक्षखण्डः प्रकाशते ।
मेघसङ्घातविपुलं पर्य्यन्तकदलीवृतम् ॥ १४ ॥
किमेतज्ज्ञातुमिच्छामि सखे ! कौतूहलं मम ।
कौतूहलापनयनं कर्तुमिच्छाम्यहं त्वया ॥ १५ ॥
तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ।
गच्छन्नेवाचचक्षेऽथ सुग्रीवस्तन्महद्वनम् ॥ १६ ॥
एतद्राघव ! विस्तीर्णमाश्रमं श्रमनाशनम् ।
उद्यानवनसम्पन्नं स्वादुमूलफलोदकम् ॥ १७ ॥
अत्र सप्तजना नाम मुनयः शंसितव्रताः ।
सप्तैवासन्नधःशीर्षा नियतं जलशायिनः ॥ १८ ॥
सप्तरात्रे कृताहारा वायुनाचलवासिनः ।
दिवं वर्षशतैर्याताः सप्तभिः सकलेवराः ॥ १९ ॥

वृक्षखण्डो वृक्षसमूहः मेघेत्यादुत्तरान्वयि ॥ १४ ॥

त्वया कर्त्रा कौतूहलस्यौत्सुक्यस्यापनयनं निवर्त्तनं कर्तुं कारयितुमिच्छामि ॥ १५ ॥ १६ ॥

उद्यानैरुपवनैश्च सम्पन्नं युक्तम् ॥ १७ ॥

सप्तजना नाम सप्तजना इति प्रसिद्धा अधःशीर्षाः भूप्रतिष्ठापितशिरसः ॥ १८ ॥

केवलवायुनैव सप्तरात्रे गते कृताहाराः । सप्तभिर्वर्षशतैः सकलेवरा दिवं याताः ॥ १९ ॥

तेषामेतत्प्रभावेण द्रुमप्राकारसंवृतम् ।
आश्रमं सुदुराधर्षमपि सेन्द्रैः सुरासुरैः ॥ २० ॥
पक्षिणो वर्जयन्त्येतत्तथान्ये वनचारिणः ।
विशन्ति मोहाद् येऽप्यत्र न निवर्त्तन्ति ते पुनः ॥ २१ ॥
विभूषणरवाश्चात्र श्रूयन्ते सकलाक्षराः ।
तूर्य्यगीतस्वनश्चापि गन्धो दिव्यश्च राघव ! ॥ २२ ॥
त्रेताग्नयोऽपि दीप्यन्ते धूमो ह्येष प्रदृश्यते ।
वेष्टयन्निव वृक्षाग्रान् कपोताङ्गारुणो घनः ॥ २३ ॥
एते वृक्षाः प्रकाशन्ते धूमसंसक्तमस्तकाः ।
मेघजालप्रतिच्छन्ना वैदूर्य्यगिरयो यथा ॥ २४ ॥
कुरु प्रणामं धर्मात्मन् ! तेषामुद्दिश्य राघव ! ।
लक्ष्मणेन सह भ्रात्रा प्रयतः संहताञ्जलिः ॥ २५ ॥

एतदाश्रमं अर्धर्चादित्वाद्क्लीबत्वम् ॥ २० ॥

वर्जयन्ति न प्रविशन्ति पुनर्न निवर्त्तन्ति अत्रैव म्रियन्त इत्यर्थः ॥ ॥ २१ ॥

सकलाक्षराः कलाक्षराभिर्मधुराक्षराभिर्वाग्भिः सहिता भूषणरवा अप्सरसामिति शेषः । दिव्यो गन्धश्च तासामेवानुभूयत इति शेषः । न केवलं भोगभूमिः कर्मभूरपीत्याह ॥ २२ ॥

त्रेतेत्यादि । कपोताङ्गवदरुणो धूसरो घन इव धूमो वृक्षाग्रान् वेष्टयन् व्याप्नुवन् दृश्यते ॥ २३ ॥ २४ ॥ २५ ॥

प्रणमन्ति हि ये तेषामृषीणां भावितात्मनाम् ।
न तेषामशुभं किञ्चिच्छरीरे राम ! विद्यते ॥ २६ ॥
ततो रामः सह भ्रात्रा लक्ष्मणेन कृताञ्जलिः ।
समुद्दिश्य महात्मानस्तानृषीनभ्यवादयत् ॥ २७ ॥
अभिवाद्य च धर्मात्मा रामो भ्राता च लक्ष्मणः ।
सुग्रीवो वानराश्चैव जग्मुः संहृष्टमानसाः ॥ २८ ॥
ते गत्वा दूरमध्वानं तस्मात् सप्तजनाश्रमात् ।
ददृशुस्तां दुराधर्षां किष्किन्धां वालिपालिताम् ॥ २९ ॥

ततस्तु रामानुजरामवानराः
प्रगृह्य शस्त्राण्युदितोग्रतेजसः ।
पुरीं सुरेशात्मजवीर्य्यपालितां
वधाय शत्रोः पुनरागतास्त्विह ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
त्रयोदशः सर्गः ॥ ० ॥

तेषामुद्दिश्य तानुद्दिश्येति यावत् तेषां प्रणमन्ति तान् प्रणमन्ति ॥२६॥

महात्मानः महात्मनस्तानृषीनुद्दिश्याभ्यवादयत् नमस्कृतवान् ॥२७॥

वानरा हनुमदादयः । एतत्कथाप्रसङ्गादिकं वाल्यायुःसमाप्ति-काललाभाय ॥ २८ ॥ २९ ॥

शस्त्राणि वानराणां शस्त्रं शिलादि ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

## चतुर्दशः सर्गः।

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम्।
वृक्षैरात्मानमावृत्य व्यतिष्ठन् गहने वने ॥ १ ॥
विसार्य्य सर्वतो दृष्टिं कानने काननप्रियः।
सुग्रीवो विपुलग्रीवः क्रोधमाहारयद् भृशम् ॥ २ ॥
ततस्तु निनदं घोरं कृत्वा युद्धाय चाह्वयत्।
परिवारैः परिवृतो नादैर्भिन्दन्निवाम्बरम् ॥ ३ ॥
गर्जन्निव महामेघो वायुवेगपुरःसरः।
अथ बालार्कसदृशो दृप्तसिंहगतिस्ततः ॥ ४ ॥
दृष्ट्वा रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत्।
हरिवागुरया व्याप्तां तदा काञ्चनभूषणाम् ॥ ५ ॥
प्राप्ताः स्म ध्वजयन्त्राढ्यां किष्किन्धां वालिनः पुरीम्।
प्रतिज्ञा या कृता वीर ! त्वया वालिवधे पुरा ॥ ६ ॥

गहने निविडे दुष्प्रवेशे ॥ १ ॥ २ ॥ ३ ॥

वायोर्वेगः पुरःसरो यस्य स महामेघ इव। बालार्कसदृशो वर्णेन प्रतापेन च ॥ ४ ॥

हरिरूपवागुरया व्याप्तां वागुराकारतया स्थितहरिकाम् ॥ ५ ॥

ध्वजैर्यन्त्रैः प्राकारयुद्धापेक्षितैराढ्याम् ॥ ६ ॥

सफलां कुरु तां क्षिप्रं लतां काल इवागतः ।
एवमुक्तस्तु धर्मात्मा सुग्रीवेण स राघवः ॥ ७ ॥
तमेवोवाच वचनं सुग्रीवं शत्रुसूदनः ।
कृताभिज्ञानचिह्नस्त्वमनया गजसाह्वया ॥ ८ ॥
लक्ष्मणेन समुत्पाट्य एषा कण्ठे कृता तव ।
शोभसेऽप्यधिकं वीर ! लतया कण्ठसक्तया ॥ ९ ॥
विपरीत इवाकाशे सूर्य्यो नक्षत्रमालया ।
अद्य वालिसमुत्थन्ते भयं वैरञ्च वानर ! ॥ १० ॥
एकेनाहं प्रमोक्ष्यामि बाणमोक्षेण संयुगे ।
मम दर्शय सुग्रीव ! वैरिणं भ्रातृरूपिणम् ॥ ११ ॥

यथा आगतः कालो ऋतुविशेषरूपः लतां प्राक् सपुष्पां ततः सफलां करोति तथा स कृतप्रतिज्ञां त्वमपि सफलां कुर्वित्यर्थः ॥ ७ ॥

गजसाह्वया गजेन समानमाह्वो नाम यस्यास्तया ॥ ८ ॥ ९ ॥

नक्षत्रमालया आकाशे विपरीतो विशेषेण परीतो वेष्टितः सूर्य्य इव। कविविकल्पितोपमालौकिकोपमा। तेन तादृशः सूर्य्यो यदि भवेत् तदा तदुपमार्कवर्णस्य कण्ठसक्तसुक्तपुष्पमाल्यस्योपमास्यादित्यतिशयोक्तिरत्र व्यङ्ग्या। केचित्तु विपरीते इति सप्तम्यन्तम्।

परीतन्तु दिवाप्रोक्तं विपरीतन्तु शर्वरी।
पौर्णमासीगतश्चन्द्रः सूर्य्य इत्यभिधीयते ॥

इति व्याचक्षते ॥ १० ॥

प्रमोक्ष्यामि प्रमोचयिष्यामि ॥ ११ ॥

वाली विनिहतो यावद्वने पांसुषु चेष्टते।
यदि दृष्टिपथं प्राप्तो जीवन् स विनिवर्त्तते ॥ १२ ॥
ततो दोषेण मा गच्छेत् सद्योगर्हेच्च मां भवान्।
प्रत्यक्षं सप्त ते ताला मया बाणेन दारिताः ॥ १३ ॥
ततो वेत्सि बलेनाद्य वालिनं निहतं रणे।
अनृतं नोक्तपूर्व्वं मे चिरं कृच्छ्रेऽपि तिष्ठता ॥ १४ ॥
धर्मलोभपरीतेन नच वक्ष्ये कथञ्चन।
सफलाञ्च करिष्यामि प्रतिज्ञां जहि संभ्रमम् ॥ १५ ॥
प्रसूतं कलमक्षेत्रं वर्षेणेव शतक्रतुः।
तदाह्वाननिमित्तञ्च वालिनो हेममालिनः ॥ १६ ॥
सुग्रीव! कुरु तं शब्दं निष्पतेद् येन वानरः।

चेष्टते लुठिष्यति मद्दर्शनानन्तरमेवेति शेषः ॥ १२ ॥

यदि मद्दृष्टिपथं गतो जीवन् स विनिवर्त्तेत ततस्तदा मा मां दोषेणोपलक्षितं गच्छेदवगच्छेत् मां गर्हेच्च। किञ्च मद् बलस्य दृष्टत्वाद्वालिनं निहतमेवावेहीत्याह, प्रत्यक्षमिति ॥ १३ ॥

वेत्सि विद्धि। कृच्छ्रेऽपि प्राणसंकटेऽपि मे मया ॥ १४ ॥

धर्मलोभेन धर्मलिप्सया परीतेन व्याप्तचित्तेनेति पूर्वान्वयि ॥ १५ ॥

सफलां करिष्यामीत्यत्र दृष्टान्तः। प्रसूतमिति अङ्कुरितमित्यर्थः। कलमक्षेत्रमिति व्रीहिक्षेत्रमित्यर्थः ॥ १६ ॥

जितकाशी जितश्वासो जितभयो वा! त्वया आधर्षितः सन् पुराद्येन निष्पतेत्तं शब्दं कुर्वित्यर्थः ॥ १७ ॥

जितकाशी जयश्लाघी त्वया चाधर्षितः पुरात् ॥ १७ ॥
निष्पतिष्यत्यसङ्गेन वाली स प्रियसंयुगः ।
रिपूणां धर्षितं श्रुत्वा मर्षयन्ति न संयुगे ॥ १८ ॥
जानन्तस्तु स्वकं वीर्य्यं स्त्रीसमक्षं विशेषतः ।
स तु रामवचः श्रुत्वा सुग्रीवो हेमपिङ्गलः ॥ १९ ॥
ननर्द क्रूरनादेन विनिर्भिन्दन्निवाम्बरम् ।
तस्य शब्देन वित्रस्ता गावो यान्ति हतप्रभाः ॥ २० ॥
राजदोषपरामृष्टाः कुलस्त्रिय इवाकुलाः ।
द्रवन्ति च मृगाः शीघ्रं भग्ना इव रणे हयाः ॥ २१ ॥
पतन्ति च खगा भूमौ क्षीणपुण्या इव ग्रहाः ॥ २२ ॥

ननु कृतेऽपि चाह्वाने स्त्र्यादिसक्तो न निष्पतिष्यति तत्राह, निष्पतिष्यतीति। असङ्गेन स्त्र्यादिसङ्गपरित्यागेनेत्यर्थः। यतः प्रियसंयुगः न मर्षयन्तीत्यस्य शूरा इति शेषः ॥ १८ ॥

विशेषतो न मर्षयन्तीत्यनुषङ्गः ॥ १९ ॥

गावो महान्तो वृषभाः हतप्रभाः हतशक्तयः ॥ २० ॥

राजदोषेण प्रजारक्षणाभावरूपेण राजदोषेण परैरन्यैरामृष्टा अतएवाकुला व्याकुलाः कुलस्त्रिय इव गावो यान्ति ॥ २१ ॥

ग्रहाः देवाः ॥ २२ ॥

जीमूतवत् कृतप्रणादः प्रतीतः रामे इति शेषः। शौर्ये पराक्रम-

ततः स जीमूतकृतप्रणादो
नादं व्यमुञ्चत्त्वरया प्रतीतः।
सूर्य्यात्मजः शौर्य्यविवृद्धतेजाः
सरित्पतिर्वानिलचञ्चलोर्मिः ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
द्वादशः सर्गः ॥ ७ ॥

करणो विवृद्धं तेजो यस्य सरित्पतिर्वा समुद्र इव ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे चतुर्दशः सर्गः ॥ ११ ॥

---

## पञ्चदशः सर्गः ।

---

अथ तस्य निनादं तं सुग्रीवस्य महात्मनः ।
शुश्रावान्तःपुरगतो वाली भ्रातुरमर्षणः ॥ १ ॥
श्रुत्वा तु तस्य निनदं सर्वभूतप्रकम्पनम् ।
मदश्चैकपदे नष्टः क्रोधश्चापादितो महान् ॥ २ ॥
ततो रोषपरीताङ्गो वाली स कनकप्रभः ।
उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ३ ॥
वाली दंष्ट्राकरालस्तु क्रोधाद्दीप्ताग्निलोचनः ।
भात्युत्पतितपद्माभः समृणाल इव ह्रदः ॥ ४ ॥
शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः ।
वेगेन च पदन्यासैर्दारयन्निव मेदिनीम् ॥ ५ ॥

अथेति ॥ १ ॥

एकपदे तत्क्षणे । आपादितः सम्पादितः ॥ २ ॥

कनकप्रभस्य क्रोधादतिरक्तत्वे सहजप्रभानाशेनोपरक्तादित्योपमेयता ॥ ३ ॥

एतदादीनि आसन्नमृत्युलक्षणानि उत्पतितपद्मेत्येकदेशे तत्सम् । उत्पतितैरुद्धृतैः पद्मैरुत्पतिता नष्टा पद्मकृतशोभा यस्य तादृशो मृणालसहितो ह्रद इव दंष्ट्रा मृणालस्थानीया ॥ ४ ॥

दुर्मर्षणं दुःसहं वेगेन युक्तैः पदन्यासैः ॥ ५ ॥

तं तु तारा परिष्वज्य स्नेहाद्दर्शितसौहृदा।
उवाच त्रस्तसंभ्रान्ता हितोदर्कमिदं वचः ॥ ६ ॥
साधु क्रोधमिमं वीर! नदीवेगमिवागतम्।
शयनादुत्थितः काल्यं त्यज भुक्तामिव स्रजम् ॥ ७ ॥
काल्यमेतेन संग्रामं करिष्यसि च वानर!।
वीर! ते शत्रुबाहुल्यं फल्गुता वा न विद्यते ॥ ८ ॥
सहसा तव निष्क्रामो मम तावन्न रोचते।
श्रूयतामभिधास्यामि यन्निमित्तं निवार्य्यते ॥ ९ ॥
पूर्वमापतितः क्रोधात् स त्वामाह्वयते युधि।
निष्पत्य च निरस्तस्ते हन्यमानो दिशो गतः ॥ १० ॥
त्वया तस्य निरस्तस्य पीड़ितस्य विशेषतः।

त्रस्तसंभ्रान्ता कर्मधारये पुंवत्त्वम्। त्रस्ता भीता संभ्रान्ता क्षुभितचित्ता हितोदर्कं हितस्योत्तरकालफलम् ॥ ६ ॥

काल्यं प्रातःकाले शयनादुत्थितः भुक्तां स्रजमिव त्यज क्रोधम् ॥७॥

काल्यं प्रातःकाले संग्रामं कुरु। हे वीर यद्यपि संग्रामे शत्रोर्बाहुल्यं त्वत्त आधिक्यं न विद्यते नापि तव फल्गुता लघुता विद्यतेऽथापि सहसा हठात्तवाद्य निष्क्रामो निष्क्रमणं मम न रोचते। कुतस्तत्राह श्रूयतामिति ॥ ८ ॥ ९ ॥

पूर्वं क्रोधादापतितः सुग्रीवोयुद्धाय त्वामाह्वयते आह्वयत तदा ते त्वया निष्पत्य निरस्तोहन्यमानश्च दिशोगतः। तस्य तथानिरस्तस्य पुनरेत्याह्वानं शङ्कां जनयत्येव ॥ १० ॥ ११ ॥

दृष्टैत्यपुनराक्रानं शङ्कां जनयतीव मे ॥ ११ ॥
दर्पश्च व्यवसायश्च यादृशस्तस्य नर्दतः ।
निनादस्य च संरम्भो नैतदल्पं हि कारणम् ॥ १२ ॥
नासहायमहं मन्ये सुग्रीवं तमिहागतम् ।
अवष्टब्धसहायश्च यमाश्रित्यैष गर्जति ॥ १३ ॥
प्रकृत्या निपुणश्चैव बुद्धिमांश्चैव वानरः ।
नापरीक्षितवीर्य्येण सुग्रीवः सख्यमेष्यति ॥ १४ ॥
पूर्व्वमेव मया वीर ! श्रुतं कथयतो वचः ।
अङ्गदस्य कुमारस्य वक्ष्याम्यद्य हितं वचः ॥ १५ ॥

कुतस्तत्राह दर्पश्चेति । दर्पोगर्व्वः व्यवसायोयुद्धविषयः । यादृशश्च नर्दतो निनादस्य संरम्भोवृद्धिरेतदेतस्य कारणं नाल्पं । अयं दर्पादिः कारणविशेषपूर्व्वकः कार्यविशेषत्वात् इत्यनुमितं ॥ १२ ॥

कारणविशेषं दर्शयति नेति । अवष्टब्धसहायः परिगृहीतसहायः । सर्वथा सहायसम्बद्धमूलोयं संरम्भ इति भावः ॥ १३ ॥

नन्वित तस्य बुद्धिः कुतस्तत्राह । प्रकृत्येति । निपुणः उचितकृत्यनिष्पादने समर्थः । तत्क्षमबुद्धिमांश्च । ननु सहायवन्तं वधिष्यामीतिचेत्तत्राह । अपरीक्षित शत्रुनाशक्वीर्येण पुंसा सुग्रीवः सख्यं नेष्यति । अतस्तसहायभूतः शङ्कनीयएव ॥ १४ ॥

न केवलं मदनुमितएवायमर्थः किन्तु शब्दप्रमाणादप्यवगत इत्याह । पूर्व्वमेवेति । यन्मया पूर्व्वमङ्गदस्य कुमारस्य वचः श्रुतं तत्तव हितमद्य त्वां वक्ष्यामि ॥ १५ ॥

अङ्गदस्तु कुमारोऽयं वनान्तमुपनिर्गतः।
प्रवृत्तिस्तेन कथिता चारैरासीन्निवेदिता ॥ १६ ॥
अयोध्याधिपतेः पुत्रौ शूरौ समरदुर्जयौ।
इक्ष्वाकूणां कुले जातौ प्रथितौ रामलक्ष्मणौ ॥ १७ ॥
सुग्रीवप्रियकामार्थं प्राप्तौ तत्र दुरासदौ।
स ते भ्रातुर्हि विख्यातः सहायो रणकर्मणि ॥ १८ ॥
रामः परबलामर्दी युगान्ताग्निरिवोत्थितः।
निवासवृक्षः साधूनामापन्नानां परा गतिः ॥ १९ ॥
आर्त्तानां संश्रयश्चैव यशसश्चैकभाजनम्।
ज्ञानविज्ञानसम्पन्नो निदेशे निरतः पितुः ॥ २० ॥
धातूनामिव शैलेन्द्रो गुणानामाकरो महान्।

तदेवाह। अङ्गदस्त्विति। वनान्तं वनमध्यं या तस्मै चारैर्निवेदिता प्रवृत्तिरासीत्। प्रवृत्तिः सुग्रीववृत्तान्तः सा तेन मम कथिता ॥ १६ ॥ १७ ॥

तत्र तयोर्मध्ये यस्तव भ्रातुः सहायोविख्यातः हि यतः स परबलामर्दी साधूनां निवासवृक्षः आश्रयः आपन्नानां शरणागतानां गतिः शरण्यं ॥ १८ ॥ १९ ॥

आर्त्तानां शत्रुपीडितानां तन्नाशाय संश्रयः संश्रयार्हः। ज्ञानं ब्रह्मज्ञानं धर्मविषयं विज्ञानं शिल्पनैपुणं वा। निदेशे निरतइत्यनेन स्वराज्यमरक्षितवतः कुतः पररक्षणसामर्थ्यमित्यपास्तं ॥ २० ॥

तत्क्षमो न विरोधस्ते सह तेन महात्मना ॥ २१ ॥
दुर्जयेनाप्रमेयेण रामेण रणकर्मसु ।
शूर ! वक्ष्यामि ते किञ्चिन्न चेच्छाम्यभ्यसूयितुम् ॥ २२ ॥
श्रूयतां क्रियताञ्चैव तव वक्ष्यामि यद्धितम् ।
यौवराज्येन सुग्रीवं तूर्णं साध्वभिषेचय ॥ २३ ॥
विग्रहं मा कृथा वीर ! भ्रात्रा राजन् ! यवीयसा ।
अहं हि ते क्षमं मन्ये तेन रामेण सौहृदम् ॥ २४ ॥
सुग्रीवेण च संप्रीतिं वैरमुत्सृज्य दूरतः ।
लालनीयो हि ते भ्राता यवीयानेष वानरः ॥ २५ ॥
तत्र वा सन्निहस्थो वा सर्वथा बन्धुरेव ते ।
नहि तेन समं बन्धुं भुवि पश्यामि कञ्चन ॥ २६ ॥
दानमानादिसत्कारैः कुरुष्व प्रत्यनन्तरम् ।
वैरमेतत्समुत्सृज्य तव पार्श्वे स तिष्ठतु ॥ २७ ॥

तत्तस्मात्तेनोच्यमानगुणकेन रामेण तव विरोधो न क्षमः न युक्तः ॥२१॥

दुर्जयेनेत्याद्यर्द्धं पूर्व्वान्वयि । किञ्चिद्वक्ष्यमाणं त्वयाभ्यसूयितुं नेच्छामि कथमियं साम्प्रतं वदतीतिमदसूया न कर्त्तव्येत्यर्थः । आर्षत्वादसमानकर्त्तृत्वेपि तुमुन् ॥ २२ ॥ २३ ॥

तेन बलीयसा रामेण ॥ २४ ॥ २५ ॥

तत्र तस्मिन्दूरदेशे वा सन् विद्यमानः इहस्थस्त्वत्समीपस्थो वा । भुवि न पश्यामि तवेति शेषः ॥ २६ ॥

प्रत्यनन्तरं स्वाधीनं ॥ २७ ॥

सुग्रीवो विपुलग्रीवो महाबन्धुर्मतस्तव।
भ्रातृसौहृदमालम्ब्य नान्या गतिरिहास्ति ते ॥ २८ ॥
यदि ते मत्प्रियं कार्य्यं यदि चावैषि मां हिताम्।
याच्यमानः प्रयत्नेन साधु वाक्यं कुरुष्व मे ॥ २९ ॥

प्रसीद पथ्यं शृणु जल्पितं हि मे
न रोषमेवानुविधातुमर्हसि।
क्षमो हि ते कोसलराजसूनुना
न विग्रहः शक्रसमानतेजसा ॥ ३० ॥
तदा हि तारा हितमेव वाक्यं
तं वालिनं पथ्यमिदं बभाषे।
नरोचते तद्वचनं हि तस्य
कालाभिपन्नस्य विनाशकाले ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
पञ्चदशः सर्गः ॥ ११ ॥

भ्रातृसौहृदमालम्ब्यैव तव गतिर्नान्यागतिरस्तीत्यर्थः ॥ २८ ॥
यदि ते यदि त्वयेत्यर्थः ॥ २९ ॥ ३० ॥
तदाहीत्यादि कविवाक्यं ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे पञ्चदशः सर्गः ॥ १० ॥

---

## षोड़शः सर्गः।

---

तामेवं ब्रुवतीं तारां ताराधिपनिभाननां।
वालीनिर्भर्त्सयामास वचनं चेदमब्रवीत् ॥ १ ॥
गर्जतोऽस्य सुसंरब्धं भ्रातुः शत्रोर्विशेषतः।
मर्षयिष्यामि केनापि कारणेन वरानने! ॥ २ ॥
अधर्षितानां शूराणां समरेष्वनिवर्त्तिनां।
धर्षणामर्षणं भीरु! मरणादतिरिच्यते ॥ ३ ॥
सोढुं न च समर्थोऽहं युद्धकामस्य संयुग।
सुग्रीवस्य च संरम्भं हीनग्रीवस्य गर्जितं ॥ ४ ॥
न च कार्य्योविषादस्ते राघवं प्रति मत्कृते।
धर्मज्ञश्च कृतज्ञश्च कथं पापं करिष्यति ॥ ५ ॥

तामिति ॥ १ ॥

सुसंरब्धं भावेनिष्ठा। सुसंरम्भमित्यर्थः। केनापि न केनापि-त्वदुक्तकारणेनेत्यर्थः ॥ २ ॥

धर्षणामर्षणं सहनं ॥ ३ ॥

संयुगे संरम्भं संयुगनिमित्तं संरम्भमित्यर्थः ॥ ४ ॥

राघवं प्रति राघवनिमित्तभयमालक्ष्य मत्कृते त्वया विषादो न कार्यः यतोधर्मज्ञत्वादिगुणः सः पापं मद्वधरूपं ॥ ५ ॥

निवर्तस्व सह स्त्रीभिः कथं भूयोऽनुगच्छसि।
सौहृदं दर्शितं तावन्मयि भक्तिस्त्वया कृता ॥ ६ ॥
प्रतियोत्स्याम्यहं गत्वा सुग्रीवं जहि सम्भ्रमं।
दर्पञ्चास्य विनेष्यामि न च प्राणैर्वियोच्यते ॥ ७ ॥
अहं ह्याजिस्थितस्यास्य करिष्यामि यदीप्सितं।
वृक्षैर्मुष्टिप्रहारैश्च पीड़ितः प्रतियास्यति ॥ ८ ॥
न मे गर्वितमायस्तं सहिष्यति दुरात्मवान्।
कृतं तारे! सहायत्वं दर्शितं सौहृदं मयि ॥ ९
शापितासि मम प्राणैर्निवर्तस्व जनेन च।
अलं जित्वा निवर्तिष्ये तमहं भ्रातरं रणे ॥ १० ॥
तन्तु तारा परिष्वज्य वालिनं प्रियवादिनी।
चकार रुदती मन्दं दक्षिणा सा प्रदक्षिणं ॥ ११ ॥

कथं भूयोऽनुगच्छसि निवर्त्तस्वेत्युच्यमानापीति भावः। भक्तिरनुरागः ॥ ६ ॥

दर्पञ्च दर्पमेव। वियोच्यते वियोजयिष्यते सोदरत्वात् ॥ ७ ॥

उक्तमेव विवृणोति ईप्सितं त्वदीप्सितं दर्पमोचनमेवेत्यर्थः वृक्षैर्वृक्षप्रहारैः ॥ ८ ॥

गर्वितं दर्पं आयस्तं तत्प्रवृत्तं दृढयत्नं भावेनिष्ठा। सहायत्वं बुद्धिसाचिव्यं ॥ ९ ॥

जनेन स्वपरिवारजनेन। अलं जित्वा जयमात्रं कृत्वा निवर्त्तिष्ये। नतु वधमित्यर्थः। अहं जित्वेति पाठस्त्वसाम्प्रदायिकः ॥ १० ॥ ११ ॥

[

ततः स्वस्त्ययनं कृत्वा मन्त्रविद्विजयैषिणी।
अन्तःपुरं सह स्त्रीभिः प्रविष्टा शोकमोहिता ॥ १२ ॥
प्रविष्टायान्तु तारायां सह स्त्रीभिः स्वमालयं।
नगर्य्या निर्य्ययौ क्रुद्धो महासर्प इव श्वसन् ॥ १३ ॥
स निश्वस्य महारोषो वाली परमवेगवान्।
सर्वतश्चारयन् दृष्टिं शत्रुदर्शनकांक्षया ॥ १४ ॥
स ददर्श ततः श्रीमान्सुग्रीवं हेमपिङ्गलं।
सुसंवीतमवष्टब्धं दीप्यमानमिवानलं ॥ १५ ॥
तं स दृष्ट्वा महाबाहुः सुग्रीवं पर्य्यवस्थितं।
गाढं परिदधे वासो वाली परमकोपनः ॥ १६ ॥
स वाली गाढसंवीतो मुष्टिमुद्यम्य वीर्य्यवान्।
सुग्रीवमेवाभिमुखो ययौ योद्धुं कृतक्षणः ॥ १७ ॥
श्लिष्टं मुष्टिं समुद्यम्य संरब्धतरमागतः।

मन्त्रवित् स्वस्त्ययनमन्त्रवेत्त्री। देवांशत्वात्तद्वेदनं ॥ १२ ॥ १३ ॥

सर्वतो दृष्टिं चारयन् स्थितइति शेषः ॥ १४ ॥

सुसंवीतं बद्धकच्छं अवष्टब्धं युयुत्सया दृढं भूमिमाक्रम्य स्थितं ॥ १५ ॥ १६ ॥

गाढं संवीतः दृढं बद्धकच्छः ॥ १७ ॥

सुग्रीवोऽपि वालिनं समुद्दिश्य श्लिष्टं दृढबद्धं मुष्टिमुद्यम्य किञ्चित् सम्मुखमागतः ॥ १८ ॥

सुग्रीवोऽपि समुद्दिश्य वालिनं हेममालिनम् ॥ १८ ॥
तं वाली क्रोधताम्राक्षं सुग्रीवं रणकोविदम् ।
आपतन्तं महावेगमिदं वचनमब्रवीत् ॥ १९ ॥
एष मुष्टिर्महान् बद्धो गाढः सुनियताङ्गुलिः ।
मया वेगविमुक्तस्ते प्राणानादाय यास्यति ॥ २० ॥
एवमुक्तस्तु सुग्रीवः क्रुद्धो वालिनमब्रवीत् ।
तव चैव हरन् प्राणान् मुष्टिः पततु मूर्धनि ॥ २१ ॥
ताडितस्तेन संक्रुद्धः समभिक्रम्य वेगतः ।
अभवच्छोणितोद्गारी सापीड इव पर्वतः ॥ २२ ॥
सुग्रीवेण तु निःसङ्गं सालमुत्पाट्य तेजसा ।
गात्रेष्वभिहतो वाली वज्रेणेव महागिरिः ॥ २३ ॥
स तु वृक्षेण निर्भग्नः सालताडनविह्वलः ।
गुरुभारभराक्रान्ता नौः ससार्थेव सागरे ॥ २४ ॥

वेगविमुक्तस्त्वदुपरीति शेषः ॥ २० ॥

एवमुक्तो वालिना । तव प्राणान् हरन्नेष मुष्टिर्मामकस्तव मूर्द्ध्नि पततु इत्यब्रवीत् ॥ २१ ॥

सुग्रीवमभिक्रम्याक्रम्य स्थितेन वालिना वेगतस्ताडितः सुग्रीवः सापीडः सनिर्झरः पर्वतइवाभवत् ॥ २२ ॥

निःसङ्गं शोणितोद्गारजदुःखसम्बन्धरहितं यथा तथाऽभिहतो वाली सागरे नौरिव विह्वलोऽभवत् ॥ २३ ॥ २४ ॥

तौ भीमबलविक्रान्तौ सुपर्णसमवेगितौ ।
प्रयुद्धौ घोरवपुषौ चन्द्रसूर्य्याविवाम्बरे ॥ २५ ॥
परस्परममित्रघ्नौ छिद्रान्वेषणतत्परौ ।
ततोऽवर्धत वाली तु बलवीर्य्यसमन्वितः ॥ २६ ॥
सूर्य्यपुत्रो महावीर्य्यः सुग्रीवः परिहीयत ।
वालिना भग्नदर्पस्तु सुग्रीवो मन्दविक्रमः ॥ २७ ॥
वालिनं प्रति सामर्षो दर्शयामास राघवं ।
वृक्षैः सशाखैः शिखरैर्वज्रकोटिनिभैर्नखैः ॥ २८ ॥
मुष्टिभिर्जानुभिः पद्भिर्बाहुभिश्च पुनःपुनः ।
तयोर्युद्धमभूद्घोरं वृत्रवासवयोरिव ॥ २९ ॥
तौ शोणिताक्तौ युध्येतां वानरौ वनचारिणौ ।
मेघाविव महाशब्दैस्तर्जमानौ परस्परं ॥ ३० ॥
हीयमानमथापश्यत्सुग्रीवं वानरेश्वरम् ।
प्रेक्षमाणं दिशश्चैव राघवः स मुहुर्मुहुः ॥ ३१ ॥

सुपर्णेन समं वेगितं वेगोययोस्तौ प्रकृष्टं युद्धं ययोस्तौ चन्द्रसूर्यौविवेति यद्यर्थातिशयोक्तिरेषा ॥ २५ ॥ २६ ॥

परिहीयत । अडभाव आर्षः ॥ २७ ॥

राघवं दर्शयामास स्वहानिमितिशेषः ॥ २८ ॥ २९ ॥

युद्धेतां अयुद्धेतां ॥ ३० ॥ ३१ ॥

ततो रामो महातेजा आर्त्तं दृष्ट्वा हरीश्वरं ।
स शरं वीक्षते वीरो वालिनो वधकाङ्क्षया ॥ ३२ ॥
ततो धनुषि सन्धाय शरमाशीविषोपमम् ।
पूरयामास तच्चापं कालचक्रमिवान्तकः ॥ ३३ ॥
तस्य ज्यातलघोषेण त्रस्ताः पत्ररथेश्वराः ।
प्रदुद्रुवुर्मृगाश्चैव युगान्त इव मोहिताः ॥ ३४ ॥
मुक्तस्तु वज्रनिर्घोषः प्रदीप्ताशनिसन्निभः ।
राघवेण महाबाणो वालिवक्षसि पातितः ॥ ३५ ॥
ततस्तेन महातेजा वीर्य्ययुक्तः कपीश्वरः ।
वेगेनाभिहतो वाली निपपात महीतले ॥ ३६ ॥
इन्द्रध्वज इवोद्धूतः पौर्णमास्यां महीतले ।
आश्वयुक्समये मासि गतसत्त्वो विचेतनः ॥ ३७ ॥
बाष्पसंरुद्धकण्ठस्तु वाली चार्त्तस्वरः शनैः ॥ ३८ ॥

स रामः शरं वीक्षते स्म ॥ ३२ ॥ ३३ ॥
पत्ररथाः पक्षिणः ॥ ३४ ॥
मुक्तो बाणः पातित इत्यर्थः ॥ ३५ ॥ ३६ ॥
आश्वयुक् समये आश्वयुक् अश्वयुजी पौर्णमासी यत्र मासे तस्मिन्नाश्विने मासि पौर्णमास्यामिन्द्रध्वजोत्सवान्ते उद्धूत उत्क्षिप्त इन्द्रध्वजो यथा भूमौ पपात तद्वद्वाली ग्रीष्मान्ते पतित इत्यर्थः । अतएव सुग्रीवाभिषेकसमये श्रावणो मासोऽधुना वर्त्तत इतिवचनेन न विरोधः ॥३७॥३८॥

नरोत्तमः कालइवात्तकोपमं
शरोत्तमं काञ्चनरूपभाषितम् ।
ससर्ज दीप्तं तममित्रमर्द्दनं
सधूममग्निं मुखतो यथा हरः ॥ ३९ ॥
अथोचितः शोणिततोयविस्रवैः
प्रपुष्पिताशोकइवाचलोद्गतः ।
विचेतनो वासवसूनुराहवे
प्रभ्रंशितेन्द्रध्वजवत् क्षितिङ्गतः ॥ ४० ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
षोड़शः सर्गः ॥ १६ ॥

उक्तमुपसंहरति । नरोत्तम इति । मुखतः मुखस्थललाटनेत्रेणे-त्यर्थः ॥३९॥

शोणिततोयस्य विस्रवैः स्रुतिभिः प्रभ्रंशित उत्खवान्त पातितः ॥४०॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे षोड़शः सर्गः ॥ १० ॥

---

## सप्तदशः सर्गः।

ततः शरणाभिहतो रामेण रणकर्कशः।
पपात सहसा वाली निकृत्यइव पादपः ॥ १ ॥
स भूमौ न्यस्तसर्वाङ्गस्तप्तकाञ्चनभूषणः।
अपतद्देवराजस्य मुक्तरश्मिरिव ध्वजः ॥ २ ॥
अस्मिन्निपतिते भूमौ हर्य्यृक्षाणां गणेश्वरे।
नष्टचन्द्रमिव व्योम न व्यराजत मेदिनी ॥ ३ ॥
भूमौ निपतितस्यापि तस्य देहं महात्मनः।
न ओर्जहाति न प्राणा न तेजो न पराक्रमः ॥ ४ ॥
शक्रदत्ता वरा माला काञ्चनी रत्नभूषिता।
दधार हरिमुख्यस्य प्राणांस्तेजः श्रियञ्च सा ॥ ५ ॥
स तया मालया वीरो हैमया हरियूथपः।
सन्ध्यानुगतपर्य्यन्तः पयोधरइवाभवत् ॥ ६ ॥

ततइति ॥ १ ॥
मुक्तरश्मिः मुक्तरथरज्जुबन्धनः ॥ २ ॥
मेदिनी तद्राज्यभूमिः ॥ ३ ॥ ४ ॥
प्राणाद्यहाने कारणमाह। शक्रेति ॥ ५ ॥
हैमया हैम्या सन्ध्यया सन्ध्यारागेणानुगतः पर्यन्तो यस्य। पयोधरसाम्यन्तु त्वविलिदेहस्य ॥ ६ ॥



तस्य माला च देहश्च मर्म्मघाती च यः शरः।
त्रिधेव रचिता लक्ष्मीः पतितस्यापि शोभते ॥ ७ ॥
तदस्त्रन्तस्य वीरस्य स्वर्गमार्गप्रभावनम्।
रामबाणासनक्षिप्तमावहत्परमां गतिम् ॥ ८ ॥
तं तथा पतितं सङ्ख्ये गतार्चिषमिवानलं।
ययातिमिव पुण्यान्ते देवलोकादिह च्युतम् ॥ ९ ॥
आदित्यमिव कालेन युगान्ते भुवि पातितम्।
महेन्द्रमिव दुर्द्धर्षमुपेन्द्रमिव दुःसहम् ॥ १० ॥
महेन्द्रपुत्रं पतितं वालिनं हेममालिनम्।
व्यूढोरस्कं महाबाहुं दीप्तास्यं हरिलोचनम् ॥ ११ ॥
लक्ष्मणानुचरो रामो ददर्शोपससर्प च।
तं तथा पतितं वीरं गतार्चिषमिवानलम् ॥ १२ ॥

त्रिधा रचितेव त्रिधा विभक्तेव मालादेहशररूपा लक्ष्मीरिति यावत् ॥ ७ ॥

स्वर्गमार्गप्रभावनं तत्प्रकाशकं सत् परमां गतिं ब्रह्मलोकमावहत् प्रापयति स्म। बाणा अस्यन्तेऽनेनेति बाणासनं धनुः ॥ ८ ॥

महेन्द्रं उपेन्द्रमिव वृत्रवधोत्तरमिदं नामेत्येके। महेन्द्र आजानदेवः। उपेन्द्रः कर्मदेव इत्यन्ये ॥ १० ॥

हरिलोचनं पीतनेत्रं हरित् शब्दः पीतपर्य्यायः। हरिद्राभः पालाशो हरितो हरिदिति कोशः। आर्षस्तलोपः ॥ ११ ॥ १२ ॥

बहुमान्य च तं वीरं वीक्षमाणं शनैरिव।
उपयातौ महावीर्य्यौ भ्रातरौ रामलक्ष्मणौ ॥ १३ ॥
तं दृष्ट्वा राघवं वाली लक्ष्मणञ्च महाबलम्।
अब्रवीत्परुषं वाक्यं प्रश्रितं धर्म्मसंहितम् ॥ १४ ॥
स भूमावल्पतेजोसुर्निहतो नष्टचेतनः।
अर्थसंहितया वाचा गर्वितं रणगर्वितम् ॥ १५ ॥
पराङ्मुखवधं कृत्वा कोऽत्र प्राप्तस्त्वया गुणः।
यदहं युद्धसंरब्धस्त्वत्कृते निधनं गतः ॥ १६ ॥
कुलीनः सत्त्वसम्पन्नस्तेजस्वी चरितव्रतः।
रामः करुणवेदी च प्रजानाञ्च हिते रतः ॥ १७ ॥
सानुक्रोशो महोत्साहः समयज्ञो दृढव्रतः।
इत्येतत्सर्व्वभूतानि कथयन्ति यशोभुवि ॥ १८ ॥

बहुमान्य सम्मान्य शनैरेव उपयातौ समीपं गतौ ॥ १३ ॥ १४ ॥

अल्पं तेजोऽसवश्च यस्य सः नष्टचेतनः नष्टचेष्टः गर्वितं गर्वोपेतं यथा भवति तथा रणगर्वितं राममर्थयुक्तया वाचा परुषमब्रवीदित्यन्वयः ॥ १५ ॥

पराङ्मुखवधं युयुत्सया त्वदनभिमुखं। तदेवाह युद्धसंरब्धः युद्धार्थमन्यस्मै कृतक्रोधः ॥ १६ ॥ १७ ॥

समयज्ञः उचितानुचितकालज्ञः ॥ १८ ॥

दमः शमः क्षमा धर्म्मो धृतिः सत्यं पराक्रमः ।
पार्थिवानां गुणा राजन् दण्डश्चाप्यपकारिषु ॥ १९ ॥
तान् गुणान् सम्प्रधार्य्याहमग्र्यञ्चाभिजनन्तव ।
तारया प्रतिषिद्धः सन् सुग्रीवेण समागतः ॥ २० ॥
न मामन्येन संरब्धं प्रमत्तं वेद्धुमर्हसि ।
इति ते बुद्धिरुत्पन्ना बभूवादर्शने तव ॥ २१ ॥
स त्वां विनिहतात्मानं धर्म्मध्वजमधार्म्मिकं ।
जाने पापसमाचारं तृणैः कूपमिवावृतं ॥ २२ ॥
सतां वेषधरं पापं प्रच्छन्नमिव पावकम् ।
नाहं त्वामभिजानामि धर्म्मच्छद्माभिसंवृतं ॥ २३ ॥
विषये वा पुरे वा ते यदा पापं करोम्यहम् ।
न च त्वामवजानेऽहं कस्मात्त्वं हंस्यकिल्बिषं ॥ २४ ॥

दमशमावन्तर्बाह्येन्द्रियनिग्रहः क्षमा शक्यप्रतिक्रियाऽपकार सहिष्णुता ॥ १९ ॥

तान्राजयोग्यान् । अभिजनं महाकुलप्रसूतत्वं ॥ २० ॥

अन्येन संयुक्तमतएव ते त्वयि प्रमत्तमसावधानं मां न वेद्धुमर्हसीति बुद्धिः तवादर्शने तव दर्शनात् प्रागुत्पन्ना ॥ २१ ॥

विनिहतात्मानं अधर्म्माचरणान्नष्टात्मानं ॥ २२ ॥

प्रच्छन्नं भस्मनेति शेषः । छद्म व्याजः ॥ २३ ॥

राजहा ब्रह्महा गोघ्नश्चौरः प्राणिवधे रतः ।
नास्तिकः परिवेत्ता च सर्व्वे निरयगामिनः ॥ ३६ ॥
सूचकश्च कदर्य्यश्च मित्रघ्नो गुरुतल्पगः ।
लोकं पापात्मनामेते गच्छन्ति नात्र संशयः ॥ ३७ ॥
अधार्य्यञ्चर्म्म मे सद्भीरोमाण्यस्थि च वर्जितं ।
अभक्ष्याणि च मांसानि त्वद्विधैर्धर्म्मचारिभिः ॥ ३८ ॥
पञ्चपञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव ! ।
शल्यकः श्वाविधो गोधा शशः कूर्म्मश्च पञ्चमः ॥ ३९ ॥

अपचितिः पूजा । कामवृत्तः सन्निन्द्रियैः ह्रष्यसे इति सम्बन्धः ॥ ३४ ॥ ३५ ॥

परिवेत्ता ज्येष्ठेऽकृतदारेऽकृताग्निहोत्रे च कृतदारः कृताग्निहोत्रोनुजः ॥ ३६ ॥

गच्छन्ते गच्छन्ति तेषु प्रकृते राजहत्वं दोषो बोध्यः ॥ ३७ ॥

यद्यपि क्षत्रियस्य मृगहननमप्यस्ति तथापि मद्विषयमिदमप्रयोजनमित्याह । अधार्य्यमिति । वर्जितं अस्पृश्यत्वेन स्मृतिषूक्तमित्यर्थः ॥ ३८ ॥

अभक्ष्याणीत्यत्र प्रमाणमाह । पञ्चपञ्चेत्यादि । ब्रह्मक्षत्रेणेति समाहारद्वन्द्वः । शल्यकः खड्गी सूक्तिकाकार शल्यावृतसर्व्वाङ्गो जन्तुविशेष इत्यन्ये । श्वाविधः कण्टकाकारदीर्घरोमभिः श्वनां वेधको जन्तुः ॥ ३९ ॥

चर्म्म चास्थि च मे राम ! न स्पृशन्ति मनीषिणः ।
अभक्ष्याणि च मांसानि सोऽहं पञ्चनखो हतः ॥ ४० ॥
तारया वाक्यमुक्तोऽहं सत्यं सर्वज्ञया हितं ।
तदतिक्रम्य मोहेन कालस्य वशमागतः ॥ ४१ ॥
त्वया नाथेन काकुत्स्थ ! न सनाथा वसुन्धरा ।
प्रमदा शीलसम्पूर्णा पत्येव च विधर्म्मणा ॥ ४२ ॥
शठो नैकृतिकः क्षुद्रो मिथ्याप्रश्रितमानसः ।
कथं दशरथेन त्वं जातः पापो महात्मना ॥ ४३ ॥
छिन्नचारित्रकक्ष्येण सतां धर्म्मातिवर्त्तिना ।
त्यक्तधर्म्माङ्कुशेनाहं निहतो रामहस्तिना ॥ ४४ ॥
अशुभञ्चाप्ययुक्तञ्च सताञ्चैव विगर्हितम् ।
वक्ष्यसे चेदृशं कृत्वा सद्भिः सह समागतः ॥ ४५ ॥

सोऽहं पञ्चनखो हतः अभक्ष्य पञ्चनखो हत इत्यर्थः ॥ ४० ॥ ४१ ॥

त्वन्तु न राज्यार्ह इत्याह त्वयेति ॥ ४२ ॥

शठो गूढविप्रियकृत्। निकृतिं परापकारं चरतीति नैकृतिकः। मिथ्यैव प्रश्रितं मानसं यस्य सः अजितान्तःकरण इति यावत् ॥ ४३ ॥

छिन्ना चारित्रस्य कक्ष्या मर्य्यादा येन स तथा। सतां धर्म्ममतिक्रान्तेन ॥ ४४ ॥

वक्ष्यसे किम्वक्ष्यसीत्यर्थः। किमित्यध्याहारः ॥ ४५ ॥

उदासीनेषु योऽस्मासु विक्रमोऽयं प्रकाशितः।
अपकारिषु ते राम! नैवं पश्यामि विक्रमम् ॥ ४६ ॥
दृश्यमानस्तु युध्येथा मया युधि नृपात्मज!।
अद्य वैवस्वतन्देवं पश्येस्त्वं निहतो मया ॥ ४७ ॥
त्वयाऽदृश्येनतु रणे निहतोऽहं दुरासदः।
प्रसुप्तः पन्नगेनेव नरः पापवशङ्गतः ॥ ४८ ॥
सुग्रीवप्रियकामेन यदहं निहतस्त्वया।
मामेव यदि पूर्व्वं त्वमेतदर्थमचोदयः॥
मैथिलीमहमेकाह्ना तव चानीतवान् भवेः॥ ४९ ॥
राक्षसञ्च दुरात्मानं तव भार्य्यापहारिणम्।
कण्ठे बध्वा प्रदद्यान्तेऽनिहतं रावणं रणे ॥ ५० ॥
न्यस्तां सागरतोये वा पाताले वापि मैथिलीं।
आनयेयन्तवादेशाच्छ्वेतामश्वतरीमिव ॥ ५१ ॥

अपकारिषु दारापहारिषु ॥ ४६ ॥ ४७ ॥

अदृश्येन अप्राप्तदर्शनेन त्वया पन्नगवन्निहतः। अतस्त्वं पापवशङ्गत इत्यर्थः ॥ ४८ ॥

एतदर्थं सीताया आहरणमुद्दिश्य मामेव पूर्व्वं प्राप्य यद्यचोदयः तदा तव मैथिलीमहमेकाह्नानीतवान् भवेः भवेयमिति यावत् ॥ ४९ ॥

अनिहतं अनिहतमेवेत्यर्थः ॥ ५० ॥

फलमूलाशनं नित्यं वानरं वनगोचरं ।
मामिहाप्रतियुद्धन्तमन्येन च समागतम् ॥ २५ ॥
त्वं नराधिपतेः पुत्रः प्रतीतः प्रियदर्शनः ।
लिङ्गमप्यस्ति ते राजन् ! दृश्यत धर्म्मसंहितम् ॥ २६ ॥
कः क्षत्रियकुले जातः श्रुतवान्नष्टसंशयः ।
धर्म्मलिङ्गप्रतिच्छन्नः क्रूरं कर्म्म समाचरेत् ॥ २७ ॥
त्वं राघवकुले जातो धर्म्मवानिति विश्रुतः ।
अभव्योभव्यरूपेण किमर्थं परिधावसे ॥ २८ ॥
साम दानं क्षमा धर्म्मः सत्यं धृतिपराक्रमौ ।
पार्थिवानां गुणा राजन् ! दण्डश्चाप्यपकारिषु ॥ २९ ॥
वयं वनचरा राम ! मृगा मूलफलाशिनः ।
एषा प्रकृतिरस्माकं पुरुषस्त्वं नरेश्वर ! ॥ ३० ॥

विषये देशे यदा यस्मात्पापं न करोमि मेत्यस्यानुकर्षः । त्वां नावजाने तवावज्ञाञ्च न करोमि ॥ २४ ॥ २५ ॥

लिङ्गं जटावल्कलधरत्वं अस्ति मद्धिंसासाधनमिति शेषः । तच्च प्रत्यक्षदृश्यमेवेत्याह । दृश्यत इति ॥ २६ ॥ २७ ॥

अभव्योऽविनीतः ॥ २८ ॥ २९ ॥

एषा वनचरत्वादि रूपा प्रकृतिः स्वभावः पुरुषस्त्वं तेन ग्रामवासित्वादमाशित्वं चोक्तं ॥ ३० ॥

भूमिर्हिरण्यं रूपञ्च निग्रहे कारणानि च।
तत्र कस्ते वने लोभो मदीयेषु फलेषु वा ॥ ३१ ॥

नयश्च विनयश्चोभौ निग्रहानुग्रहावपि।
राजवृत्तिरसंकीर्णा न नृपाः कामवृत्तयः ॥ ३२ ॥

त्वं तु कामप्रधानश्च कोपनश्चानवस्थितः।
राजवृत्तेषु संकीर्णः शरासनपरायणः ॥ ३३ ॥

न तेऽस्त्यपचितिर्धर्म्मे नार्थे बुद्धिरवस्थिता।
इन्द्रियैः कामवृत्तः सन् कृष्यसे मनुजेश्वरः ॥ ३४ ॥

हत्वा बाणेन काकुत्स्थमामिहानपराधिनम्।
किं वच्यसि सतां मध्ये कर्म्म कृत्वा जुगुप्सितम् ॥ ३५ ॥

रूपं रूप्यं कारणानि चेत्याऊरिति शेषः। वने विद्यमानेषु मदीयेषु मूलेषु फलेषु वा कस्ते लोभ अपेक्षा न कापीत्यर्थः। एवञ्च वनचरत्व पुरचरत्व छगत्व मनुष्यत्व मूलाशनत्वान्नाशनत्व नरेश्वरत्व वानरेश्वरत्व रूपवैषम्यं आवयोर्विरोधप्रसक्तिरिति भावः ॥ ३१ ॥

नयोनीतिर्विनयः प्रश्रयः असंकीर्णा निग्रहानुग्रहादिविषये विपरीता ॥ ३२ ॥

शरासनपरायणः। यत्र क्वापि शराणामसनं त्यागस्तत्परायणः ॥ ३३ ॥

युक्तं यत् प्राप्नुयाद्राज्यं सुग्रीवः स्वर्गते मयि ।
अयुक्तं यदधर्म्मेण त्वयाहं निहतो रणे ॥ ५२ ॥
काममेवंविधो लोकः कालेन विनियुज्यते ।
क्षमञ्चेद्भवता प्राप्तमुत्तरं साधु चिन्त्यतां ॥ ५३ ॥

इत्येवमुक्त्वा परिशुष्कवक्त्रः
शराभिघाताद्व्यथितो महात्मा ।

सागरतोये तन्मध्यवर्त्ति द्वीपे श्वेतामश्वतरीमिव श्वेताश्वतरीरूपिणीं श्रुतिं । मधुकैटभाभ्यां पाताले निगृहीतां यथा हयग्रीवोऽभ्युद्धमानयति स्म तद्वत् ॥ ५१ ॥ ५२ ॥

लोकः सर्व्वोऽपि कालेन कालधर्म्मेण मृत्युना विनियुज्यते एवंविधस्वभावः काममस्तु तस्मान्मे मरणकृतो न विवादः अपितु भवता राज्यं प्राप्तञ्चेत्तदा मद्वधकारणस्य त्वद्राज्यस्य लोकैः प्रश्ने क्षमं युक्तमुत्तरं साधु सम्यग्विचिन्त्यतां ॥ ५३ ॥

उपसंहरति । इत्येवमिति । अस्य सर्गस्य तात्पर्येण रामस्तुतिपरतया यद्योजनं तत्र कविनिबद्धस्य वक्तुर्वालिनस्तात्पर्यविषयभूतं । यदयुक्तं मया पूर्वं प्रमादाद्वाक्यमप्रियं । तत्रापि खलु मे दोषं कर्त्तुं नार्हसि राघवेत्यग्रे वाल्युक्तेः । नापि वाल्मीकेः तस्य दुरुक्त्यनुवादकत्वात् । अतात्पर्यविषयमपि बुद्धिवैभवादक्षरार्थत्वेन वर्ण्यत इति-

समीक्ष्य रामं रविसन्निकाशं
तूष्णीं बभौ वानरराजसूनुः ॥ ५४ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
सप्तदशः सर्गः ॥ १७ ॥

---

चेत्ताध्यान्तरमेव भगवतस्तावकं क्रियतां किमनेन प्रयासेनेति दिक् ॥ ५४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे सप्तदशः सर्गः ॥ ११ ॥

# अष्टादशः सर्गः ।



इत्युक्तः प्रश्रितं वाक्यं धर्मार्थसहितं हितम् ।
परुषं वालिना रामो निहतेन विचेतसा ॥ १ ॥
तं निष्प्रभमिवादित्यं मुक्ततोयमिवाम्बुदं ।
उक्तवाक्यं हरिश्रेष्ठमुपशान्तमिवानलम् ॥ २ ॥
धर्मार्थगुणसम्पन्नं हरीश्वरमनुत्तमं ।
अधिक्षिप्तस्तदा रामः पश्चाद्वालिनमब्रवीत ॥ ३ ॥
धर्ममर्थञ्च कामञ्च समयञ्चापि लौकिकम् ।
अविज्ञाय कथं वाल्यान्मामिहाद्य विगर्हसे ॥ ४ ॥

प्रश्रितं प्रश्रयाभासोपेतं एवं धर्मार्थसहितत्वञ्चाभासरूपमेव । त्वमामेव यदि पूर्वमित्यादि हिताभासः अर्थाभासश्च धर्माभासोराज॰ इत्यादि परुषत्वं तु मुख्यमेव । निहतेन विद्धेन ॥ १ ॥

धर्मार्थगुणसम्पन्नमित्यब्रवीदिति क्रियाविशेषणं अधिक्षिप्तः परुषमुक्तः ॥ ३ ॥

लौकिकं समयं लोकाचारं ॥ ४ ॥

अपृष्ट्वा बुद्धिसम्पन्नान् वृद्धानाचार्य्यसम्मतान्।
सौम्यं वानरचापल्यात्त्वं मां वक्तुमिहेच्छसि॥ ५॥
इक्ष्वाकूणामियं भूमिः सशैलवनकानना।
मृगपक्षिमनुष्याणां निग्रहानुग्रहेष्वपि॥ ६॥
तां पालयति धर्म्मात्मा भरतः सत्यवागृजुः।
धर्म्मकामार्थतत्त्वज्ञो निग्रहानुग्रहे रतः॥ ७॥
नयश्च विनयश्चोभौ यस्मिन् सत्यश्च सुस्थितं।
विक्रमश्च यथादृष्टः स राजा देशकालवित्॥ ८॥
तस्य धर्म्मकृतादेशा वयमन्ये च पार्थिवाः।
चरामो वसुधां कृत्स्नां धर्म्मसन्तानमिच्छवः॥ ९॥

अविज्ञाने हेतुमाह। अपृष्टेति। आचार्यसम्मतान् स्वस्वकुलाचार्यशिक्षकान्। वानरत्वादेवैतदभावः। वानरत्वप्रयुक्तचापल्यादेवं वादस्त्वेत्यर्थः। इच्छसि शेषौ॥ ५॥

इयं भूमिरिक्ष्वाकूणां मनुनास्मत्कुलकूटस्थेन दत्तेत्यर्थः। तथा मृगादिपर्य्यन्तं निग्रहानुग्रहेष्वधिकारोऽपि दत्त इति शेषः॥ ६॥

तां पितृपितामहादिक्रमागतां भुवं निग्रहानुग्रहे दुष्टशिष्टयोरिति शेषः॥ ७॥

यथादृष्टः अपरोक्षानुभवसिद्धः स राजा अस्मिन् काले सर्व्वभूमेरिति शेषः॥ ८॥

ततः किं तत्राह तस्येति। धर्माय कृत आदेशो नियोगो येषां ते धर्म्मसन्तानं धर्म्मवृद्धिं। धर्म्मपदमधर्मनिवृत्तेरप्युपलक्षणं॥ ९॥

यस्मिन्नृपतिशार्दूले भरते धर्म्मवत्सले ।
पालयत्यखिलां पृथ्वीं कश्चरेद्धर्म्मविप्रियं ॥ १० ॥
ते वयं मार्गविभ्रष्टं स्वधर्म्मे परमे स्थिताः ।
भरताज्ञां पुरस्कृत्य चिन्तयामो यथाविधि ॥ ११ ॥
त्वन्तु संक्लिष्टधर्म्मश्च कर्म्मणा च विगर्हितः ।
कामतन्त्रप्रधानश्च न स्थितो राजवर्त्मनि ॥ १२ ॥
ज्येष्ठो भ्राता पिता वापि यश्च विद्यां प्रयच्छति ।
त्रयस्ते पितरो ज्ञेया धर्म्मे च पथि वर्त्तिनः ॥ १३ ॥
यवीयानात्मनः पुत्रः शिष्यश्चापि गुणोदितः ।
पुत्रवत्ते त्रयश्चिन्त्या धर्म्मश्चवात्र कारणम् ॥ १४ ॥

धर्म्मविप्रियं धर्म्मनाशं कश्चरेत् आचरितुं शक्नुयात् ॥ १० ॥

ते वयमिदानींतनमूलप्रभुभरताज्ञया मार्गविभ्रष्टं चिन्तयामः विचारयामः । निग्रह्णीम इति पाठान्तरम् ॥ ११ ॥

ततः किं तत्राह । त्वन्तु कर्म्मणा चारित्रेण गर्हितः लोके निन्दितः अतएव संक्लिष्टः पीड़ितो धर्म्मो येन तादृशः कामतन्त्रं कामरूपः पुरुषार्थः स एव प्रधानो मुख्यो यस्य ॥ १२ ॥

तदुपपादयति । ज्येष्ठइति । विद्यां त्रयगादिविद्यां धर्म्मे च पथि वर्तिनः धर्म्ममार्गे वर्त्ता वर्तनं यस्य तस्य ॥ १३ ॥

अत्र चिन्तने तथा धर्म्मो धर्म्मज्ञानमेव कारणं ॥ १४ ॥

सूक्ष्मः परमविज्ञेयः सतां धर्म्मः प्लवङ्गम ! ।
हृदिस्थः सर्वभूतानामात्मा वेद शुभाशुभं ॥ १५ ॥
चपलश्चपलैः सार्धं वानरैरकृतात्मभिः ।
जात्यन्ध इव जात्यन्धैर्मन्त्रयन् प्रेक्षसे नु किम् ॥ १६ ॥
अहं तु व्यक्ततामस्य वचनस्य ब्रवीमि ते ।
न हि मां केवलं रोषात्त्वं विगर्हितुमर्हसि ॥ १७ ॥

तच्च न सर्व्वेषां सुलभमित्याह । सूक्ष्म इति । सतां सूक्ष्मो यो धर्मः स परा सदुत्पदेशादिजा मा शोभा येषान्तैरेव विज्ञेयोऽन्यैः परमत्यर्थमविज्ञेय एव । किञ्चेश्वर एव तज्ज्ञ इत्याह । हृदिस्थ इति । सर्व्वभूतानामात्मा तत्त्वभूतो व्यापकत्वादतएव सर्वप्राणिहृदिस्थः स सर्वभूतानां सर्वप्राणिनां शुभाशुभं वेद । एवञ्चान्तर्यामित्वञ्चाव पापमहं जाने इति व्यङ्ग्यमत्र ॥ १५ ॥

त्वन्तु धर्मज्ञानप्रसक्तिहीन एवेत्याह । चपल इति । जात्यन्धो जात्यन्धैरिव चपलैरकृतात्मभिराचार्यगाशिक्षितैर्वानरैः सह मन्त्रयन्निश्चिन्वन् किन्नु कथं नु प्रेक्षसे ज्ञास्यसि धर्म्ममितिशेषः । रक्षसे नु किमिति पाठे रक्षणीयप्रजाजातं किं नु रक्षसि न किमपि । अतो धर्म्मभ्रष्टो राजदण्ड्यस्त्वमिति भावः ॥ १६ ॥

अथ धर्म्मभ्रष्टत्वं व्यक्तमेव वक्तुमाह । अहन्त्विति । अस्य वचनस्य चपलश्चपलैरिति वचनस्य व्यक्ततां व्यक्तोऽर्थो यस्येति अर्श आद्यजन्तं। व्यक्तपदं तद्भावो व्यक्तता तदर्थकं ब्रवीमि ॥ १७ ॥

तदेतत् कारणं पश्य यदर्थं त्वं मया हतः।
भ्रातुर्वर्त्तसि भार्य्यायां त्यक्त्वा धर्म्मं सनातनं ॥ १८ ॥
अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः।
रुमायां वर्त्तसे कामात् स्नुषायां पापकर्म्मकृत् ॥ १९ ॥

पश्य युक्तमयुक्तं वेति चिन्तय। वर्त्तसि वर्त्तसे ॥ १८ ॥

ननु भ्रातुर्ज्येष्ठस्य यो भार्य्यां जीवतो महिषीं प्रियां। धर्म्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः। इति अग्रे प्रायोपवेशसमये अङ्गदोक्तेः सुग्रीवस्यापि ज्येष्ठभ्रातुः पितृसमस्य भार्य्याभिमर्षणं तुल्यमित्यत आह। अस्य त्वमिति। धरमाणस्य प्राणान् धारयत एव जीवतस्त्वया निस्वीयमानजीवनस्यैव पत्न्यां तव स्नुषाभूतायां रुमायां यतो- वर्त्तसेऽतस्त्वं स्पष्टं पापकर्म्मकृत्। सुग्रीवस्तु तव जीवननिश्चयाभावात्त्वत्पत्न्यां तारायां प्रागवर्त्तिष्ट अतःपरं वर्त्स्यतीति च। किञ्च त्रैवर्णिकेष्वपि देवरस्य, मृतभ्रातृस्त्रियामपुत्रायां वृत्तिदर्शनात्तिर्य्यग्योनिषु तस्यां वृत्तिर्न दोषः। तथा वृत्तौ च मरणज्ञानमेव प्रयोजकं तिर्य्यक्ष्विति भगवदाशयः। अनेन त्रैवर्णिकेतरस्त्रीणां मृतभर्त्तृकाणां तरुणीनां स्वजातीयपुरुषाङ्गीकारो नाधर्म इति सूचितं। दृश्यते च तथा व्यवहारः शूद्रादि जातौ। न च मनुष्याधिकारस्य निषेधादिशास्त्रस्य कथं तिर्य्यक्षु प्रवृत्तिरिति वाच्यं। तिर्य्यग्योनेरपि मनुष्यवद्राजादिव्यवहारदर्शनेन मनुष्यतुल्यज्ञानवत्त्वादस्यैवायं दोष इत्याशयात्। किञ्च धर्म्मेऽनधिकारिणामपीन्द्रादीनां वृत्रवधादौ ब्रह्महत्यादि दोषस्मरणेन निषेधेषु तदतिक्रमप्रायश्चित्तादौ च देवाना-

तद्गतीतस्य ते धर्मात्कामवृत्तस्य वानर !।
भ्रातृभार्य्याभिमर्षेऽस्मिन् दण्डोयं प्रतिपादित: ॥ २० ॥

मधिकारवदेषामप्यधिकारे बाधकाभावः। किञ्च देवादीनां स्वयजनीयेन्द्राद्यन्तराभावादनधिकार इति पूर्व्वमीमांसायां निर्णीतं। एवञ्च तद्व्यपेक्ष दानादि धर्मेषु ब्रह्मविद्यायाञ्चाधिकारोऽस्त्येवेत्युत्तरमीमांसायां स्पष्टं। तद्वदीदृशानां ज्ञानवतां तिरश्चामप्यधिकारे बाधकाभावः। किञ्च सर्वे देवतावाचकपदानामन्तर्यामीश्वरवाचकत्वेन सर्वत्र देवानामधिकारोऽस्त्येव। न च ब्राह्मणत्वाद्यभावात्तेषामनधिकारः तेषामपि क्षत्रियत्वात् वैवस्वतमन्वादेरिवातएव चन्द्रवरुणादीनां यज्ञः स्मर्य्यते। पुराणेषु तत्र तत्र कर्म्मण्यर्थवादत: फलकल्पनवत् पुराणस्यार्थवादैस्तदधिकारस्यापि कल्पयितुं युक्तत्वात्। किञ्च त्रैवर्णिकस्याधिकार इत्यत्र त्रैवर्णिकपदं वेद तदर्थज्ञानवत् परमतो देवादीनां तदधिकारः सिद्ध इति भगवतो व्यस वाल्मीकि प्रभृतीनां चाशयः। जैमिनेस्त्वेतदंशेऽज्ञानमेव। अतएव तद्दूरीकरणार्थं मार्कण्डेयेनात्मानं प्रति धर्म्मान् पृच्छतो जैमिनेर्विंध्यारण्यवासि तत्त्वज्ञ पक्षिमुखेन धर्मबोधनं कृतं तेन हि पक्षिणां ज्ञानानधिकार इतिस्वोक्तेः तस्याविश्वासे जातेऽन्यत्रापि व्यासादि विरुद्धे स्वोक्त्यर्थे तस्याप्रामाण्यग्रहो भविष्यतीति तदाशयः इत्यन्यत्र विस्तर:। अतएव गृध्रराजस्य भगवता दाहादि कृतं। अयमेव सम्पातिना तद्भ्रात्रा करिष्यमानमुदकदानानि नासङ्गतमिति दिक् ॥ १९ ॥

उपसंहरति। तदिति। तत्तस्माद्धर्म्मादतीतस्य च धर्म्मभ्रष्टस्य एवञ्चेदृशे व्यवहारे प्रायान्तोदण्ड इति सूचितं ॥ २० ॥

न हि लोकविरुद्धस्य लोकवृत्तादपेयुषः ।
दण्डादन्यत्र पश्यामि निग्रहं हरियूथप ! ॥ २१ ॥
न च ते मर्षये पापं क्षत्रियोऽहं कुलोद्गतः ।
औरसीं भगिनीं वापि भार्य्यां वाप्यनुजस्य यः ॥ २२ ॥
प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः ।
भरतस्तु महीपालो वयं त्वादेशवर्त्तिनः ॥ २३ ॥
त्वञ्च धर्म्मादतिक्रान्तः कथं शक्यमुपेक्षितुं ।
गुरुधर्म्मव्यतिक्रान्तं प्राज्ञो धर्म्मेण पालयन् ॥ २४ ॥
भरतः कामयुक्तानां निग्रहे पर्य्यवस्थितः ।
वयं तु भरतादेशावधिं कृत्वा हरीश्वर ! ॥
त्वद्विधान् भिन्नमर्य्यादान्निगृहीतुं व्यवस्थिताः ॥ २५ ॥

लोकवृत्तात् लोकव्यवहारमर्य्यादातः अपेयुषोऽपगतवतः । दण्डादन्यत्र ततोऽन्यमित्यर्थः । केचित्तु अनेन तिर्य्यग्योनिव्यवहारमर्य्यादाप्येवेवेति ध्वनितं । दृश्यते च गृहे पाल्यमानेषु पारावतादिषु अन्यं स्वभार्य्यासहितं दृष्टवत्सु परस्परं युद्धं भार्य्याया बहुप्रकारताडनादिरंड- इत्याहुः ॥ २१ ॥

क्षत्रियोऽहं दण्डाधिकारीत्यर्थः । दण्डादन्यत्र निग्रहं न पश्यामीत्युक्तार्थे स्मृतिं प्रमाणयति । औरसीमिति ॥ २२ ॥ २३ ॥

गुरुर्महान् यो धर्मस्तं व्यतिक्रान्तं तत्प्रच्युतं निघ्नन्निति शेषः । प्राज्ञो- विद्वान् धर्म्मेण पालयन् । धर्मयुक्तमिति शेषः ॥२४ ॥

भरतादेशावधिं कृत्वा भरतादेशं तदाज्ञामवधिं प्रमाणं कृत्वा ।

सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा तथा।
दारराज्यनिमित्तञ्च निःश्रेयसकरः स मे ॥ २६ ॥
प्रतिज्ञा च मया दत्ता तदा वानरसन्निधौ।
प्रतिज्ञा च कथं शक्या मद्विधेनानवेक्षितुम् ॥ २७ ॥
तदेभिः कारणैः सर्वैर्महद्भिर्धर्मसंश्रितैः।

ननु भरतेन रामं प्रत्याज्ञाया अकृतत्वान्नृपोक्तिरेवेतिचेन्न अस्मादेव भगवद्वाक्यात्तथाभरतोक्तेरनुमानेनाप्ततः। यद्वा राज्यमूलप्रभौ पर्यवस्थिते सर्वेषां तदीयानां दण्डदण्डनादावनुज्ञापि तदाज्ञा सिद्धैवेति न दोषः। अपि च स्वराज्ये भगवता भरतस्य पालनाज्ञायां दत्तायामर्थात् स्वस्मिन् प्रधानराजपुरुषत्वसिद्धौ तदाज्ञाऽर्थसिद्धैवेति न दोषः ॥ २५ ॥

अथ कारणान्तरमपि वालिवधे दर्शयति। सुग्रीवेणेति। लक्ष्मणेन यथा तथा सुग्रीवेणापि मम सख्यमस्ति यस्मात्ततः स सुग्रीवः दारराज्यनिमित्तं स्वदारप्राप्त्यर्थं राज्यप्राप्त्यर्थञ्च मे मम निःश्रेयसकरः मन्निःश्रेयसविषये कृतप्रतिज्ञः ॥ २६ ॥

तत्प्रतिज्ञोत्तरं मयापि तदभिमतविषया प्रतिज्ञा दत्ता कृता च सा प्रतिज्ञा मद्विधेन कथमनवेक्षितुमसमापयितुं शक्या ॥ २७ ॥

एभिः उक्तैः कारणैः एकैकमेव तव वधे पर्याप्तं किं पुनर्मिलितानि। तस्मात् यत्तव मया शासनमिदं कृतं तद्युक्तं शास्त्रसंमतमिति भवानप्यनुमन्यतां चिन्तयतु। तव भ्रातृभार्यापहारकत्वेन दण्ड्यत्वात्स-

शासनन्तव यद्युक्तं तद्भवाननुमन्यताम् ॥ २८ ॥
सर्वथा धर्म इत्येव द्रष्टव्यस्तव निग्रहः।
वयस्यस्योपकर्त्तव्यं धर्ममेवानुपश्यता ॥ २९ ॥
शक्यं त्वयापि तत्कार्य्यं धर्ममेवानुवर्त्तता।
श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ ॥
गृहीतौ धर्मकुशलैस्तथा तच्चरितं मया ॥ ३० ॥

स्वकार्यस्य स्वकार्यत्वात्। क्षत्रियस्य प्रतिज्ञाहानौ च महतोऽधर्मस्य श्रवणात्त्वद्वधो मे आवश्यकोधर्मस्येत्याशयः ॥ २८ ॥

सर्व्वथा मया यः कृतः तव निग्रहः स धर्म एवेति त्वया द्रष्टव्यः। दुष्टनिग्रहफलकत्वादवतारग्रहणस्येत्याशयोगूढः। किञ्च धर्ममेवानुपश्यता जानता मित्रस्योपकर्तव्यं मित्रोपकारकरणमपि धर्म एवेति सुग्रीवोपकाररूपत्वाद्वधस्य धर्मत्वमिति भावः ॥ २९ ॥

किंचानुतापादिना धर्ममनुवर्तता एतद्दुष्कर्मप्रायश्चित्तरूपधर्मानुवृत्तिं कुर्वता त्वयापि तत्कार्यं मत्कृतनिग्रहरूपं कार्यं शक्यं राजप्रार्थनापूर्व्वं कारयितुं शक्यं। सत्यनुतापे त्वया प्रार्थनापूर्वमयं दण्डः स्वस्य कारणीय एवेति त्वत्करणीयस्यैव मया कृतत्वान्नात्र क्षोभः कार्य इति भावः। पापिनामेवं स्वदण्डप्रार्थना स्मृतिसिद्धत्वाच्च। श्रूयते इति। चारित्रवत्सलौ चरित्रसम्पादनतत्परौ। धर्मकुशलैर्गृहीतौ च भवतस्तत्तदर्थतत्त्वमेव तथाशास्त्रोक्तप्रकारेणैव मया रचितं कृतं ॥ ३० ॥

राजभिर्धृतदण्डाश्च कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ३१ ॥
शासनाद्वापि मोक्षाद्वा स्तेनः पापात्प्रमुच्यते ।
राजा त्वशासन् पापस्य तदवाप्नोति किल्बिषं ॥ ३२ ॥
आर्य्येण मम मान्धात्रा व्यसनं घोरमीप्सितम् ।
श्रमणेन कृते पापे यथा पापं कृतं त्वया ॥ ३३ ॥
अन्यैरपि कृतं पापं प्रमत्तैर्वसुधाधिपैः ।
प्रायश्चित्तञ्च कुर्व्वन्ति तेन तच्छाम्यते रजः ॥ ३४ ॥

तौ श्लोकावाह । राजभिरिति । अनेन स्वकृतदण्डस्य शास्त्रसम्मतत्वं दण्डग्राहितत्वं चोक्तं ॥ ३१ ॥

त्वयापि प्रार्थनापूर्वमयमर्थः कारणीयः स्यादित्यर्थप्रतिपादकं श्लोकमाह । शासनादिति । पापोऽहं मे दण्डं कुर्विति प्रार्थनया स्वसमीपमागतस्य पापिनः शासनाद्दण्डकारणाद्वा मोक्षाद्दयया विसर्जनाद्वा । स्तेन इति पापोपलक्षणं । तत्र द्वितीयः पक्षो राज्ञो दोषायेत्याह । राजा तु पापस्याशासन् पापनिग्रहमकुर्व्वन् । अनेन तद्दण्डकरणमस्मात्शासनावश्यकमिति ध्वनितं ॥ ३२ ॥

अथात्रार्थे शिष्टाचारमपि प्रमाणयति । आर्य्येणेति । मम कूटस्थेन मान्धात्रा त्वया यत्प्रकारं पापं कृतं तत्प्रकारे पापे केनचिच्छ्रमणेनार्हतेन कृते सति कर्तुमीप्सितं घोरं व्यसनं दण्डरूपं मान्धात्रा कृतं ॥ ३३ ॥

अन्यैरपि वसुधाधिपैः प्रमत्तपुरुषैः कृतं पापं प्रतिकृत्य दण्डनं

तदलं परितापेन धर्म्मतः परिकल्पितः ।
वधो वानरशार्दूल ! न वयं स्ववशे स्थिताः ॥ ३५ ॥
शृणु चाप्यपरं भूयः कारणं हरिपुङ्गव ! ।
तच्छ्रुत्वा हि महद्वीर ! न मन्युं कर्त्तुमर्हसि ॥ ३६ ॥
न मे तत्र मनस्तापो न मन्युर्हरिपुङ्गव ! ।
वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नराः ॥ ३७ ॥

कृतमित्यध्याहारः । न केवलं राजदण्डएव पापप्रायश्चित्तमन्यदपि मन्वाद्युक्तमित्याह । प्रायश्चित्तञ्च कुर्व्वन्ति । कृतपापा इति शेषः । तेन कर्मानुष्ठितप्रायश्चित्तेन ॥ ३४ ॥

धर्म्मतः शास्त्रतः न वयं स्ववशे स्थिताः किन्तु शास्त्राधीना इति शेषः । एतेनादर्शनपूर्व्वकं वधोऽधर्म्म इति यदुक्तं तदपि समाहितं दण्डार्थवधे दर्शनानपेक्षत्वात् । एवं वालिनः सन्ध्योपासनाद्यनुष्ठानेन शास्त्रज्ञत्वमवलम्ब्य समाहितम् ॥ ३५ ॥

अथ केवलशाखामृगत्वमवलम्ब्यापि समाधत्ते । शृणु चापीति । छन्नेनानभिमुखस्य निःशङ्कवधे कारणं शृण्वित्यर्थः । तन्महत् कारणं श्रुत्वा मन्युं न कर्त्तुमर्हसि ॥ ३६ ॥

तत्र प्रच्छन्नवधे मनस्तापः कथमेवं कृतमिति पश्चात्तापो न । नापि वधस्य कारणं मन्युर्मम क्रोधः । यद्वा मन्युः शोकः । मृगाणां तादृश वधस्य राज्ञां स्वभावतया न दोष इत्याह वागुराभिः विविधैः कूटैः छन्नच्छन्नश्वभ्रादिसम्पादनरूपैः ॥ ३७ ॥

प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून् मृगान्।
प्रधावितान् वा वित्रस्तान् विस्रब्धानतिविष्ठितान् ॥ ३८ ॥
प्रमत्तानप्रमत्तान् वा नरा मांसाशिनो भृशं।
विध्यन्ति विमुखांश्चापि न च दोषोऽत्र विद्यते ॥ ३९ ॥
यान्ति राजर्षयश्चात्र मृगयां धर्म्मकोविदाः।
तस्मात्त्वं निहतो युद्धे मया बाणेन वानर! ॥ ४० ॥
अयुध्यन् प्रतियुध्यन् वा यस्माच्छाखामृगोह्यसि ॥ ४१ ॥
दुर्लभस्य च धर्म्मस्य जीवितस्य शुभस्य च।
राजानो वानरश्रेष्ठ! प्रदातारो न संशयः ॥ ४२ ॥

पर्णाच्छादितत्वादिरूपैः प्रतिच्छन्ना इत्यन्वयः। विस्रब्धान् विश्वस्तान् अतिविष्ठितान् स्वपालितमृगैः विष्ठितान्विरोधेन स्थितान्युध्यमानानिति यावत् ॥ ३८ ॥ ३९ ॥

न दोष इत्यत्र शिष्टाचारं प्रमाणयति। यान्तीति। मृगयां नानाप्रकार मृगवधयुक्तां कर्तुं राजर्षयो धर्म्मकोविदा यान्ति ॥ ४० ॥

प्रतियुध्यन्। अन्येन युद्धं कुर्व्वन्। मांसादिलोभाभावेपि क्षत्रियत्वाभावात्तव वधो मया कृत इतरव्याघ्रादि तिर्यञ्च जन्तुवत्। तत्र मे न कश्चिन्महान् दोषः। अल्पस्तु प्राणायाममात्रापनेय इति भावः ॥ ४१ ॥

शुभस्यैहिकाभ्युदयस्य राजानः क्षत्रियाः ॥ ४२ ॥

तान्न हिंस्यान्नचाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत् ।
देवा मानुषरूपेण चरन्त्येते महीतले ॥ ४३ ॥
त्वन्तु धर्म्ममविज्ञाय केवलं रोषमास्थितः ।
विदूषयसि मां धर्मे पितृपैतामहे स्थितं ॥ ४४ ॥
एवमुक्तस्तु रामेण वाली प्रव्यथितो भृशं ।
न दोषं राघवे दध्यौ धर्म्मेऽधिगतनिश्चयः ॥ ४५ ॥
प्रत्युवाच ततो रामं प्राञ्जलिर्वानरेश्वरः ।
यत्त्वमात्थ नरश्रेष्ठ ! तत्तथैव न संशयः ॥ ४६ ॥
प्रतिवक्तुं प्रकृष्टे हि नापकृष्टस्तु शक्नुयात् ।
यदयुक्तं मया पूर्व्वं प्रमादाद्वाक्यमप्रियं ॥ ४७ ॥

न हिंस्याद्वधव्यतिरेकेणेत्यर्थः । आक्रोशो निन्दा आक्षेपोऽवमाननं अप्रियवादः प्रतिकूलवचनं । त्वन्तु न तादृशराजेति भावः । एतेन राज्ञोवधादौ ब्रह्मवधादिदोष इति सूचितं ॥ ४३ ॥ ४४ ॥

प्रव्यथितो भगवति मिथ्यादोषोक्त्या प्रव्यथितः । न दोषं राघवे दध्यौ तथाध्यानस्यापि पापावहत्वादिति भावः । यद्वा ध्यानेनापि नाविन्दत् रघुवरस्य दुष्टस्वभावत्वादिति भावः । धर्म्मेऽधिगतनिश्चयः भगवद्वचनादेव धर्म्मविषये जातनिश्चयः ॥ ४५ ॥ ४६ ॥

प्रकृष्टे प्रकृष्टज्ञानैश्वर्येऽत्र अपकृष्टो मादृश इति शेषः । यत्प्रमादाद्वाक्यमुक्तं तदयुक्तमेव ॥ ४७ ॥

तत्रापि खलु मां दोषं कर्तुं नार्हसि राघव ! ।
त्वं हि दृष्टार्थतत्त्वज्ञः प्रजानाञ्च हिते रतः ॥ ४८ ॥
कार्य्यकारणसिद्धौ च प्रसन्ना बुद्धिरव्यया ॥ ४९ ॥
मामप्यवगतं धर्म्मादतिक्रान्तपुरस्कृतं ।
धर्म्मसंहितया वाचा धर्म्मज्ञ ! परिपालय ॥ ५० ॥
वाष्पसंरुद्धकण्ठस्तु वालीसार्तरवः शनैः ।
उवाच रामं संप्रेक्ष्य पङ्कलग्नइव द्विपः ॥ ५१ ॥
न चात्मानमहं शोचे न तारां नापि बान्धवान् ।
यथा पुत्रं गुणज्येष्ठमङ्गदं कनकाङ्गदं ॥ ५२ ॥

तत्रापि अज्ञानजाप्रियोक्तावपि दोषं कर्तुं दोषं भावयितुं। तत्र हेतुस्त्वंहीति। दृष्टेनापरोक्षानुभवेनार्थतत्त्वस्य धर्म्मादितत्त्वस्य ज्ञाता ॥ ४८ ॥

कार्य्यं दण्डः कारणं तद्धेतुभूतं पापं तयोः सिद्धौ निश्चये तव बुद्धिरन्तःकरणं प्रसन्ना निर्म्मला वैषम्यरहितेत्यर्थः ॥ ४९ ॥

धर्म्मादेव व्यतिक्रान्तानां पुरस्कृतमग्रेसरं। अवगतं तदग्रेसरत्वेन प्रसिद्धं मामपि पापिष्ठतरं। धर्म्मसंहितया वाचा परिपालय उत्तमलोकान् प्राप्नुहीति वाचानुगृहाणेत्यर्थः ॥ ५० ॥

उवाच पुत्रादिमायाक्रान्तः सन्नवाचेत्यर्थः ॥ ५१ ॥

नचात्मानं भगवता त्वया हतत्वाद्भुक्तभोगत्वात् न तारां सुग्रीवस्यापि तस्यामनुरागात्। न बान्धवान् सुग्रीवतोऽपि सेवया जीवनलाभात्। पुत्रं शोचामि बाल्यत्वात् ॥ ५२ ॥

स ममादर्शनाद्दीनो बाल्यात्प्रभृति लालितः।
तटाक इव पीताम्बुरुपशोषं गमिष्यति ॥ ५३ ॥
बालश्चाकृतबुद्धिश्च एकपुत्रश्च मे प्रियः।
तारेयो राम! भवता रक्षणीयो महाबलः ॥ ५४ ॥
सुग्रीवे चाङ्गदे चैव विधत्स्व मतिमुत्तमां।
त्वं हि गोप्ता च शास्ता च कार्याकार्यविधौ स्थितः ॥ ५५ ॥
या ते नरपते वृत्तिर्भरते लक्ष्मणे च या।
सुग्रीवे चाङ्गदे राजंस्तांश्चिन्तयितुमर्हसि ॥ ५६ ॥
मद्दोषकृतदोषां तां यथा तारां तपस्विनीं।
सुग्रीवो नावमन्येत तथावस्थातुमर्हसि ॥ ५७ ॥

मया लालितः स ममादर्शनाच्छोषं गमिष्यति। पीताम्बुः सस्याद्युपयोजिताम्बुः ॥ ५३ ॥

तारेयस्तारापत्यं। एकपुत्रत्वेनातिललितत्वं ॥ ५४ ॥

मतिमुत्तमां मरणान्तानि वैराणीति न्यायेनेति भावः। सुग्रीवे च तत्रैवेत्यर्थः। भ्रातृस्नेहाद्दोषेण वा। तत्राप्यनुग्रहप्रार्थनं कार्यत्र-विधौ गोप्ता। अकार्यत्रविधौ शास्ता ॥ ५५ ॥ ५६ ॥

मद्दोषकृतदोषां मत्कृतसुग्रीवापकारदोषानुसरणमात्रेण कृतदोषां न तु स्वतःकृततदपकारां। तपस्विनीं शोच्यां। अवस्थातुं अवस्थापयितुं ॥ ५७ ॥

त्वया ह्यनुगृहीतेन शक्यं राज्यमुपासितुं।
त्वद्वशे वर्त्तमानेन तव चित्तानुवर्त्तिना ॥ ५८ ॥
शक्यं दिवञ्चार्जयितुं वसुधाञ्चापि शासितुं।
त्वत्तोऽहं वधमाकांचन्वार्यमाणोऽपि तारया ॥ ५९ ॥
सुग्रीवेण सह भ्राचा द्वन्द्वयुद्धमुपागतः।
इत्युक्का वानरो रामं विरराम हरीश्वरः ॥ ६० ॥
स तमाश्वासयद्रामो वालिनं व्यक्तदर्शनं।
साधुसंमतया वाचा धर्मतत्त्वार्थयुक्तया ॥ ६१ ॥
न वयं भवता चिन्त्या नाप्यात्मा हरिसत्तम!।
वयं भवद्विशेषेण धर्मतः कृतनिश्चयाः ॥ ६२ ॥

राज्यं वानरराज्यं ॥ ५८ ॥

शक्यमिति। स्वाराज्यमपि त्वत्प्रसादलभ्यमिति भावः। अहं त्वदुपदेशतस्त्वद्दर्शनतश्चेदानीं क्षीणपापः। त्वत्तोवधं उत्तमलोकराज्यफलकं आकाङ्क्षन्नपेक्षमाण इदानीमस्मि। अतस्तारया वार्यमाणोपि यत् भ्रात्रा युद्धमुपागतः प्राप्तस्तत् पूर्वकृतपुण्यपरिपाकेनेति शेषः ॥५९॥६०॥

व्यक्तदर्शनं। उद्बुद्धबोधं ॥ ६१ ॥

न वयं गुप्तवधरूपाकृत्यकारित्वेन चिन्त्याः। नाप्यात्मा भ्रातृभार्यापहरणरूपाकृत्यकारित्वेन। तत्र हेतुर्वयमित्यादि। भवद्विशेषेण त्वदपेक्षया विशेषेण विशेषज्ञत्वेन धर्मतो शास्त्रमार्गेण कृते त्वत्कृतपापे स्वकृतवधद्योतकत्वरूपे व्यापारे च निश्चयोऽत्र पापेऽयमेव दण्ड इति निश्चयो येषां तादृशाः ॥ ६२ ॥

दण्ड्ये यः पातयेद्दण्डं दण्ड्यो यश्चापि दण्ड्यते।
कार्य्यकारणसिद्धार्थावुभौ तौ नावसीदतः॥ ६३॥
तद्भवान् दण्डसंयोगादस्माद्विगतकल्मषः।
गतः स्वां प्रकृतिं धर्म्म्यां दण्डदिष्टेन वर्त्मना॥ ६४॥
त्यज शोकञ्च मोहञ्च भयञ्च हृदये स्थितम्।
त्वया विधानं हर्य्यग्र! न शक्यमतिवर्तितुम्॥ ६५॥
यथा त्वय्यङ्गदो नित्यं वर्तते वानरेश्वर!।
तथा वर्तेत सुग्रीवे मयि चापि न संशयः॥ ६६॥

अत्रार्थे स्मृतिमुपन्यस्यति। दण्ड्ये य इति। कार्यकारणेति भावप्रधानोनिर्देशः। कार्यत्वं दण्ड्यत्वं कारणत्वं दण्डयितृत्वं ताभ्यां सिद्धार्थौ निष्पन्नपरलोकप्रयोजनौ। अतएव नावसीदतः। एवं न्यायदंडकर्तृत्वान्नाहमकृत्यकारी जातदंड्यत्वाच्च त्वमपि न तथेति भावः॥ ६३॥

तदेवाह। स्वां प्रकृतिं स्वकीयं शुद्धस्वभावत्वं। दण्डदिष्टेन दण्डबोधकशास्त्रोक्तेन मार्गेण॥ ६४॥

भयं भ्रातृभार्याहरणकर्मजनितनरकभयं मद्दूषणनिमित्तपरलोकभयञ्च। दण्डेन कर्मणो नाशात्। मद्दूषणस्य मया क्षान्तत्वाच्च। शोकमोहौ ताराताराेयविषयौ। विधानं प्राग्भवीयं कर्म। अत्रान्ते दण्डस्यैव संहारात्तिरस्याामपि ज्ञानवतां शास्त्रार्थेऽधिकारो दृष्टः इत्यति बोध्यं॥ ६५॥

तथा वर्तेत पितृवदेव तं पालयिष्याव इति भावः। अस्मत्तस्तथावृत्तिं प्राप्नुयादित्यक्षरार्थः॥ ६६॥

स तस्य वाक्यं मधुरं महात्मनः
समाहितं धर्म्मपथानुवर्तितं ।
निशम्य रामस्य रणावमर्द्दिनो
वचः सुयुक्तं निजगाद वानरः ॥ ६७ ॥
शराभितप्तेन विचेतसा मया
प्रभाषितस्त्वं यदजानता विभो ! ।
इदं महेन्द्रोपमभीमविक्रम !
प्रसादितस्त्वं चम मे हरीश्वर ! ॥ ६७ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
अष्टादशः सर्गः ॥ १८ ॥

---

तस्य वाक्यं । श्यात्मनः दुर्गतेः पुत्रपालनस्य च प्रतिपादकं ॥ ६७ ॥
इदं प्रभाषणं ॥ ६८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे अष्टादशः सर्गः ॥ १८ ॥

# ऊनविंशः सर्गः ।



स वानरमहाराजः शयानः शरपीड़ितः ।
प्रत्युक्तो हेतुमद्वाक्यैर्नोत्तरं प्रतिपद्यत ॥ १ ॥
अश्माभिः परिभिन्नाङ्गः पादपैराहतो भृशं ।
रामबाणेन चाक्रान्तो जीवितान्ते मुमोह सः ॥ २ ॥
तं भार्य्या बाणमोक्षेण रामदत्तेन संयुगे ।
हतं प्लवगशार्दूलं तारा शुश्राव वालिनं ॥ ३ ॥
सा सपुत्राऽप्रियं श्रुत्वा वधं भर्तुः सुदारुणं ।
निष्पपात भृशं तस्मादुद्विग्ना गिरिकन्दरात् ॥ ४ ॥
ये त्वङ्गदपरीवारा वानरा हि महाबलाः ।
ते सकार्मुकमाऽलोक्य रामं त्रस्ताः प्रदुद्रुवुः ॥ ५ ॥

हेतुमद्वाक्यैर्हेतूपन्यासयुतैर्वाक्यैः प्रत्युक्त उक्तप्रत्युत्तरः ॥ १ ॥
जीवितान्ते तत्समये मुमोह विसंज्ञोऽभूत् ॥ २ ॥ ३ ॥
अप्रियमितिच्छेदः । सपुत्रा पुत्रेणाङ्गदः । गिरिगह्वरं किष्किन्धाख्यं ॥ ४ ॥ ५ ॥

सा ददर्श ततस्त्रस्तान् हरीनापततो द्रुतं।
यूथादिव परिभ्रष्टान् मृगान्निहतयूथपान् ॥ ६ ॥
तानुवाच समासाद्य दुःखितान् दुःखिता सती।
रामवित्रासितान् सर्वाननुबद्धानिवेषुभिः ॥ ७ ॥
वानरा राजसिंहस्य यस्य यूयं पुरःसराः।
तं विहाय सुवित्रस्ताः कस्माद्द्रवत दुर्गताः ॥ ८ ॥
राज्यहेतोः स चेद्भ्राता भ्रात्रा क्रूरेण पातितः।
रामेण प्रहृतैर्दूरान्मार्गणैर्दूरपातिभिः ॥ ९ ॥
कपिपत्न्या वचः श्रुत्वा कपयः कामरूपिणः।
प्राप्तकालमविश्लिष्टमूचुर्वचनमङ्गनां ॥ १० ॥

सा तारा आपततः पलायमानान् ॥ ६ ॥

इषुभिरनुबद्धानिवानुसृतानिव रामवित्रासितान् रामाद्वित्रस्तान् ॥ ७ ॥

वचनमाह वानरा इति। यस्य वालिनः दुर्गतावस्थादिकमपश्यन्तः ॥ ८ ॥

भ्राता प्रयोजककर्ता रामः प्रयोज्यकर्ता बाणाः करणं। दूरात् दूरे स्थित्वा तैः स पातितश्चेत्किं युष्माभिः पलायितं इति शेषः। तस्यवधेव भवज्जीवनसंभवादिति भावः ॥ ९ ॥

प्राप्तकालं कालोचितं। अविश्लिष्टं सर्वसंमतिपूर्वमेकरूपं। अभिश्लिष्टमिति पाठे व्यक्तमित्यर्थः। अङ्गनां वालिन इति शेषः ॥१०॥

जीवपुत्रे ! निवर्तस्व पुत्रं रक्षस्व चाङ्गदं ।
अन्तको रामरूपेण हत्वा नयति वालिनं ॥ ११ ॥
क्षिप्तान् वृक्षान् समाविध्य विपुलाश्च तथा शिलाः ।
वाली वज्रसमैर्बाणैर्वज्रेणेव निपातितः ॥ १२ ॥
अभिभूतमिदं सर्व्वं विद्रुतं वानरं बलं ।
अस्मिन् प्लवगशार्दूल हते शक्रसमप्रभे ॥ १३ ॥
रक्ष्यतां नगरी शूरैरङ्गदश्चाभिषिच्यतां ।
पदस्थं वालिनः पुत्रं भजिष्यन्ति प्लवङ्गमाः ॥ १४ ॥
अथवा रुचितं स्थानमिह ते रुचिरानने ! ।
आविशन्ति च दुर्गाणि क्षिप्रमद्यैव वानराः ॥ १५ ॥

पुत्रं रक्षस्व रामादिति शेषः । कुतः पुत्रस्य भयं तत्राह । अन्तक-इत्यादि । नयति यमपुरमिति शेषः ॥ ११ ॥

वृक्षान्वालिप्रतिहतान् । अयं सर्वोपि संभाव्यवादः एवं बहुबा-णत्यागवादोऽपि ॥ १२ ॥

अभिभूतमिव द्रुतं वानरं वानराणामिदं ॥ १३ ॥

पदस्थं वानरराज्यपदस्थं पुत्रमङ्गदं भजिष्यन्ति । अन्यथाऽराज-केऽत्रास्माभिरवस्थातुमशक्यमिति भावः ॥ १४ ॥

अथवेति । सरामे सुग्रीवे किष्किन्धामागच्छति । अभिषिक्तो-माप्यंगदेनास्मत्यालनमशक्यमेवेति नेह स्थातुं योग्यमिति शेषः । हे रुचिरानने यद्यपीदं स्थानं ते तुभ्यं रुचितमभीष्टं तथापीह किष्कि-

अभार्य्याः सहभार्य्याश्च सन्त्यत्र वनचारिणः।
लुब्धेभ्यो विप्रलब्धेभ्यस्तेभ्यो नः सुमहद्भयं ॥ १६ ॥
अल्पान्तरगतानान्तु श्रुत्वा वचनमङ्गना।
आत्मनः प्रतिरूपं सा बभाषे चारुहासिनी ॥ १७ ॥
पुत्रेण मम किं कार्य्यं राज्येनापि किमात्मना।
कपिसिंहे महाभागे तस्मिन् भर्त्तरि नश्यति ॥ १८ ॥
पादमूलं गमिष्यामि तस्यैवाहं महात्मनः।
योऽसौ रामप्रयुक्तेन शरेण विनिपातितः ॥ १९ ॥
एवमुक्त्वा प्रदुद्राव रुदती शोकमूर्च्छिता।
शिरश्चोरश्च बाहुभ्यां दुःखेन समभिघ्नती ॥ २० ॥
सा व्रजन्ती ददर्शाथ पतिं निपतितं भुवि।
हन्तारं वानरेन्द्राणां समरेष्वनिवर्तिनां ॥ २१ ॥

न्यायां विद्यमानानि दुर्गाणि अद्यैव वानराः सुग्रीवहनुमदादयः आविशन्ति वर्तमानसामीप्ये लट्। तेषु प्रविष्टेषु येऽभार्याः सभार्याश्च वानराः सुग्रीवावलम्बिनः प्रागस्माभिः कृतवैरास्तेच प्रवेक्ष्यन्ति। ततश्च लुब्धेभ्यो राज्यादिविषये विप्रलब्धेभ्यः पूर्वमस्माभिर्वञ्चितेभ्योऽस्माकं तुमुलं महद्भयमस्ति यत इति शेषः। केचित्तु इह ते स्थानमस्माकमरुचितं अनभिमतं इतरत् पूर्ववदित्याहुः ॥ १५ ॥ १६ ॥

अल्पान्तरगतानां नातिदूरवर्तिनां। अवान्तरगतानामिति पाठे मध्ये मार्गमागतानामित्यर्थः। तेषां वानराणां वचनं श्रुत्वा। आत्मनः प्रतिरूपं कालोचितं बभाषे ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

घस्मारं पर्व्वतेन्द्राणां वज्राणामिव वासवं ।
महावातसमाविष्टं महामेघौघनिःस्वनं ॥ २२ ॥
शक्रतुल्यपराक्रान्तं वृष्ट्वेवोपरतं घनं ।
नर्दन्तं नर्दतां भीमं शूरं शूरेण पातितं ॥ २३ ॥
शार्द्दूलेनामिषस्यार्थे मृगराजमिवाहतं ॥ २४ ॥
अर्चितं सर्वलोकस्य सपताकं सवेदिकं ।
नागहेतोः सुपर्णेन चैत्यमुन्मथितं यथा ॥ २५ ॥
अवष्टभ्यावतिष्ठन्तं ददर्श धनुरूर्जितं ।
रामं रामानुजं चैव भर्तुश्चैव तथानुजं ॥ २६ ॥
तानतीत्य समासाद्य भर्तारं निहतं रणे ।
समीक्ष्य व्यथिता भूमौ संभ्रान्ता निपपात ह ॥ २७ ॥

पर्वतेन्द्राणां घस्मारं रणेष्विति शेषः। रणभेदमपेक्ष्य वज्राणामिति बहुवचनप्रयोगः। महता वातेन समं तुल्यं आविष्टमावेशो यस्य रणेषु तं ॥ २२ ॥

परिक्रान्तः पराक्रमो यस्य तं। वृष्ट्वेव जलमुत्सृज्य विरतं। नर्दतां मध्ये भीमं नर्दन्तं ॥ २३ ॥

मृगराजं प्रभूतमांसादिमत्त्वेन मृगश्रेष्ठं शार्द्दूलो व्याघ्रः ॥ २४ ॥

सर्व्वलोकस्य सर्व्वलोकेनार्च्चितं। चैत्यं चतुष्पथवर्तिवल्मीकं नागहेतोरन्तर्विद्यमानं नागभक्षणार्थं सुपर्णेन गरुडेन यथोन्मथितं तथा सुग्रीवस्य राज्यभोगहेतो रामेणोन्मथितमित्यर्थः ॥ २५ ॥ २६ ॥

तानतीत्य मार्गस्थान् रामादीनतीत्य ॥ २७ ॥

सुप्लव पुनरुत्थाय आर्यपुत्रेतिवादिनी।
रुरोद सा पतिं दृष्ट्वा संवीतं मृत्युदामभिः॥ २८॥
तामवेक्ष्य तु सुग्रीवः क्रोशन्तीं कुररीमिव।
विषादमगमत् कष्टं दृष्ट्वा चाङ्गदमागतं॥ २९॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
एकोनविंशः सर्गः॥ १९॥



संवीतं बद्धं॥ २८॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे ऊनविंशः सर्गः॥ १९॥



## विंशः सर्गः ।

रामचापविसृष्टेन शरेणान्तकरेण तं ।
दृष्ट्वा विनिहतं भूमौ तारा ताराधिपानना ॥ १ ॥
सा समासाद्य भर्त्तारं पर्य्यष्वजत भामिनी ।
इषुणाभिहतं दृष्ट्वा वालिनं कुञ्जरोपमं ॥ २ ॥
वानरं पर्व्वतेन्द्राभं शोकसन्तप्तमानसा ।
तारा तरुमिवोन्मूलं पर्य्यदेवयतातुरा ॥ ३ ॥
रणे दारुण ! विक्रान्त ! प्रवीर ! प्लवतांवर ! ।
किमिदानीं पुरोभागामद्य त्वं नाभिभाषसे ॥ ४ ॥
उत्तिष्ठ हरिशार्द्दूल ! भजस्व शयनोत्तमं ।
नैवंविधाः शेरते हि भूमौ नृपतिसत्तमाः ॥ ५ ॥
अतीव खलु ते कान्ता वसुधा वसुधाधिप ! ।
गतासुरपि तां गात्रैर्मां विहाय निषेवसे ॥ ६ ॥

अन्तकरेण मृत्युकारिणा ॥ १ ॥ २ ॥

उन्मूलमुत्पाटितमिति शेषः ॥ ३ ॥

प्लवतां वानराणां श्रेष्ठ । इदानीं पुरोभागां एतस्मिन् काले कृतापराधां मत्वाऽद्य नाभिभाषसे किमित्यन्वयः ॥ ४ ॥ ५ ॥ ६ ॥

व्यक्तमद्य त्वया वीर ! धर्मतः संप्रवर्तता ।
किष्किन्धेव पुरी रम्या स्वर्गमार्गे विनिर्म्मिता ॥ ७ ॥
यान्यस्माभिस्त्वया सार्धं वनेषु मधुगन्धिषु ।
विहृतानि त्वया काले तेषामुपरमः कृतः ॥ ८ ॥
निरानन्दा निराशाहं निमग्ना शोकसागरे ।
त्वयि पञ्चत्वमापन्ने महायूथपयूथपे ॥ ९ ॥
हृदयं सुस्थितं मह्यं दृष्ट्वा निपतितं भुवि ।
यन्न शोकाभिसन्तप्तं स्फुटतेऽद्य सहस्रधा ॥ १० ॥
सुग्रीवस्य त्वया भार्य्या हृता स च विवासितः ।
यत्तत्तस्य त्वया व्युष्टिः प्राप्तेयं प्लवगाधिप ! ॥ ११ ॥

हे वीर धर्म्मतः सम्प्रवर्त्तता धर्म्मेण युद्धमाचरता त्वयाद्य स्वर्गमार्गे स्वर्गसाधनरणभूमौ किष्किन्धेवान्या रम्या पुरी निर्मिता। नोचेत् कथं किष्किन्धां विहायात्र शेषे इत्यर्थः। कतकस्तु धर्मतः प्रवर्तिता रचिता किष्किन्धेवान्यापि स्वर्गमार्गे स्वर्गस्थप्रदेशे निर्मितेत्यर्थमाह ॥ ७॥

यानि त्वया सार्धं विहृतानि तेषामन्तकाले त्वयोपरमः समाप्तिः कृतः ॥ ८ ॥ ९ ॥

मह्यं मम हृदयं सुस्थितमतिदृढं यत्त्वां पतितं दृष्ट्वा न स्फुटेत् ॥१०॥

स विवासित इति यत्प्रसिद्धं कर्म तस्य कर्मण इयं व्युष्टिः परिपाकः प्राप्त इत्यर्थः ॥ ११ ॥

निःश्रेयसपरा मोहात्त्वया चाहं विगर्हिता ।
यैषाब्रुवं हितं वाक्यं वानरेन्द्र ! हितैषिणी ॥ १२ ॥
रूपयौवनदृप्तानां दक्षिणानाञ्च मानद ! ।
नूनमप्सरसामार्य्य ! चित्तानि प्रमथिष्यसि ॥ १३ ॥
कालो निःसंशयो नूनं जीवितान्तकरस्तव ।
बलाद्येनावपन्नोऽसि सुग्रीवस्यावशो वशी ॥ १४ ॥
अस्थाने वालिनं हत्वा युध्यमानं परेण च ।
न सन्तप्यति काकुत्स्थः कृत्वा कर्म सुगर्हितं ॥ १५ ॥
वैधव्यं शोकसन्तापं कृपणाकृपणा सती ॥
अदुःखोपचिता पूर्वं वर्तयिष्याम्यनाथवत् ॥ १६ ॥

यैषाहं हितं वाक्यमब्रुवं सा त्वया मोहाद्विगर्हिता । अस्वीकृत वचना कृता इति यावत् ॥ १२ ॥

दक्षिणानां विदग्धानां समर्थानां वा चित्तानि प्रमथिष्यसि प्राप्त दिव्यदेहानामप्सरसां काममोहजननेनेति शेषः ॥ १३ ॥

कालः प्राप्तइति शेषः । अवपन्नः प्रापितोऽसि । कालविशेषणं निःसंशय इति तत्तदायुर्विषयसन्देहरहित इत्यर्थः ॥ १४ ॥

न सन्तप्यति तदस्थानेऽयुक्तं ॥ १५ ॥

कृपणाकृपणा अतिशयेन कृपणा अवाधायां वा द्वित्वं । पूर्वमदुःखो-पचिता अदुःखं दुःखरहितं यथा भवति तथोपचिता वर्धिता ॥ १६ ॥

लालितश्चाङ्गदो वीरः सुकुमारः सुखोचितः।
वत्स्यते कामवस्थां मे पितृव्ये क्रोधमूर्च्छिते ॥ १७ ॥
कुरुष्व पितरं पुत्र ! सुदृष्टं धर्मवत्सलं।
दुर्लभं दर्शनं तस्य तव वत्स ! भविष्यति ॥ १८ ॥
समाश्वासय पुत्रं त्वं सन्देशं सन्दिशस्व मे।
मूर्ध्नि चैनं समाघ्राय प्रवासं प्रस्थितोह्यसि ॥ १९ ॥
रामेण हि महत् कर्म कृतं त्वामभिनिघ्नता।
आनृण्यं तु गतं तस्य सुग्रीवस्य प्रतिश्रवे ॥ २० ॥
सकामो भव सुग्रीव ! रुमां त्वं प्रतिपत्स्यसे।
भुंक्ष्व राज्यमनुद्विग्नः शस्तो भ्राता रिपुस्तव ॥ २१ ॥
किं मामेवं प्रलपतीं प्रियां त्वं नाभिभाषसे।
इमाः पश्य वरा वह्वयो भार्य्यास्ते वानरेश्वर ! ॥ २२ ॥

मे मया लालितः कामवस्थां प्राप्य वत्स्यत इत्यर्थः ॥ १७ ॥

पितरं सुदृष्टं कुरुष्व ॥ १८ ॥

मूर्धानमुपाघ्राय सन्देशं कर्त्तव्योपदेशं सन्दिशस्वेत्यन्वयः। प्रस्थितः प्रस्थातुकामः ॥ १९ ॥

प्रतिश्रवे प्रतिज्ञाविषये। अनेन रामस्य वालिवधविषयदोषाभावो ध्वनितः ॥ २० ॥

शस्तो हिंसितः ॥ २१ ॥ २२ ॥

तस्या विलपितं श्रुत्वा वानर्य्यः सर्वतश्च ताः ।
परिगृह्यांगदं दीना दुःखार्त्ता प्रतिचुक्रुशुः ॥ २३ ॥

किमङ्गदं साङ्गदवीरबाहो !
विहाय यातोसि चिरं प्रवासं ।
न युक्तमेवं गुणसन्निकृष्टं
विहाय पुत्रं प्रियचारुवेषं ॥ २४ ॥
यद्यप्रियं किञ्चिदसम्प्रधार्य्य
कृतं मयास्यात्तव दीर्घबाहो ! ।
क्षमस्व मे तद्धरिवंशनाथ !
व्रजामि मूर्द्धा तव वीर ! पादौ ॥२५॥
तथा तु तारा करुणं रुदन्ती
भर्त्तुः समीप सह वानरीभिः ।

तस्याविलपितं ताराया विलापं ॥ २३ ॥

किमङ्गदं साङ्गदवीरबाहो । साङ्गदौ वीरहन्ता बाहू यस्य तादृशः । गुणसन्निकृष्टं गुणैस्तव प्रत्यासन्नं प्रियश्चारुवेषो यस्य तं पुत्रं विहाय चिरं प्रवासं गन्तुं न युक्तमित्यन्वयः ॥ २४ ॥

असम्प्रधार्य्य अविचार्य्य हरिवंशानां वानरसमूहानां नाथ व्रजामि स्पृशामीत्यर्थः ॥ २५ ॥

व्यवस्यत प्रायमनिन्द्यवर्णा
उपोपवेष्टुं भुवि यत्र वाली ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
विंशः सर्गः ॥ २० ॥

---

यत्र वाली तत्रोपभुवि तद्भूसमीपभुवि प्रायमुपवेष्टुं प्रायोपवेशं कर्तुं व्यवस्यत निश्चितवती ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकिये किष्किन्धाकाण्डे
विंशः सर्गः । २०

---

# एकविंशः सर्गः ।

---

ततो निपतितां तारां च्युतां तारामिवाम्बरात् ।
शनैराश्वासयामास हनूमान् हरियूथपः ॥ १ ॥
गुणदोषकृतं जन्तुः स्वकर्मफलहेतुकं ।
अव्यग्रस्तदवाप्नोति सर्वं प्रेत्य शुभाशुभं ॥ २ ॥
शोच्या शोचसि कं शोच्यं दीनन्दीनानुकंपसे ।
कश्च कस्यानुशोच्योऽस्ति देहेऽस्मिन् बुद्बुदोपमे ॥ ३ ॥

तत इति ॥ १ ॥

जन्तुः फलहेतुकं स्वर्गनरकादिफलसाधनं स्वार्थेकः । गुणैः शमादिभिः दोषेण रागादिना वा कृतं यत् स्वकर्मास्ति तत्तस्य शुभाशुभरूपं फलं प्रेत्याव्यग्रोऽनाकुलोवाप्नोति गुणदोषकृतं ज्ञानाज्ञानकृतमित्यर्थः इति कश्चित् ॥ २ ॥

शोच्या पापपुण्यकर्मपाशवशगत्वेन शोचनीया त्वं कमन्यं शोच्यं शोचसि कर्मवशगं भर्त्रादिकं कर्मफलवशतोदीना त्वं कमन्यं पुत्रादिकमनुकंपसे । बुद्बुदोपमे देहे अतीते कः कस्यानुशोच्योस्ति । उपलक्षणं । कस्य कोनुशोचकोस्तीत्यपि बोध्यं । विदुषोनोचितः शोक इति भावः ॥ ३ ॥

अङ्गदस्तु कुमारोऽयं द्रष्टव्यो जीवपुत्रया।
आयत्यास्य विधेयानि समर्थान्यस्य चिन्तय ॥ ४ ॥
जानास्यनियतामेवं भूतानामागतिं गतिं।
तस्माच्छुभं हि कर्तव्यं पण्डितेनेह लौकिकं ॥ ५ ॥
यस्मिन् हरिसहस्राणि शतानि नियुतानि च।
वर्तयन्ति कृताशानि सोऽयं दिष्टान्तमागतः ॥ ६ ॥
यदयं न्यायदृष्टार्थः सामदानक्षमापरः।
गतोधर्मजितां भूमिं नैनं शोचितुमर्हसि ॥ ७ ॥

द्रष्टव्योवालिशोकनिवृत्त्यर्थमिति शेषः। अस्य वालिनो मरिष्यमाणस्यायत्यां मरणोत्तरकाले यानि विधेयानि कार्याणि समर्थानि श्रेष्ठानि तानि त्वं चिन्तय विचारय ॥ ४ ॥

अनियतामव्यवस्थितां। तस्माच्छुभं परलोकसुखावहं यत्तत्कर्तव्यं। हे पण्डिते इह पतिपित्रादिवियोगकाले न लौकिकं बङ्गरोदनादि कर्तव्यं। प्रीतिमात्रबोधकतया कृतेष्टासाधनत्वेन च तस्य लौकिकत्वं ॥५॥

यस्मिन् जीवतीति शेषः। कृताशानि कृतभोग्याशानि वर्तयन्ति जीवन्ति। दिष्टान्तं आयुर्दायरूपकल्पितकालान्तं ॥ ६ ॥

न्यायेन नीतिशास्त्रेण दृष्टार्थोराजकार्यं येन। सामादिपरो वानरेषु। धर्मजितां धर्मेण भूमिं जितवतां राज्ञां भूमिं स्थानं गतः गन्तेत्यर्थः अतो नैतच्छोक उचितः ॥ ७ ॥

सर्वे च हरिशार्दूलाः पुत्रश्चायन्तवाङ्गदः ।
हर्य्यृक्षपतिराज्यञ्च त्वत्सनाथमनिन्दिते ! ॥ ८ ॥
ताविमौ शोकसन्तप्तौ शनैः प्रेरय भामिनि ! ।
त्वया परिगृहीतोऽयमङ्गदः शास्तु मेदिनीं ॥ ९ ॥
सन्ततिश्च यथादृष्टा कृत्यं यच्चापि साम्प्रतम् ।
राज्ञस्तत् क्रियतां सर्वमेष कालस्य निश्चयः ॥ १० ॥
संस्कार्य्यो हरिराजस्तु अङ्गदश्चाभिषिच्यतां ।
सिंहासनगतं पुत्रं पश्यन्ती शान्तिमेष्यसि ॥ ११ ॥
सा तस्य वचनं श्रुत्वा भर्तृव्यसनपीड़िता ।
अब्रवीदुत्तरं तारा हनूमन्तमवस्थितं ॥ १२ ॥
अङ्गदप्रतिरूपाणां पुत्राणामेकतः शतं ।
हतस्याप्यस्य वीरस्य गात्रसंश्लेषणं वरं ॥ १३ ॥

त्वमपि न शोककरणार्हेत्याह । सर्वेचेति । त्वत्सनाथं त्वयैवैकया सनाथं ॥ ८ ॥

ताविमौ सुग्रीवाङ्गदौ शनैः प्रेरय उत्तरकार्यकरणायेति शेषः ॥९ ॥

सन्ततिः अङ्गदः यथादृष्टा यत्प्रयोजनकतया शास्त्रे दृष्टा यच्च राज्ञः साम्प्रतं परलोकहितं कृत्यं तत् क्रियतां एष कालस्य इदानीन्तनकालस्योचितो निश्चयः अनुष्ठाननिश्चयः ॥ १० ॥

तदेवाह । संस्कार्य्य इति । रामवाणस्यामोघत्वान्मरणनिश्चयेनैवमुक्तिः ॥ ११ ॥ १२ ॥

यदुक्तं पुत्रेण सुखिनी भवेति तत्प्रत्याख्याति तारा । अङ्गदेति ।

न चाहं हरिराजस्य प्रभवाम्यङ्गदस्य वा।
पितृव्यस्तस्य सुग्रीवः सर्वकार्य्येष्वनन्तरः॥ १४॥
न ह्येषा बुद्धिरास्थेया हनूमन्नङ्गदं प्रति।
पिता हि बन्धुः पुत्रस्य न माता हरिसत्तम!॥ १५॥

न हि मम हरिराजसंश्रयात्
क्षमतरमस्ति परत्र वेह वा।
अभिमुखहतवीरसेवितं
शयनमिदं मम सेवितुं क्षमं॥ १६॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
एकविंशः सर्गः॥ २१॥

---

अङ्गदतुल्यानां पुत्राणां शतमेकतः सुखसाधनैककोटौ। हतस्यापि पत्युर्गात्रसंश्लेषोपरकोटौ। तयोर्मध्ये द्वितीयोवरमतिशयितसुखसाधनं परलोके परमानन्दहेतुत्वात्। तस्मात्सहगमनं करिष्यइति भावः॥१३॥

राज्यं त्वदधीनमिनि यदुक्तं तन्निराचष्टे न राज्यस्य प्रभवामि न योग्या स्त्रीत्वात्। अङ्गदस्य वा राज्यदानेऽ प्रभवामि। अनन्तरः समर्थः मत्तः प्रत्यासन्नस्य॥ १४॥

एषा बुद्धिः मत्कर्तृकाभिषेकबुद्धिः। पिता तत्तुल्यः सुग्रीवः बन्धुः सुखदानाधिकारी न मातेत्यर्थः॥ १५॥ १६॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे एकविंशः सर्गः॥ २१॥

## द्वाविंशः सर्गः ॥

वीक्षमाणस्तु मन्दासुः सर्व्वतो मन्दमुच्छ्वसन् ।
आदावेव तु सुग्रीवं ददर्शानुजमग्रतः ॥ १ ॥
तं प्राप्तविजयं वाली सुग्रीवं प्लवगेश्वरं ।
आभाष्य व्यक्तया वाचा सस्नेहमिदमब्रवीत् ॥ २ ॥
सुग्रीव ! दोषेण न मां गन्तुमर्हसि किल्बिषात् ।
कृष्यमाणं भविष्येण बुद्धिमोहेन मां बलात् ॥ ३ ॥
युगपद्विहितं तात ! न मन्ये सुखमावयोः ।
सौहार्दं भ्रातृयुक्तं हि तदिदं जातमन्यथा ॥ ४ ॥

सर्वतो वीक्षमाणः सः आत्मजस्याग्रतः स्थितं सुग्रीवमेवादौ ददर्श ॥ १ ॥

आभाष्य सुग्रीवेति सम्बोध्य ॥ २ ॥

हे सुग्रीव मां किल्बिषात् प्राग्भवीयदुष्कृतवशाद्भविष्येण भविष्यतावश्यंभाविना बुद्धिमोहेन त्वयि बुद्धिरूपेण बलात् कृष्यमाणं मां ज्ञात्वा त्वं दोषेण स्वापकारदोषवत्त्वेन मां गन्तुमवगन्तुं नार्हसि ॥ ३ ॥

कार्य्यगानुमितं कर्म्मप्राबल्यं दर्शयति । युगपदिति । भ्रातृयुक्तं भ्रात्रोर्युक्तमुचितं सौहार्दं सुखञ्च राज्यसुखञ्चावयोः कर्म्मणा युगपन्नविहितमिति मन्ये यतस्तदिदं उचितमपि सौहार्दं सुखञ्चान्यथा जातं विघटितमित्यर्थः ॥ ४ ॥

प्रतिपद्य त्वमद्यैव राज्यमेषां वनौकसां।
मामप्यद्यैव गच्छन्तं विद्धि वैवस्वतक्षयं ॥ ५ ॥
जीवितञ्च हि राज्यञ्च श्रियञ्च विपुलां तथा।
प्रजहाम्येष वै तूर्णमहञ्चागर्हितं यशः ॥ ६ ॥
अस्यां त्वहमवस्थायां वीर! वक्ष्यामि यद्वचः।
यद्यप्यसुकरं राजन्! कर्तुमेव त्वमर्हसि ॥ ७ ॥

अथ रामशरक्षीणपापत्वात्प्राप्तसात्त्विकप्रकृतिः स्वयमेव सुग्रीवाय स्वानन्तरं प्राप्तं राज्यं ददाति। प्रतिपद्येति प्रतिपद्यस्वेत्यर्थः। वैवस्वतक्षयं यमगृहं। ननु राजनि मृते तत् पुत्रएव राज्याधिकारी न तु तत् कनीयान् भ्रातेति चेन्न। एतस्य बालत्वेन राज्यरक्षणासामर्थ्यात्। बलवदाश्रितत्वाच्च पुत्रनाशो माभूदिति तथोक्तिः। भगवता रामेणापि राज्यरक्षणासामर्थ्येनाङ्गदस्य सुग्रीवोऽभिषिक्तो राज्ये। यौवराज्ये चाङ्गदः। सुग्रीवानन्तरं त्वङ्गदस्यैव राज्याधिकारो न तु सुग्रीवपुत्राणां ज्येष्ठपुत्रत्वादित्याहुः ॥ ५ ॥

अगर्हितं यशः प्रशस्तं यशः वाली केनाप्यवध्यइत्येवं तच्च प्रजहामि। एकेनैव शरेण रामहतत्वात् इतिप्राञ्चः। अन्ये तु चस्त्वर्थे यशइत्युत्तरं बोध्यः। अगर्हितं यशस्त्वत्प्राप्नोमीति शेषः। वाली भगवता रामेण छन्नेन हतइत्येवं रूपञ्च यशइत्याहुः ॥ ६ ॥

अस्यामवस्थायां चरमदशायां यद्यप्यसुकरं मयात्यन्तमपकृतत्वात् तथापि कर्तुमर्हस्येवेति योजना। सात्त्विकत्वात् सात्त्विकसमाश्रयणाच्चेत्याशयः। स्वयं राज्यस्य दत्तत्वाद्राजन्निति संबोधनं ॥ ७ ॥

सुखार्हं सुखसंवृद्धं बालमेनमबालिशं।
बाष्पपूर्णमुखं पश्य भूमौ पतितमङ्गदं ॥ ८ ॥
मम प्राणैः प्रियतरं पुत्रं पुत्रमिवौरसं।
मयाहीनमहीनार्थं सर्वतः परिपालय ॥ ९ ॥
त्वमप्यस्य पिता दाता परित्राता च सर्वशः।
भयेष्वभयदश्चैव यथाहं प्लवगेश्वर ! ॥ १० ॥
एष तारात्मजः श्रीमांस्त्वया तुल्यपराक्रमः।
रक्षसाञ्च वधे तेषामग्रतस्ते भविष्यति ॥ ११ ॥
अनुरूपाणि कर्माणि विक्रम्य बलवान् रणे।
करिष्यत्येष तारेयस्तरस्वी तरुणोऽङ्गदः ॥ १२ ॥
सुषेणदुहिता चेयमर्थसूक्ष्मविनिश्चये।
औत्पातिके च विविधे सर्वतः परिनिष्ठिता ॥ १३ ॥

तदेवाह। सुखार्हमिति। अबालिशं समर्थं ॥ ८ ॥

प्राणैः प्राणेभ्यः। मम पुत्रं स्वमौरसं पुत्रमिवाहीनार्थमहीनैरिव स-कलप्रयोजनं यथा तथा सर्वतः सर्वत्र देशे काले च पालय स्वानन्तरम-स्यैव राज्यं देहीति व्यङ्ग्यं ॥ ९ ॥

पालनप्रकारमेव दर्शयति। त्वमपीति। सर्वत्र भवेति शेषः ॥ १० ॥

उक्तं स्वपुत्रस्याबालिशत्वं दर्शयति। एषइति। रक्षसां वधे राम-प्रत्युपकारप्रसङ्गप्राप्ते ॥ ११ ॥

अनुरूपाणि मदनुरूपाणि ॥ १२ ॥

तारारक्षणं ततउपकारमादर्श्य सूचयति। सुषेणेति। तद्दुहिता

यदेषा साध्विति ब्रूयात् कार्य्यं तन्मुक्तसंशयं।
न हि तारामतं किञ्चिदन्यथा परिवर्त्तते ॥ १४ ॥
राघवस्य च ते कार्यं कर्तव्यमविशङ्कया।
स्यादधर्मो ह्यकरणे त्वां च हिंस्यादमानितः ॥ १५ ॥
इमां च मालामाधत्स्व दिव्यां सुग्रीव ! काञ्चनीं।
उदारा श्री स्थिता ह्यस्यां संप्रजह्यात् मृते मयि ॥ १६ ॥

तारा अर्थानां मध्ये सूक्ष्मः परमदुर्ज्ञेयो योऽर्थस्तस्य निश्चये औत्पातिके विविधे नानाप्रकारोत्पातसूचितापत्कालिकानुष्ठेयनिश्चये। सर्वतः ऐहिकामुष्मिकनिश्चये च परिनिष्ठिताऽतिसमर्था ॥ १३ ॥

ततः किन्तत्राह। यदिति। तत् कार्यं त्यक्तसंशयं कार्यमनुष्ठेयं। तदेव द्रढयति नहीति। मदनुभवसिद्धमेतदिति भावः। अनेन त्रैवर्णिकेतरत्वेन तत्काले नावश्यंकर्तव्यपुरुषान्तरस्वीकारायास्ताराया: देवरात् सुग्रीवस्य स्वीकारोप्यनुमत इति गम्यते ॥ १४ ॥

अथ भ्रात्रे वक्तव्यमुपदेशमाह। राघवस्येति। अकरणेऽधर्मः स्यान्मिथ्याप्रतिज्ञत्वापत्तेरिति भावः। एवं पारलौकिकमनिष्टं प्रदर्श्यैहिकमपि तदाह। त्वाञ्चेति। मामिव धर्मभ्रष्टत्वादिति भावः ॥ १५ ॥

अथ राज्यानुमतिं क्रियतापि दर्शयति। इमाञ्चेति। उदारा प्रशस्ता श्रीर्जयलक्ष्मीरस्यां स्थिता महेन्द्रानुग्रहात्। हि यतो मृते मयि प्रवस्पर्शात् एनां सा श्रीर्जह्यात् अत इदानीमेवेमां गृहाणेति भावः ॥ १६ ॥

इत्येवमुक्तः सुग्रीवो वालिना भ्रातृसौहृदात् ।
हर्षं त्यक्त्वा पुनर्दीनो ग्रहग्रस्त इवोडुराट् ॥ १७ ॥
तद्वालिवचनाच्छान्तः कुर्वन्युक्तमतन्द्रितः ।
जग्राह सोऽभ्यनुज्ञातो मालान्ताञ्चैव काञ्चनीं ॥ १८ ॥
तां मालां काञ्चनीं दत्वा दृष्ट्वाचैवात्मजं स्थितम् ।
संसिद्धः प्रेत्यभावाय स्नेहादङ्गदमब्रवीत् ॥ १९ ॥
देशकालौ भजस्वाद्य क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः काले सुग्रीववशगो भव ॥ २० ॥
यथा हि त्वं महाबाहो ! लालितः सततं मया ।
न तथा वर्तमानं त्वां सुग्रीवो बहुमन्यते ॥ २१ ॥

एवं वालिवचः श्रुत्वा पूर्वं वाली दुष्टइति बुद्ध्या तद्वधे जातं हर्षमिदानीमेव सौमनस्य दर्शनेन त्यक्त्वा दीनो विषण्णोभूदित्यर्थः । ग्रहग्रस्त राहुग्रस्तः ॥ १७ ॥

तद्वालिवचनात्तादृशवालिवचनेन शान्तः शान्तवैरः । युक्तं भ्रातृस्नेहोचितदर्शनादिव्यवहारमतन्द्रितः कुर्वन् । मालाग्रहणे वालिनाभ्यनुज्ञातो मालां जग्राह ॥ १८ ॥

प्रेत्यभावाय संसिद्धो निश्चितमरणः ॥ १९ ॥

देशकालौ तत्तत्कर्मोचितौ भजस्व जानीहि । प्रियाप्रिये इष्टानिष्टयोगजे । काले सेवाकाले सुग्रीववशगस्तत्सेवापरो भव ॥ २० ॥

विपक्षे बाधकमाह यथाहीति । बालतया केवलं लालितः । यथा सेवोचितकालेऽपि सेवारहितोऽवर्तिष्ठ तथा सेवाराहित्येन वर्तमानं त्वां सुग्रीवो न बहुमन्येतातः सेवां कुर्वीत्युपदेशः ॥ २१ ॥

नास्यामित्रैर्गतं गच्छेर्मा शत्रुभिररिन्दम!।
भर्तुरर्थपरो दान्तः सुग्रीववशगो भव ॥ २२ ॥
न चातिप्रणयः कार्यः कर्तव्योऽप्रणयश्च ते ।
उभयं हि महादोषं तस्मादन्तरदृग् भव ॥ २३ ॥
इत्युक्त्वाऽथ विवृत्ताक्षः शरसम्पीडितो भृशं ।
विवृतैर्दशनैर्भीमैर्बभूवोत्क्रान्तजीवितः ॥ २४ ॥
ततो विचुक्रुशुस्तत्र वानरा हतयूथपाः ।
परिदेवयमाना स्ते सर्वे प्लवगसत्तमाः ॥ २५ ॥
किष्किन्धाह्यद्य शून्या च स्वर्गते वानरेश्वरे ।
उद्यानानि च शून्यानि पर्वताः काननानि च ॥ २६
हते प्लवगशार्दूले निष्प्रभा वानराः कृताः ।
येन दत्तं महद्युद्धं गन्धर्वस्य महात्मनः ॥ २७ ॥

किञ्चास्य सुग्रीवस्यामित्रैरनुपकारकैस्तथा शत्रुभिरपकारकैश्च गतं सङ्गतं सख्यं मागच्छेः मागच्छ। भर्तुः सुग्रीवस्यार्थपरः प्रयोजनसाधनपरः ॥ २२ ॥

नातिप्रणयः पुत्रत्वात् अप्रणयश्च न कार्य्य । अस्मद्वधादिना अन्तरदृक्। अत्यासत्तिर्विनाशायत्यतिदूरं तु निष्फलं सेवामध्यमभावेन राजवह्निगुरुस्त्रियामिति न्यायेन मध्यममार्गमवलम्बस्वेत्याशयः ॥ २३ ॥ २४ ॥

हता यूथपा येषां तादृशाः परिदेवयमाना विचुक्रुशुरित्यन्वयः ॥२५॥

अस्यैव प्रपञ्चः किष्किन्धेत्यादि ॥ २६ ॥ २७ ॥

गोलभस्य महाबाहो दशवर्षाणि पञ्च च।
नैव रात्रौ न दिवसे तद्युद्धमुपशाम्यति॥ २८॥
ततः षोडशमे वर्षे गोलभो विनिपातितः।
तं हत्वा दुर्विनीतन्तु वाली दंष्ट्राकरालवान्॥ २९॥
सर्वाभयंकरोऽस्माकं कथमेष निपातितः॥ ३०॥

हते तु वीरे प्लवगाधिपे तदा
वनेचरास्तत्र न शर्म लेभिरे।
वनेचराः सिंहयुते महावने
यथा हि गावो निहते गवांपतौ॥ ३१॥
ततस्तु तारा व्यसनार्णवप्लुता
मृतस्य भर्तुर्वदनं समीक्ष्य सा।

गोलभस्य तदाख्यस्य। महद्युद्धं पञ्चदशवर्षावधि अहोरात्रमविश्रमं युद्धं। तदेवाह नैवेति॥ २८॥

दंष्ट्राकरालवान् आर्षःस्वार्थे मतुप्। दंष्ट्राकरालइत्यर्थः॥ २९॥

अस्माकं सर्वाभयङ्करः सर्वभ्यो भयङ्करः स एष वीरः कथं निपातितः॥ ३०॥

वनेचराः प्लवङ्गमा न शर्म लेभिरे इत्यन्वयः। अपरं वनेचरा इति गवां विशेषणं॥ ३१॥ ३२॥

जगाम भूमिं परिरभ्य वालिनं
महाद्रुमं छिन्नमिवाश्रिता लता ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
द्वाविंशः सर्गः ॥ २२ ॥

---

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

# त्रयोविंशः सर्गः ॥

ततः समुपजिघ्रन्ती कपिराजस्य तन्मुखं ।
पतिं लोकश्रुतं तारा मृतं वचनमब्रवीत् ॥ १ ॥
शेषे त्वं विषमे दुःखमकृत्वा वचनं मम ॥
उपलोपचिते वीर ! सुदुःखे वसुधातले ॥ २ ॥
मत्तः प्रियतरा नूनं वानरेन्द्र ! मही तव ।
शेषे हि तां परिष्वज्य मां च न प्रतिभाषसे ॥ ३ ॥
सुग्रीवस्य वशं प्राप्तो विधिरेष भवत्यहो ।
सुग्रीव एव विक्रान्तो वीर ! साहसिक ! प्रिय ! ॥ ४ ॥

अथ तारा मृतं दृष्ट्वा पुनः प्रलपति । तत इति । लोकश्रुतं लोकप्रसिद्धं ॥ १ ॥

उपलैः पाषाणैरुपचिते व्याप्ते सुदुःखे सुतरां दुःखकरे ॥ २ ॥ ३ ॥

एष विधिः रामरूपः सुग्रीवस्य वशं प्राप्तोऽधीनो भवति । अहो इत्याश्चर्ये न तु त्वद्वशं प्राप्तोयेनाद्यैव भार्यया योजितः स्यादिति भावः । अतः सुग्रीवएव विक्रान्तोऽत्र राज्ये भवितेति शेषः ॥ ४ ॥

ऋक्षवानरमुख्यास्त्वां बलिनं पर्युपासते।
तेषां विलपितं कृच्छ्रमङ्गदस्य च शोचतः॥ ५॥
मम चेमा गिरः श्रुत्वा किं त्वं न प्रतिबुध्यसे।
इदं तद्वीरशयनं तत्र शेषे हतो युधि॥ ६॥
शायिता निहता यत्र त्वयैव रिपवः पुरा।
विशुद्धसत्त्वाभिजन! प्रिययुद्ध! मम प्रिय!॥ ७॥
मामनाथां विहायैकां गतस्त्वमसि मानद!।
शूराय न प्रदातव्या कन्या खलु विपश्चिता॥ ८॥
शूरभार्यां हतां पश्य सद्यो मां विधवां कृतां।
अवभग्नश्च मे मानो भग्ना मे शाश्वती गतिः॥ ९॥
अगाधे च निमग्नास्मि विपुले शोकसागरे।
अश्मसारमयं नूनमिदं मे हृदयं दृढं॥ १०

पर्युपासते पर्युपासन्त॥ ५॥

यत्र त्वया निहता रिपवः शायितास्तदिदं वीरशयनं तत्र त्वमपि शेषे॥ ६॥

विशुद्धसत्त्वाभिजन विशुद्धसत्त्ववंशभव प्रिययुद्ध प्रिययुद्धत्वाद्युद्धेनैव मरणं जातमिति भावः॥ ७॥ ८॥

शूराय कन्याया अदाने हेतुः। शूरस्य तव भार्यां मां विधवां कृतां पश्य। मानः राजपत्नीत्वाभिमानः शाश्वती स्थिरा गतिः सुखप्राप्तिः॥ ९॥ १०॥

भर्तारं निहतं दृष्ट्वा यन्नाद्य शतधा कृतं ।
सुहृच्चैव च भर्ता च प्रकृत्या च मम प्रियः ॥ ११ ॥
प्रहारे च पराक्रान्तः शूरः पञ्चत्वमागतः ।
पतिहीना तु या नारी कामं भवतु पुत्रिणी ॥ १२ ॥
धनधान्यसमृद्धापि विधवेत्युच्यते बुधैः ।
स्वगात्रप्रभवे वीर ! शेषे रुधिरमण्डले ॥ १३ ॥
कृमिरागपरिस्तोमे स्वकीये शयने यथा ।
रेणुशोणितसम्वीतं गात्रन्तव समन्ततः ॥ १४ ॥
परिरब्धुं न शक्नोमि भुजाभ्यां प्लवगर्षभ ! ।
कृतकृत्योऽद्य सुग्रीवो वैरेऽस्मिन्नतिदारुणे ॥ १५ ॥

कृतं शोकेनेति शेषः । प्रकृत्याऽनुपाधितः ॥ ११ ॥

प्रहारे रणे पराक्रान्तः परेणाक्रान्त अभिभूतः पञ्चत्वमागतः । एतद्दृष्ट्वापि यद्धृदयं न भिन्नमतो दृढमिति पूर्व्वेणान्वयः । ननु सपुत्रायाः कस्ते शोकोऽत आह । पतिहीनेत्यादि ॥ १२ ॥ १३ ॥

कृमेरिन्द्रगोपादेराग इव रागो यस्य तादृशः परिस्तोम आस्तरणं यस्मिन् । कृमिरागो लाक्षारागः । कृमिरागं वदन्तगार्य्येगा लाक्षिकं प्रियदर्शनमित्युत्पलमालाकोशादित्यन्ये ॥ १४ ॥

परिरब्धुं आलिङ्गितुं न शक्नोमि रेणुशोणितसम्वीतत्वात् । शोकेन भुजयोर्व्बलाभावाच्च गात्रसंलग्नशरत्वाच्च । अस्मिन्वैरे वालिविषये वैरे कृतकृत्यः कृतानुष्ठेयानुष्ठानः ॥ १५ ॥

यस्य रामविमुक्तेन हृतमक्ष्णा भयं।
शरेण हृदिलग्नेन गात्रसंस्पर्शने तव ॥ १६ ॥
वार्य्यामि त्वां निरीक्षन्ती त्वयि पञ्चत्वमागते।
उद्वबर्ह शरं नीलस्तस्य गात्रगतं तदा ॥ १७ ॥
गिरिगह्वरसंलीनं दीप्तमाशीविषं यथा।
तस्य निष्कृष्यमाणस्य बाणस्यापि बभौ द्युतिः ॥ १८ ॥
अस्तमस्तकसन्नद्धरश्मेर्दिनकरादिव।
पेतुः क्षतजधारास्तु व्रणेभ्यस्तस्य सर्व्वशः ॥ १९ ॥
ताम्रगैरिकसम्पृक्ता धारा इव धराधरात्।
अवकीर्णं विमार्जन्ती भर्त्तारं रणरेणुना ॥ २० ॥
अस्त्रैर्नयनजैः शूरं सिषेचास्त्रसमाहतं।
रुधिरोक्षितसर्व्वाङ्गं दृष्ट्वा विनिहतं पतिं ॥ २१ ॥
उवाच तारा पिङ्गाक्षं पुत्रमङ्गदमङ्गना।
अवस्थां पश्चिमां पश्य पितुः पुत्र सुदारुणां ॥ २२ ॥

शरेण तव गात्रसंस्पर्शने वार्यामि निवारिता भवामीत्यन्वयः ॥१६॥

एवं तद्वचः श्रुत्वा नीलः शरं उद्वबर्ह उद्धृतवान्। अस्य बाणस्यातितेजस्विशत्रुवधेन तेजःक्षयान्न पुनस्तूणागमनमिति बोध्यं ॥१७॥१८॥

दिनकरादिति पञ्चमी षष्ठ्यर्थे। रुधिररक्तत्वादिति भावः। व्रणेभ्यः शरशिलापादपजनितेभ्यः ॥ १९ ॥

रणरेणुनावकीर्णं व्याप्तं ॥ २० ॥ २१ ॥

पश्चिमावस्था मरणं ॥ २२ ॥



सम्प्रसक्तस्य वैरस्य गतोऽन्तः पापकर्मणा ।
बालसूर्य्योज्ज्वलतनुं प्रयातश्च यमसादनम् ॥ २३ ॥
अभिवादय राजानं पितरं पुत्र ! मानदम् ।
एवमुक्तः समुत्थाय जग्राह चरणौ पितुः ॥ २४ ॥
भुजाभ्यां पीनवृत्ताभ्यामङ्गदोऽहमिति ब्रुवन् ।
अभिवादयमानं त्वामङ्गदं त्वं यथा पुरा ॥ २५ ॥
दीर्घायुर्भव पुत्रेति किमर्थं नाभिभाषसे ।
अहं पुत्रसहाया त्वामुपासे गतचेतनम् ।
सिंहेन पातितं सद्यो गौः सवत्सेव गोवृषम् ॥ २६ ॥
इष्ट्वा संग्रामयज्ञेन रामप्रहरणाम्भसा ।
तस्मिन्नवभृथे स्नातः कथं पत्न्या मया विना ॥ २७ ॥
या दत्ता देवराजेन तव तुष्टेन संयुगे ।
शातकौम्भीं प्रियां मालां तां ते पश्यामि नेह किम् ॥२८॥

पापकर्मणा प्राचीनपापवशात्सम्प्रसक्तस्य प्राप्तस्य वैरस्यान्तोऽवसानं गतः प्राप्तवान् ॥ २३ ॥ २४ ॥

त्वामभिवादयमानम् इदं तारावाक्यम् ॥ २५ ॥

उपासे समीपे तिष्ठामि ॥ २६ ॥

रामस्य प्रहरणं बाणस्तद्रूपेणाम्भसा मया विना कथमवभृथे स्नातः ॥ २७ ॥

राज्यश्रीः न जहाति त्वां गतासुमपि मानद ! ।
सूर्य्यस्यावर्त्तमानस्य शैलराजमिव प्रभा ॥ २८ ॥
न मे वचः पथ्यमिदं त्वया कृतं
न चास्मि शक्ता हि निवारणे तव ।
हता सपुत्रास्मि हतेन संयुगे
सह त्वया श्रीर्विजहाति मामपि ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
त्रयोविंशः सर्गः ॥ २३ ॥

मालामिह न पश्यामि किन्तु सुग्रीवाय मालादानस्यादर्शनं शोकवशात् दृष्टस्यापि विस्मरणञ्चेत्येवमुक्तिः ॥ २८ ॥

आवर्त्तमानस्य अस्तं गच्छतः शैलराजं तमेवास्ताचलम् ॥ २९ ॥

पथ्यमिदं वच इति स्मृतिसन्निहितस्य प्रागुपदिष्टस्य परामर्शः ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥



## चतुर्विंशः सर्गः ।

तामाश्रुवेगेन दुरासदेन
त्वभिप्लुतां शोकमहार्णवेन ।
पश्यंस्तदा वाल्यनुजस्तरस्वी
भ्रातुर्वधेनाप्रतिमेन तेपे ॥ १ ॥
स बाष्पपूर्णेन मुखेन पश्यन्
क्षणेन निर्विण्णमना मनस्वी ।
जगाम रामस्य शनैः समीपं
भृत्यैर्वृतः संपरिदूयमानः ॥ २ ॥
स तं समासाद्य गृहीतचाप-
मुदात्तमाशीविषतुल्यबाणम् ।

तां ताराम् आश्रुवेगेन शोकमहार्णवेनाभिप्लुतां खिन्नाम् । अप्रतिमेन असदृशेन आत्मन इति शेषः ॥ १ ॥

बाष्पपूर्णेन मुखेनोपलक्षितां तारां पश्यन् निर्विण्णमना खिन्नः सम्परिदूयमानः सम्यगनुतप्यमानः ॥ २ ॥

यशस्विनं लक्षणलक्षिताङ्ग-
मवस्थितं राघवमित्युवाच ॥ ३ ॥
यथामतिज्ञातमिदं नरेन्द्र !
कृतं त्वया दृष्टफलञ्च कर्म।
मयाद्य भोगेषु नरेन्द्रसूनो !
मनोनिवृत्तं हतजीवितेन ॥ ४ ॥
अस्यां महिष्यान्तु भृशं रुदत्यां
पुरेतिविक्रोशति दुःखतप्ते।
हते नृपे संशयितेऽङ्गदे च
न राम ! राज्ये रमते मनो मे ॥ ५ ॥
क्रोधादमर्षादतिविप्रधर्षात्
भ्रातुर्वधो मेऽनुमतः पुरस्तात्।
हतेत्विदानीं हरियूथपेऽस्मिन्
सुतीक्ष्णमिक्ष्वाकुवर ! प्रतप्स्ये ॥ ६ ॥

उदात्तं धीरोदात्तस्वभावं लक्षणैः सामुद्रिकशास्त्रोक्तराजलक्षणै-र्लक्षितमङ्गं यस्य तम् ॥ ३ ॥

दृष्टफलं राज्यभोगफलं कर्म वालिवधरूपं हतजीवितेन कुत्सित-जीवितेन साध्येषु भोगेष्वित्यन्वयः ॥ ४ ॥

अस्यां तारायां पुरे ततस्थे जने अतिविक्रोशति अत्यन्तं रुदति अङ्गदे संशयिते पितृवियोगात् संशयितजीविते ॥ ५ ॥

श्रेयोऽद्य मन्ये मम शैलमुख्ये
तस्मिन् हि वासश्चिरमृष्यमूके ।
यथातथा वर्त्तयतः स्ववृत्त्या
नेमं निहत्य त्रिदिवस्य लाभः ॥ ७ ॥
न त्वां जिघांस्यामि चरेति यन्मा-
मयं महात्मा मतिमानुवाच ।
तस्यैव तद्राम ! वचोऽनुरूप-
मिदं वचः कर्म च मेऽनुरूपम् ॥ ८ ॥
भ्राता कथं नाम महागुणस्य
भ्रातुर्वधं राम ! विरोचयेत ।
राज्यस्य दुःखस्य च वीर ! सारं
विचिन्तयन् कामपुरस्कृतोऽपि ॥ ९ ॥

अतिविप्रधर्षात् भ्रातृकृताधिकपराभवात् हेतोर्ममोत्पन्नात् क्रोधा-दमर्षादसहिष्णुतया च सुतीक्ष्णमतिशयेन प्रतप्तो तपामि ॥ ६ ॥

यथा तथा येन केनापि प्रकारेण स्ववृत्त्या स्वजात्युचितवृत्त्या वर्त्त-यतः जीवतः ऋष्यमूकवास एव श्रेयो मन्ये नतु त्रिदिवस्य लाभ इत्यन्वयः ॥ ७ ॥

तद्वचस्तस्यैवानुरूपम् । ईषत् करघातेऽपि मयि तद्भ्रात्वान्तरभ्रातृ-स्नेहबद्धतया त्वां न जिघांसामि कदापि । चर गच्छेति यत्तद्वच इत्यर्थः । इदं कर्म भ्रातृबधरूपं वचस्तदर्थमाकारणरूपम् ॥ ८ ॥

बधो हि मे मतो नासीत्
स्वमाहात्म्यव्यतिक्रमात्।
ममासीत् बुद्धिदौरात्म्यात्
प्राणहारी व्यतिक्रमः ॥ १० ॥

द्रुमशाखावभग्नोऽहं मुहूर्त्तं परिनिष्टनन्।
सान्त्वयित्वा त्वनेनोक्तो न पुनः कर्त्तुमर्हसि ॥ ११ ॥
भ्रातृत्वमार्यभावश्च धर्मश्चानेन रक्षितः।
मया क्रोधश्च कामश्च कपित्वञ्च प्रदर्शितम् ॥ १२

कामः पुरस्कृतो येन तादृशोऽपि भ्राता राज्यस्य तत्सुखस्य दुःखस्य भ्रातृबधे भाविदुःखस्य सारं तारतम्यं विचिन्तयन् विचारयन्। कथं भ्रातुर्बधं रोचयेत एवञ्चाहं तत्तारतम्यानभिज्ञ इति भावः ॥ ९ ॥

उक्तमेव विवृणोति बधोहीति। मां हन्तुं तस्य मतिर्नासीदित्यर्थः। तत्र हेतुः स्वमाहात्म्यव्यतिक्रमात्। अनुचितकर्मकारी बालीत्ययशःप्रसङ्गभयात्। प्राणहारी भ्रातुरिति शेषः। व्यतिक्रमोऽन्यायः ॥ १० ॥

द्रुमशाखयावभग्नः पलायितः। अतएव मुहूर्त्तं परिनिष्टनन् त्वामाक्रोशन् यदाऽभवं तदा तेन भ्रात्रा सान्त्वयित्वा पुनरेवं दुश्चेष्टां कर्त्तुं नार्हसि इत्युक्तः। न पुनर्मां हतवानित्यर्थः ॥ ११ ॥

अतएव भ्रातृत्वमित्यादि ॥ १२ ॥

अचीन्तनीयं परिवर्जनीय-
मनीप्सनीयं स्वनवेक्षनीयम् ।
प्राप्तोऽस्मि पाप्मानमिदं वयस्य !
भ्रातुर्बधात्त्वाष्ट्रवधादिवेन्द्रः ॥ १३ ॥

पाप्मानमिन्द्रस्य मही जलञ्च
वृक्षाश्च कामं जगृहुः स्त्रियश्च ।
को नाम पाप्मानमिमं सहेत
शाखामृगस्य प्रतिपत्तुमिच्छेत् ॥ १४ ॥

नार्हामि सम्मानमिमं प्रजानां
न यौवराज्यं कुतएव राज्यम् ।
अधर्मयुक्तं कुलनाशयुक्त-
मेवम्विधं राघव ! कर्म कृत्वा ॥ १५ ॥

अचिन्तनीयं चिन्तयितुमप्ययोग्यम् । अतएवार्यैर्नित्यं परिहरणीय यत्किञ्चिदुपाधिनाप्यनीप्सनीयम् । आत्मकर्तृकमपि सर्वथाऽनवेक्षणीयं दर्शनानर्हम् इदं प्राप्तोऽस्मि । इदं पदार्थमाह,—पाप्मानमिति हे वयस्य ! भ्रातुः ज्येष्ठस्य भ्रातुर्बधात् पाप्मानं तद्रूपं वस्त्वित्यर्थः । त्वाष्ट्रो विश्वरूपः ॥ १३ ॥

प्रतिपत्तुं प्राप्तुं क इच्छेत् को वा सहेत । ग्रहीतुं शक्नुयादित्यर्थः ॥ १४ ॥

प्रजानां सम्मानं ताभिः क्रियमाणं स्वसम्माननमपि नार्हामि

पापस्य कर्त्तास्मि विगर्हितस्य
क्षुद्रस्य लोकापकृतस्य लोके।
शोको महान्मामभिवर्त्ततेऽयं
वृष्टेर्यथा निम्नमिवाम्बुवेगः॥ १६॥
सोदर्य्यघातापरगात्रबालः
सन्तापहस्ताक्षिशिरोविषाणः।
एनोमयो मामभिहन्ति हस्ती
दृप्तो नदीकूलमिव प्रवृद्धः॥ १७॥
अहो बतेदं नृवराविषह्यं
निवर्त्तते मे हृदि साधुवृत्तम्।

पापग्रस्तत्वात्। न यौवराज्यम्। ज्येष्ठस्य पुत्रमङ्गदं राज्ये कृत्वा यथा प्राप्तयौवराज्यमित्यर्थः एवम्विधं कर्म कृत्वा राज्यं सर्वथा नार्हामीत्यन्वयः॥ १५॥

क्षुद्रस्य क्षुद्रयोग्यस्य लोके इहलोके विगर्हितस्य निन्दितस्य लोकापकृतस्य परलोके परमार्थसाधनस्य पापस्य कर्त्तास्मि। अतो महान् शोको माम् इव तयाभिवर्त्तते। यथा वृष्टेरम्बुवेगो निम्नम् इव। इवशब्दस्तथा शब्दार्थे॥ १६॥

सोदर्य्यघात एवापरगात्रभागो बालस्य यस्य तज्जसन्ताप एव हस्ताक्षिशिरोविषाणं यस्य सः दृप्तोमत्तः प्रवृद्धो महान्॥ १७॥

हे नृवर! इदमंहः पापम्। बत खेदे। अविषह्यं सोढुमशक्यं प्राप्य मे हृदि स्थितं साधुवृत्तं जन्मान्तरार्जितपुण्यं निवर्त्तते विवर्णमत-

अग्नौ विवर्णं परितप्यमानं
किट्टं यथा राघव! जातरूपम् ॥ १८ ॥
महाबलानां हरियूथपाना-
मिदं कुलं राघव! मन्निमित्तम् ।
अस्याङ्गदस्यापि च शोकतापा-
दर्धस्थितप्राणमितीव मन्ये ॥ १९ ॥
सुतः सुलभ्यः सुजनः सुवश्यः
कुतस्तु पुत्रः सदृशोऽङ्गदेन ।
न चापि विद्येत स वीर! देशो
यस्मिन् भवेत्सोदरसन्निकर्षः ॥ २० ॥

एवामा परितप्यमानं जातरूपम् अविषह्यमशक्यसहवासस्थानं प्राप्य किट्टं मलं यथा निवर्त्तते तथेत्यर्थः । यथा बलवतोत्तमेनाधमः स्थातुं न शक्नोति तथा बलवताधमेनसहोत्तमोपीत्याशयः । एवञ्चानेन पापेन सर्वपुण्यक्षयो जात इति तात्पर्य्यम् । केचित्तु अग्नौ परितप्यमानं जातरूपं स्वर्णं यथा विवर्णं विवर्णताकारं किट्टं दाहकक्षारद्रव्यं प्राप्य निवर्त्तते भस्म भवति तथेत्यर्थ इत्याहुः ॥ १८ ॥

मन्निमित्यम् । मयेतत्स्वामिवधादिति भावः । अपि चास्याङ्गदस्य शोकतापाच्च इतीव मन्ये इत्युत्प्रेक्षाबोधकम् ॥ १९ ॥

सुलभ्यः सुलभ इत्यर्थः ॥ २० ॥

अद्याङ्गदो वीरवरो न जीवे-
ज्जीवेत माता परिपालनार्थम्।
विना तु पुत्रं परितापदीना
सा नैव जीवेदिति निश्चितं मे ॥ २१ ॥
सोऽहं प्रवेक्ष्याम्यतिदीप्तमग्निं
भ्रात्रा च पुत्रेण च सख्यमिच्छन्।
इमे विचेष्यन्ति हरिप्रवीराः
सीतां निदेशे परिवर्त्तमानाः ॥ २२ ॥
कृत्स्नन्तु ते सेत्स्यति कार्य्यमेत-
न्मय्यप्यतीते मनुजेन्द्रपुत्र !।
कुलस्य हन्तारमजीवनार्हं
रामानुजानीहि कृतागमं माम् ॥ २३ ॥
इत्येवमार्त्तस्य रघुप्रवीरः
श्रुत्वा वचो बालिजघन्यजस्य।
सञ्जातबाष्पः परवीरहन्ता
रामो मुहूर्त्तं विमना बभूव ॥ २४ ॥

अङ्गदो न जीवेत्। यदि जीवेत् तदा माता तारा पुत्रपालनाय जीवेत् तदभावे तु सा सर्व्वथा न जीवेत् इत्यर्थः ॥ २१ ॥
सख्यं समानत्वं निदेशे त्वदाज्ञायाम् ॥ २२ ॥
अनुजानीहि अग्निप्रवेशायेति शेषः ॥ २३ ॥

तस्मिन् क्षणेऽभीक्ष्णमवेक्षमाणः
क्षितिक्षमावान् भुवनस्य गोप्ता ।
रामो रुदन्तीं व्यसने निमग्नां
समुत्सुकः सोऽथ ददर्श ताराम् ॥ २५ ॥

ताञ्चारुनेत्रां कपिसिंहनाथां
पतिं समाश्रित्य तदाशयानाम् ।
उत्थापयामासुरदीनसत्त्वां
मन्त्रिप्रधानाः कपिराजपत्नीम् ॥ २६ ॥

सा विस्फुरन्ती परिरभ्यमाणा
भर्त्तुः समीपादपनीयमाना ।
ददर्श रामं शरचापपाणिं
स्वतेजसा सूर्य्यमिव ज्वलन्तम् ॥ २७ ॥

सुसंवृतं पार्थिवलक्षणैश्च
तं चारुनेत्रं मृगशावनेत्रा ।

सञ्जातबाष्पः दुःखिप्राणिदर्शनेन महतामयं स्वभावः ॥ २४ ॥

तस्मिन् क्षणे तस्मिन्नवसरे । तारां रुदन्तीमभीक्ष्णं वारंवारमवेक्षमाणः जीवन्तीमिच्छन् क्षितिरिव क्षमावान् । समुत्सुकः शोकापनयनायेति शेषः ॥ २५ ॥

कपिसिंहनाथां कपिसिंहानां स्वामिनीम् ॥ २६ ॥ २७ ॥

अदृष्टपूर्वं पुरुषप्राधान-
मयं स काकुत्स्थ इति प्रजज्ञे ॥ २८ ॥
तस्येन्द्रकल्पस्य दुरासदस्य
महानुभावस्य समीपमार्य्या ।
आर्त्तातितूर्णं व्यसनं प्रपन्ना
जगाम तारा परिविक्लवन्ती ॥ २९ ॥
तं सा समासाद्य विशुद्धसत्त्वं
शोकेन सम्भ्रान्तशरीरभावा ।
मनस्विनी वाक्यमुवाच तारा
रामं रणोत्कर्षणलब्धलक्ष्यम् ॥ ३० ॥
त्वमप्रमेयश्च दुरासदश्च
जितेन्द्रियश्चोत्तमधर्म्मकश्च ।
अक्षीणकीर्त्तिश्च विचक्षणश्च
क्षितिक्षमावान् क्षतजोपमाक्षः ॥ ३१ ॥

पुरुषप्रधानं पुरुषश्रेष्ठम्। स अङ्गदोक्तः काकुत्स्थोऽयमिति प्रजज्ञे इति सम्बन्धः ॥ २८ ॥

परिविक्लवन्ती कष्टेन स्खलनपूर्वं गच्छन्ती ॥ २९ ॥

सम्भ्रान्तो विस्मृतः शरीरभावो राजस्त्रीत्वादिर्यया सा रणेषु युद्धेषूत्कर्षणेन सर्व्वाधिकोत्कर्षेण लब्धं लक्ष्यं वध्यं येन सर्व्वतोऽधिकवेध्यवेधक इत्यर्थः ॥ ३० ॥

त्वमात्तबाणासनबाणपाणि-
र्महाबलः संहननोपपन्नः ।
मनुष्यदेहाभ्युदयं विहाय
दिव्येन देहाभ्युदयेन युक्तः ॥ ३२ ॥
येनैव बाणेन हतः प्रियो मे
तेनैव बाणेन हि मां जहीहि ।
हता गमिष्यामि समीपमस्य
न मां विना वीर ! रमेत वाली ॥ ३३ ॥
स्वर्गेऽपि पद्मामलपत्रनेत्र !
समेत्य सम्प्रेक्ष्य च मामपश्यन् ।

अप्रमेयः देशतःकालतश्चापरिच्छेद्यः गुणयत्तया दुर्ज्ञेयश्च । दुरासदः योगिभिरपि प्राप्तुमशक्यः । उत्तमधर्मक पुरुषोत्तमधर्मा अच्युतकीर्त्तिः पापवदाभासमानेनापि कर्मणेति शेषः । अतएव पुरुषोत्तमधर्मा । क्षतजोपमाक्षः रक्ताक्षः ॥ ३१ ॥

आत्तबाणासनश्चासौ बाणपाणिश्चेति कर्मधारयः । संहननं दृढ़गात्रता । तादृशेन त्वया हतो वाली । मनुष्यदेहाभ्युदयं मनुष्यलोकवर्त्तिदेहप्राप्यमभ्युदयसुखं विहाय दिव्यदेहेन प्राप्योयोऽभ्युदयस्तेन युक्तः । समास आर्षः ॥ ३२ ॥

अतः येनैवेति रमेत रंस्यते ॥ ३३ ॥

नह्येष उच्चावचताम्रचूड़ा
विचित्रवेशाप्सरसो भजिष्यत् ॥ ३४ ॥
स्वर्गेऽपि शोकञ्च विवर्णताञ्च
मया विना प्राप्स्यति वीर! वाली।
रम्ये नगेन्द्रस्य तटावकाशे
विदेहकन्यारहितो यथा त्वम् ॥ ३५ ॥
त्वं वेत्थ तावत् वनिताविहीनः
प्राप्नोति दुःखं पुरुषः कुमारः।
तत्त्वं प्रजानन् जहि मां न वाली
दुःखं ममादर्शनजं भजेत ॥ ३६ ॥

पद्मस्यामलं यत्पत्रं तद्वन्नेत्र। ममेत्याप्सरोभिस्ताः संप्रेच्य च मामपश्यन्न रमेतेत्यन्वयः। उच्चावचैर्नानाप्रकारैस्ताम्रै रक्तपुष्पैः कृतः शेखरो याभिस्ता अप्सरसो नाभजिष्यन्न भजिष्यति रक्तपुष्पधारणं वालिवशीकरणाय ॥ ३४ ॥

तटावकाशे तटदेशे ॥ ३५ ॥

यद्वनिताहीनो दुःखं प्राप्नोति तत्त्वं वेत्थ। अतस्तज्जानन् त्वं मां जहि कुमारः सुन्दरः पुरुषः। यद्वा दुःखहेतुमाह,—कुमार इति। कुत्सितो मारो यस्य मारकत्वेन मदनस्य प्रसिद्धेः। अथवा कुत्सितो मारो मरणं यस्य। मरणादपि दुःखजनकत्वादेवमुक्तिः। भावे घञ् ॥ ३६ ॥

यच्चापि मन्येत भवान् महात्मा
स्त्रीघातदोषस्तु भवेन्न मह्यम् !
आत्मेयमस्येति हि मां जहि त्वं
न स्त्रीबधः स्यान्मनुजेन्द्रपुत्र ! ॥ ३७ ॥
शास्त्रप्रयोगाद्विविधाच्च वेदा-
दनन्यरूपाः पुरुषस्य दाराः ।
दारप्रदानाद्धि न दानमन्यत्
प्रदृश्यते ज्ञानवतां हि लोके ॥ ३८ ॥
त्वञ्चापि मां तस्य मम प्रियस्य
प्रदास्यसे धर्ममवेक्ष्य वीर ! ।

मह्यं स्त्रीघातदोषो भवेदिति भवान् महात्मा मन्येत तदपि न इयं ताराऽस्य बालिनः आत्मेति ज्ञात्वा जहि। एवञ्च तदभिन्नत्वात् मम न ते स्त्रीबधदोष इति भावः। महात्मेत्यनेन ताड़कावधादिकृतवतः स्त्रीबधो अकिञ्चित्कर इत्यपि सूचितम् ॥ ३७ ॥

स्त्रीणां पुरुषात्मत्वमेव साधयति शास्त्रेति। शास्त्रे शास्त्रीय-यागाद्यनुष्ठाने प्रकर्षेण सहैव योगात् अधिकारादिविधाच्च वेदात् अर्द्धो वा एष आत्मनो यत्पत्नीति श्रुतेः। अनन्यरूपाः अभिन्नरूपाः। न केवलं दोषाभावमात्रमपि तु स्त्रीदानफलमपीत्याह,—दारेति अन्य-दधिकं दानं नेति भावः ॥ ३८ ॥

अनेन दानेन न लप्स्यसे त्व-
मधर्मयोगं मम वीर! घातात् ॥ ३९ ॥
आर्त्तामनाथामपनीयमाना-
मेवं गतां नार्हसि मामहन्तुम्।
अहं हि मातङ्गविलासगामिना
प्लवङ्गमानामृषभेण धीमता।
विना वरार्होत्तमहेममालिना
चिरं न शक्ष्यामि नरेन्द्र! जीवितुम् ॥ ४० ॥
इत्येवमुक्तस्तु विभुर्महात्मा
तारां समाश्वास्य हितं बभाषे।

त्वच्चापीति। एवञ्च धर्मेण पापमपनुदतीति न्यायेपि हे वीर ते न मद्वधदोष इति भावः। यद्वा मम वीरस्य पत्युः छलेन घातात् प्राप्त-मधर्मसम्बन्धं न लप्स्यसे। किञ्च ततएव मच्छापतः प्राप्तमधर्मयोगमधर्म-फलयोगं स्त्रीवियोगरूपं न लप्स्यते ममावधे तु लप्स्यसे एवातएव कांचित्पश्यते। अचिरेणैव कालेन त्वया वीर्य्यबलाहृता। सा सीता मम शापेन न चिरात्त्वयि वत्स्यतीति ॥ ३९ ॥

अपनीयमानां प्रियसकाशादन्यत इति शेषः। अहन्तु नार्हसि। अपितु हन्तुमेवेत्यर्थः। तत्रहेतुरहं हीति वरार्होत्तमहेममालिना श्रेष्ठयोग्योत्तमस्वर्णमालावता ॥ ४० ॥

मा वीरभार्य्ये ! विमतिं कुरुष्व
लोको हि सर्वो विहितो विधात्रा ।
तच्चैव सर्वं सुखदुःखयोगं
लोकोऽब्रवीत्तेन कृतं विधात्रा ॥ ४२ ॥
त्रयोऽपि लोका विहितं विधानं
नातिक्रमन्ते वशगा हि तस्य ।
प्रीतिं परां प्राप्स्यसि तां तथैव
पुत्रश्च ते प्राप्स्यति यौवराज्यम् ॥ ४३ ॥
धात्रा विधानं विहितं तथैव
न शूरपत्न्यः परिदेवयन्ति ॥ ४४ ॥

विमतिं मरणविषयां विरुद्धमतिम् । सर्वो लोको विधात्रा विहितः अहरादौ सृष्टः । तं लोकं सुखदुःखाभ्यामवर्ज्जाभ्यां योगोऽस्य तं तेनैव विधात्रा कृतम् । लोक्यतेऽनेनेति लोको वेदोऽब्रवीत् । न ह्वैस शरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति श्रुतेः ॥ ४२ ॥

त्रयोऽपि लोका लोकत्रयवासिनोऽपि जना विधात्रा विहितं विधानं नातिक्रमन्ते हि यतस्तस्य वशगाः ब्रह्मादिस्थावरान्ताः वाली परां प्रीतिं तत्सम्बन्धजां प्राप्स्यति मत्सङ्कल्पात् । किञ्च भवत्यपि वालि-सम्बन्धजां प्रीतिं सुग्रीवसम्बन्धात्प्राप्स्यसि । ते पुत्रो यौवराज्यं प्राप्स्यति च । येनाहमपि पापं प्राप्स्याम्येवेति ॥ ४३ ॥

आश्वासिता तेन महात्मना तु
प्रभावयुक्तेन परन्तपेन।
सा वीरपत्नी ध्वनता मुखेन
सुवेषरूपा विरराम तारा॥ ४५॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
चतुर्विंशः सर्गः॥ २४॥

धात्रेदं विधानं तथैव विहितम्। यथा मयोक्तं कृतञ्च। अनेन सर्वज्ञत्वशक्तिराविष्कृता। एवमीश्वरकृतं सर्वं ज्ञात्वा आप्तपत्नी न शोचन्ति। ध्वनता मुखेनोपलक्षिता विरराम त्यक्तपरिदेवनाभूत्॥ ४४॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे चतुर्विंशः सर्गः॥ २४॥

---

# पञ्चविंशः सर्गः ।



स सुग्रीवञ्च ताराञ्च साङ्गदां सहलक्ष्मणः ।
समानशोकः काकुत्स्थः सान्त्वयन्निदमब्रवीत् ॥ १ ॥
न शोकपरितापेन श्रेयसा युज्यते मृतः ।
यदत्रानन्तरं कार्य्यं तत्समाधातुमर्हथ ॥ २ ॥
लोकवृत्तमनुष्ठेयं कृतं वो बाष्पमोक्षणम् ।
न कालादुत्तरं किञ्चित् परं कर्म उपासितुम् ॥ ३ ॥

समानशोकः सुग्रीवादिभिरिति शेषः ॥ १ ॥

शोकयुक्तः परितापस्तेन । शोकश्चित्तधर्मः तावन्मात्रेणैव न मृतस्य श्रेयः । समाधातुं अनुष्ठातुम् ॥ २ ॥

लोकवृत्तं लोकाचारोऽप्यनुष्ठेय एव । तच्च बाष्पमोक्षणरूपं कृतं युष्माभिरिति शेषः । यद्वा कृतं पर्य्याप्तं बाष्पमोक्षणमिति द्वितीया तृतीयार्थे । यतः कालात्तत्तत्कर्मणि विहितात्कालादुत्तरं परं तस्मिन्नतिक्रान्त इति यावत् । किञ्चिदपि परं कर्म विहितं कर्म उपासितुं कर्त्तुमशक्यं कालस्योपादेयकारणत्वात् । अकाले कृतस्याकृतप्रायत्वादिति भावः ॥ ३ ॥

नियतिः कारणं लोके नियतिः कर्मसाधनम्।
नियतिः सर्वभूतानां नियोगेष्विह कारणम्॥ ४॥
न कर्त्ता कस्यचित् कश्चिन्नियोगे नापिचेश्वरः।
स्वभावे वर्त्तते लोकस्तस्य कालः परायणम्॥ ५॥

व तस्य मुख्यत्वं दर्शयति। नियतिरिति। नियतिः नियम्यतेऽनयेति नियतिः कालः। कालकृता व्यवस्था निमेषादिपरार्धान्ता। कालस्त्वीश्वर एव। लोके लोकस्थत्यादिव्यवहारे। कर्मणो लौकिकालौकिककर्मप्रवृत्तेर्दिनादिरूपेण कारणं काल एव सर्वभूतानां नियोगाधिकृतप्राणिमात्रस्य नियोगेषु ज्योतिष्टोमादिषु नियतिर्वसन्तादिः कारणम्॥ ४॥

कालातिरिक्तं न साक्षात् प्रवर्त्तकमित्याह,—न कर्त्तेत्यादि। कस्यचित् कृष्यादेः कश्चित् कर्त्ता न नियतिनिरपेक्षः कर्त्ता न। तथा नियोगे नियोगानुष्ठानेपि नियतिनिरपेक्षः कश्चिदीश्वरो न नियतिनैरपेक्ष्येण समर्थो न। यतो लोको लोकव्यवहारः स्वभावे ईश्वरमहिते प्राक्कृतस्वकर्मणि वर्त्तते तदधीनो वर्त्तते। तस्य च स्वभावस्य कालः परायणं सहकारीत्यर्थः। तदुक्तं सूतसंहितायां शिववाक्येन। स्वभावादेव सम्भूतं समस्तमिति केचन। तन्न सिध्यति विप्रेन्द्रा देशकालाद्यपेक्षणात्। मत्तः कर्मानुरूपेण जगज्जन्मादि जायते। एष स्वभावो विप्रेन्द्रा इति वेदार्थनिर्णयः। न मया केवलेनापि न च केवलकर्मणा। प्राणिनां कर्मपाकेन मया च मुनिसत्तम। जगतः सम्भवो नाशः स्थितिश्च भवति द्विजा इति॥ ५॥

न कालः कालमत्येति न कालः परिहीयते ।
स्वभावञ्च समासाद्य न कश्चिदतिवर्त्तते ॥ ६ ॥
न कालस्यास्ति बन्धुत्वं न हेतुर्न पराक्रमः ।
न मित्रज्ञातिसम्बन्धः कारणं नात्मनो वशः ॥ ७ ॥
किन्तु कालपरीणामो द्रष्टव्यः साधु पश्यता ।
धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः ॥ ८ ॥

कालात्मा भगवानेव सर्वकर्मप्रवर्त्तक इत्याह,—न काल इति । कालो भगवानीश्वरः कालं स्वकृतां कालव्यवस्थां जन्ममरणादिरूपां नात्येति नातिक्रामति । स भगवान् काल न परिहीयते । अनुक्षणं जगद्धानिकरस्य हानिकरणाभावात् । स्वभावमुक्तलक्षणं समासाद्य किञ्चिदप्युत्कृष्टमपि जीवजातं नातिवर्तते । उत्पत्तियोग्यं उत्पद्यते नश्वरं नश्यत्येवेत्यर्थः ॥ ६ ॥

स च भगवान्न पक्षपातस्वभाव इत्याह,—न कालस्येति । न कालस्य बन्धुत्वमस्ति । प्राप्तकालं वस्तु सर्वथा संहरत्येव । न तु पक्षपातेन किमपि त्यजतीत्यर्थः । न हेतुः स्वसृष्ट्ये स्वनाशे वा स्वकृतव्यवस्थातिरिक्तकारणनिरपेक्ष इत्यर्थः । यद्वा प्राप्तकालस्य संहारनिवर्त्तने न कश्चिदपि हेतुर्मन्त्रतन्त्रौषधादिः प्रभवतीत्यर्थः । तस्यैव प्रपञ्चः । न पराक्रमः महापराक्रमवतामपि काले प्राप्ते संहारो भवत्येव । न मित्रज्ञातिसम्बन्धः न बहुमित्रता न बहुज्ञातिता प्राप्तकालसंहारनिवर्त्तने हेतुः । सोऽपि भगवानात्मनः प्रत्यग्वर्गस्य जीवजातस्य न

इतः स्वां प्रकृतिं वाली गतः प्राप्तः क्रियाफलम्।
सामदानार्थसंयोगैः पवित्रं प्लवगेश्वरः॥ ९॥
स्वधर्मस्य च संयोगाज्जितस्तेन महात्मना।
स्वर्गः परिगृहीतश्च प्राणा न परिरक्षता॥ १०॥
एषा वै नियतिः श्रेष्ठा यां गतो हरियूथपः।
तदलं परितापेन प्राप्तकालमुपास्यताम्॥ ११॥
वचनान्ते तु रामस्य लक्ष्मणः परवीरहा।

वशस्तदिच्छाधीनो न किन्तु परमस्वतन्त्र एव। तेन च भगवता कालेन क्रियमाणा नियत्यधीनः स्व स्व कर्मपरिणाम एव सर्वसुख-दुःखादिलाभ इत्येव साधु पश्यता सुमतिना विवेकवता द्रष्टव्यो ज्ञातव्यः। ननु विषादहर्षौ कर्त्तव्यौ नापि स्वसामर्थ्यनिन्देति भावः। एवं धर्मादयोऽपि चात् अधर्मादयोऽपि कालक्रमेणैव समाहिताः सम्पादिता भवन्ति॥ ७॥ ८॥

प्रकृतमाह,—सामदानाभ्यामर्जितैरर्थसंयोगैरैश्वर्यैः पवित्रं शुभं क्रियाफलं भोगमिहलोके प्राप्तवान् वाली इतो लोकाद्देहाच गतोऽपगतः स्वां प्रकृतिं गतः प्राप्तः कार्य्याणां कारणे लयात्। एवमैन्द्रलोकं गतो वालीति सूचितम्॥ ९॥

स्वधर्मस्य संयोगात्तेन महात्मना वालिना पूर्वं स्वर्गो जितोऽर्जितः। युद्धे प्राणा न परिरक्षतेदानीं परिगृहीतश्च प्राप्तश्च॥ १०॥

अब्रवत् प्रश्रितं वाक्यं सुग्रीवं गतचेतसम् ॥ १२ ॥
कुरु त्वमस्य सुग्रीव ! प्रेतकार्य्यमनन्तरम् ।
ताराङ्गदाभ्यां सहितो वालिनो दहनं प्रति ॥ १३ ॥
समाज्ञापय काष्ठानि शुष्काणि च बहूनि च ।
चन्दनानि च दिव्यानि वालिसंस्कारकारणात् ॥ १४ ॥
समाश्वासय दीनं त्वमङ्गदं दीनचेतसम् ।
मा भूर्बालिशबुद्धिस्त्वं त्वदधीनमिदं पुरम् ॥ १५ ॥
अङ्गदस्त्वानयेन्माल्यं वस्त्राणि विविधानि च ।
घृतं तैलमथो गन्धान्यच्चात्र समनन्तरम् ॥ १६ ॥
त्वं तार ! शिबिकां शीघ्रमादायागच्छ सम्भ्रमात् ।
त्वरा गुणवती युक्ता ह्यस्मिन् काले विशेषतः ॥ १७ ॥

एषा नियतिः कालकृतव्यवस्थाप्राप्तिः प्राप्तकालं क्रमति शेषः ॥ ११ ॥ १२ ॥

अस्य प्रेतकार्य्यं कुर्वित्यन्वयः । दहनं प्रति दहननिमित्तं यतस्वेति शेषः ॥ १३ ॥

वालिसंस्कारनिमित्तं काष्ठानि आनेतुं समाज्ञापयेतिसम्बन्धः ॥ १४ ॥

त्वं सुग्रीव अङ्गदं समाश्वासय ॥ १५ ॥

कः कुत्राज्ञापनीयस्तत्राह,—अङ्गदस्त्विति । समनन्तरमपेक्षितम् ॥ १६ ॥

सज्जीभवन्तु प्लवगाः शिबिकावाहनोचिताः।
समर्था बलिनश्चैव निर्हरिष्यन्ति वालिनम्॥ १८॥
एवमुक्त्वा तु सुग्रीवं सुमित्रानन्दवर्द्धनः।
तस्थौ भ्रातृसमीपस्थो लक्ष्मणः परवीरहा॥ १९॥
लक्ष्मणस्य वचः श्रुत्वा तारः सम्भ्रान्तमानसः।
प्रविवेश गुहां शीघ्रं शिबिकासक्तमानसः॥ २०॥
आदाय शिबिकां तारः स तु पर्य्यापतत् पुनः।
वानरैरुह्यमानां तां शूरैरुद्वहनोचितैः॥ २१॥
दिव्यां भद्रासनयुतां शिबिकां स्यन्दनोपमाम्।
पक्षिकर्मभिराचित्रां द्रुमकर्मविभूषिताम्॥ २२॥
आचितां चित्रपत्तीभिः सुनिविष्टां समन्ततः।
विमानमिव सिद्धानां जालवातायनायुताम्॥ २३॥

तारः सचिवः सम्भ्रमाद्वेगात्। हि यतोऽस्मिन् काले विशेषतस्त्वरा युक्ता सैव चेष्टस्मिन्नवसरे गणवतीति सम्बन्धः॥ १७॥

समर्था बलिनः शिबिकावाहनोचिताः ये निर्हरिष्यन्ति ते सज्जीभवन्त्वित्यन्वयः। निर्हारो दहनदेशनयनम्॥ १८॥ १९॥ २०॥ २१॥

भद्रासनयुतां मध्ये राजोचितमहार्हासनवतीम्। पक्षिकर्मभिः पक्षिप्रकृतिभिः आसमन्ताच्चित्रां चित्रवतीम्। द्रुमकर्मभिर्द्रुमप्रकृतिभिर्भूषिताम्॥ २२॥

सुनियुक्तां विशालाञ्च सुकृतां शिल्पिभिः कृताम् ।
दारुपर्वतकोपेतां चारुकर्मपरिष्कृताम् ॥ २४ ॥
वराभरणहारैश्च चित्रमाल्योपशोभिताम् ।
गुहागहनसंच्छन्नां रक्तचन्दनभूषिताम् ॥ २५ ॥
पुष्पौघैः समभिच्छन्नां पद्ममालाभिरेव च ।
तरुणादित्यवर्णाभिर्भ्राजमानाभिरावृताम् ॥ २६ ॥
ईदृशीं शिविकां दृष्ट्वा रामो लक्ष्मणमब्रवीत् ।
क्षिप्रं विनीयतां वाली प्रेतकार्य्यं विधीयताम् ॥ २७ ॥
ततो वालिनमुद्यम्य सुग्रीवः शिविकां तदा ।
आरोपयत विक्रोशन्नङ्गदेन सहैव तु ॥ २८ ॥
आरोप्य शिविकाञ्चैव वालिनं गतजीवितम् ।

चित्रपत्तीभिश्चित्रपदातिभिः दीर्घं च्छार्षः। सुनिविष्टां सुसन्निवेशाम्। जालवातायनयुताम्। जालवन्निर्मितवातमार्गयुताम् ॥ २३ ॥

सुनियुक्तां सुश्लिष्टां शिल्पिभिर्विशालां कृताम्। एवमुक्तरीत्या सुकृताम्। दारुनिर्मितक्रीड़ापर्वतयुक्तां चारुकर्मभिः परिष्क्रियाकर्मभिः परिष्कृताम् ॥ २४ ॥

तदेवाह,—वराभरणहारैरिति। युक्तामिति शेषः। गुहागहनशब्देन शिविकोपरि प्रसार्य्यमाणं पञ्जरमुच्यते ॥ २५ ॥ २६ ॥

विनीयतां दहनदेशमिति शेषः ॥ २७ ॥

उद्यम्य हस्ताभ्यां भूमेरूर्द्ध्वं कृत्वा ॥ २८ ॥

अलङ्कारैश्च विविधैर्माल्यैर्वस्त्रैश्च भूषितम् ॥ २९ ॥
आज्ञापयत्तदा राजा सुग्रीवः प्लवगेश्वरः ।
और्ध्वदेहिकमार्यस्य क्रियतामनुकूलतः ॥ ३० ॥
विश्राणयन्तो रत्नानि विविधानि बहूनि च ।
अग्रतः प्लवगा यान्तु शिबिका तदनन्तरम् ॥ ३१ ॥
राज्ञामृद्धिविशेषा हि दृश्यन्ते भुवि यादृशाः ।
तादृशैरिह कुर्वन्तु वानरा भर्तृसत्क्रियाम् ॥ ३२ ॥
तादृशं वालिनः क्षिप्रं प्राकुर्वन्नौर्ध्वदेहिकम् ।
अङ्गदं परिरभ्याशु तारप्रभृतयस्तदा ॥ ३३ ॥
क्रोशन्तः प्रययुः सर्वे वानरा हतबान्धवाः ।
ततः प्रणिहिताः सर्वा वानर्योऽस्य वशानुगाः ॥ ३४ ॥
चुक्रुशुर्वीर वीरेति भूयः क्रोशन्ति ताः प्रियम् ।
ताराप्रभृतयः सर्वा वानर्यो हतबान्धवाः ॥ ३५ ॥

शिबिकामारोप्य शिबिकायां स्थापयित्वा ॥ २९ ॥

आज्ञापनप्रकार और्ध्वदेहिकमित्यादि । और्ध्वदेहिकं तत् क्रियायोग्यं स्थानं अनुकूलतः नदीतीरसमीपतः क्रियतामित्युत्तरमिति द्रष्टव्यम् ॥ ३० ॥

विश्राणयन्तः क्षिपन्तः इत्याज्ञापयदित्यन्वयः ॥ ३१ ॥

तादृशैः ऋद्धिविशेषैः सत्क्रियां कुर्वन्तु ॥ ३२ ॥ ३३ ॥

अनुजग्मुश्च भर्त्तारं क्रोशन्त्यः करुणस्वनाः ।
तासां रुदितशब्देन वानरीणां वनान्तरे ॥ ३६ ॥
वनानि गिरयश्चैव विक्रोशन्तीव सर्वतः ।
पुलिने गिरिनद्यास्तु विविक्ते जलसंवृते ॥ ३७ ॥
चितां चक्रुः सुबहवो वानरा वनचारिणः ।
अवरोप्य ततः स्कन्धाच्छिबिकां वानरोत्तमाः ॥ ३८ ॥
तस्थुरेकान्तमाश्रित्य सर्वे शोकपरायणाः ।
ततस्तारा पतिं दृष्ट्वा शिबिकातलशायिनम् ॥ ३९ ॥
आरोप्याङ्के शिरस्तस्य विललाप सुदुःखिता ।
हा वानरमहाराज ! हा नाथ ! मम वत्सल ॥ ४० ॥
हा महार्ह ! महाबाहो ! हा मम प्रिय ! पश्य माम् ।
जनं न पश्यसीमन्त्वं कस्माच्छोकाभिपीडितम् ॥ ४१ ॥
प्रहृष्टमिह ते वक्त्रं गतासोरपि मानद ! ।
अस्तार्कसमवर्णञ्च दृश्यते जीवतो यथा ॥ ४२ ॥
एष त्वां रामरूपेण कालः कर्षति वानर ! ।

प्रणिहिताः समेताः ॥ ३४ ॥ ३५ ॥ ३६ ॥

विक्रोशन्तीव प्रतिध्वनिनेति शेषः । जलसंवृते समन्ताज्जलावृत-भूदेशे ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

महार्ह उत्तमभोगार्ह ॥ ४१ ॥ ४२ ॥

येन स्म विधवाः सर्वाः कृता एकेषुणा रणे ॥ ४३ ॥
इमास्तास्तव राजेन्द्र! वानर्य्योऽप्लवगास्तव।
पादैर्विकृष्टमध्वानमागताः किं न बुध्यसे ॥ ४४ ॥
तवेष्टा ननु चैवेमा भार्य्याश्चन्द्रनिभाननाः।
इदानीं नेक्षसे कस्मात् सुग्रीवं प्लवगेश्वर! ॥ ४५ ॥
एते हि सचिवा राजंस्तारप्रभृतयस्तव।
पुरवासिजनश्चायं परिवार्य्य विषीदति ॥ ४६ ॥
विसर्ज्जयैनान् सचिवान् यथापुरमरिन्दम!।
ततः क्रीड़ामहे सर्वा वनेषु मदनोत्कटाः ॥ ४७ ॥
एवं विलपतीं तारां पतिशोकपरीवृताम्।
उत्थापयन्ति स्म तदा वानर्य्यः शोककर्षिताः ॥ ४८ ॥
सुग्रीवेण ततः सार्द्धं सोऽङ्गदः पितरं रुदन्।
चितामारोपयामास शोकेनाभिप्लुतेन्द्रियः ॥ ४९ ॥
ततोऽग्निं विधिवद्दत्वा सोपसव्यं चकार ह।
पितरं दीर्घमध्वानं प्रस्थितं व्याकुलेन्द्रियः ॥ ५० ॥

रणे सुग्रीवेण सह युद्धे ॥ ४३ ॥

अप्लवगाः प्लुतगतिमजानन्त्यः विकृष्ट दूरम् ॥ ४४ ॥ ४५ ॥ ४६ ॥

यथापुरं यथापूर्वं क्रीड़ामहे त्वया सहेति विललापेति शेषः ॥ ४७ ॥ ४८ ॥ ४९ ॥

अपसव्यम् अपसव्यप्रदक्षिणम् ॥ ५० ॥

संस्कृत्य वालिनं तन्तु विधिवत् प्लवगर्षभाः ।
आजग्मुरुदकं कर्त्तुं नदीं शुभजलां शिवाम् ॥ ५१ ॥
ततस्ते सहितास्तत्र अङ्गदं स्थाप्य चाग्रतः ।
सुग्रीवतारासहिताः सिषिचुर्वानरा जलम् ॥ ५२ ॥
सुग्रीवेणैव दीनेन दीनो भूत्वा महाबलः ।
समानशोकः काकुत्स्थः प्रेतकार्य्याण्यकारयत् ॥ ५३ ॥

ततोऽथ तं वालिनमग्र्यपौरुषं
प्रकाशमिक्ष्वाकुवरेषुणा हतम् ।
प्रदीप्य दीप्ताग्निसमौजसं तदा
सलक्ष्मणं राममुपेयिवान् हरिः ॥ ५४ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
पञ्चविंशः सर्गः ॥ २५ ॥

विधिवद्देवांशत्वेन स्वयं ज्ञातवेदत्वात् ज्ञातवर्त्तिर्य्यग्देहोचित-विधिवदित्यर्थः। विधिवदग्निहोत्रविधिनेत्यर्थ इत्यन्ये ॥ ५१ ॥ ५२ ॥ प्रेतकार्य्याणि जलदानादिरूपाणि व्यकारयत् । तदितिकर्त्तव्यता-मुपदिष्टवानित्यर्थः ॥ ५३ ॥ ५४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

# षड्विंशः सर्गः ।



ततः शोकाभिसन्तप्तं सुग्रीवं क्लिन्नवाससम् ।
शाखामृगमहामात्राः परिवार्य्योपतस्थिरे ॥ १ ॥
अभिगम्य महाबाहुं राममक्लिष्टकारिणम् ।
स्थिताः प्राञ्जलयः सर्व्वे पितामहमिवर्षयः ॥ २ ॥
ततः काञ्चनशैलाभस्तरुणार्कनिभाननः ।
अब्रवीत् प्राञ्जलिर्वाक्यं हनूमान् मारुतात्मजः ॥ ३ ॥
भवत्प्रसादात् काकुत्स्थ ! पितृपैतामहं महत् ।
वानराणां सुदंष्ट्राणां सम्पन्नबलशालिनाम् ॥ ४ ॥
महात्मनां सुदुष्प्रापं प्राप्तं राज्यमिदं प्रभो ! ।
भवता समनुज्ञातः प्रविश्य नगरं शुभम् ॥ ५ ॥
संविधास्यति कार्य्याणि सर्व्वाणि ससुहृद्गणः ।
स्नातोऽयं विविधैर्गन्धैरौषधैश्च यथाविधि ॥ ६ ॥

क्लिन्नवाससमार्द्रवाससम् । शाखामृगमहामात्राः वानरबलप्रधानाः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

अर्चयिष्यति माल्यैश्च रत्नैश्च त्वां विशेषतः।
इमां गिरिगुहां रम्यामभिगन्तुं त्वमर्हसि ॥ ७ ॥
कुरुष्व स्वामिसम्बन्धं वानरान् संप्रहर्षय।
एवमुक्तो हनुमता राघवः परवीरहा ॥ ८ ॥
प्रत्युवाच हनूमन्तं बुद्धिमान् वाक्यकोविदः।
चतुर्दशसमाः सौम्य! ग्रामं वा यदि वा पुरम्। ९ ॥
न प्रवेक्ष्यामि हनुमन् पितुर्निर्देशपारगः।
सुसमृद्धां गुहां दिव्यां सुग्रीवो वानरर्षभः॥ १० ॥
प्रविष्टो विधिवद्वीरः क्षिप्रं राज्येऽभिषिच्यताम।
एवमुक्त्वा हनूमन्तं रामः सुग्रीवमब्रवीत्॥ ११ ॥
वृत्तज्ञो वृत्तसम्पन्नमुदारबलविक्रमम्।
इममप्यङ्गदं वीरं यौवराज्येऽभिषेचय॥ १२ ॥
ज्येष्ठस्य हि सुतो ज्येष्ठः सदृशो विक्रमेण च।
अङ्गदोऽयमदीनात्मा यौवराज्यस्य भाजनम्॥ १३ ॥

कार्य्याणि राजकार्य्याणि यथाविधि स्नातः राज्याभिषेकाभिषिक्तः॥ ६ ॥ ७ ॥

स्वामिसम्बन्धं वानरस्वामित्वसम्बन्धं सुग्रीवस्य राज्याभिषेकेनेति शेषः॥ ८ ॥ ९ ॥ १० ॥

अभिषिच्यतां मदाज्ञया त्वयेति शेषः॥ ११ ॥ १२ ॥

पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागमः।
प्रवृत्ताः सौम्य! चत्वारो मासा वार्षिकसंज्ञिताः॥ १४॥
नायमुद्योगसमयः प्रविश त्वं पुरीं शुभाम्।
अस्मिन् वत्स्याम्यहं सौम्य! पर्वते सहलक्ष्मणः॥ १५॥
इयं गिरिगुहा रम्या विशाला युक्तमारुता।
प्रभूतसलिला सौम्य! प्रभूतकमलोत्पला॥ १६॥
कार्त्तिके समनुप्राप्ते त्वं रावणबधे यत।
एष नः समयः सौम्य! प्रविश त्वं स्वमालयम्॥ १७॥
अभिषिञ्चस्व राज्ये च सुहृदः सम्प्रहर्षय।
इति रामाभ्यनुज्ञातः सुग्रीवो वानरर्षभः॥ १८॥
प्रविवेश पुरीं रम्यां किष्किन्धां वालिपालिताम्।
तं वानरसहस्राणि प्रविष्टं वानरेश्वरम्॥ १९॥
अभिवार्य्य प्रविष्टानि सर्वतः प्लवगेश्वरम्।

यतो ज्येष्ठस्य ज्येष्ठः सुतो विक्रमेण ज्येष्ठस्य सदृशस्य तस्माद्यौवराज्ये योग्यः॥ १३॥

सीतान्वेषणोद्योगं सुग्रीवस्यालक्ष्याह,—पूर्वोऽयमिति। ये चत्वारो वार्षिकसंज्ञकाः प्रवृत्तास्तेषामयं पूर्व इति योजना॥ १४॥ १५॥

युक्तमारुता मारुतेन युक्तेत्यर्थः। अस्यां स्थास्यामीति शेषः॥ १६॥

ततः प्रकृतयः सर्वा दृष्ट्वा हरिगणेश्वरम् ॥ २० ॥
प्रणम्य मूर्ध्ना पतिता वसुधायां समाहिताः ।
सुग्रीवः प्रकृतीः सर्वाः सम्भाष्योत्थाप्य वीर्य्यवान् ॥ २१ ॥
भ्रातुरन्तःपुरं सौम्यं प्रविवेश महाबलः ।
प्रविष्टं भीमविक्रान्तं सुग्रीवं वानरर्षभम् ॥ २२ ॥
अभ्यषिञ्चन्त सुहृदः सहस्राक्षमिवामराः ।
तस्य पाण्डुरमाजह्रुश्छत्रं हेमपरिष्कृतम् ॥ २३ ॥
शुक्ले च वालव्यजने हेमदण्डे यशस्करे ।
तथा रत्नानि सर्वाणि सर्व्वबीजौषधानि च ॥ २४ ॥
सक्षीराणाञ्च वृक्षाणां प्ररोहान् कुसुमानि च ।
शुक्लानि चैव वस्त्राणि श्वेतञ्चैवानुलेपनम् ॥ २५ ॥

यत यतस्व । एष नः समय इति । आश्विनेऽतीते यत्नारम्भरूपः सङ्केत इत्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

मूर्ध्ना प्रणम्य नम्रीभूय वसुधायां दण्डवत्पतिताः उत्थाप्य वसुधायां पतिता इति शेषः ॥ २१ ॥

प्रविष्टं भीमविक्रान्तमिति । प्रविश्य त्वाभिनिष्क्रान्तमिति पाठे प्रविश्यान्तःपुरगतशोकादिकं दृष्ट्वाऽभिषेकाय तु पुनः प्रतिनिवृत्तं सभामागतमित्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥

क्षीरवृक्षप्ररोहा अधोजटाः ॥ २५ ॥

सुगन्धीनि च माल्यानि स्थलजान्यम्बुजानि च।
चन्दनानि च दिव्यानि गन्धांश्च विविधान् बहून् ॥ २६ ॥
अक्षतं जातरूपञ्च प्रियङ्गुमधुसर्पिषी।
दधिचर्म च वैयाघ्रं परार्ध्यौं चाप्युपानहौ ॥ २७ ॥
समालम्भनमादाय गोरोचनमनःशिलाम्।
आजग्मुस्तत्र मुदिता वराः कन्याश्च षोड़श ॥ २८ ॥
ततस्ते वानरश्रेष्ठमभिषेक्तुं यथाविधि।
रत्नैर्वस्त्रैश्च भक्ष्यैश्च तोषयित्वा द्विजर्षभान् ॥ २९ ॥
ततः कुशपरिस्तीर्णं समिद्धं जातवेदसम्।
मन्त्रपूतेन हविषा हुत्वा मन्त्रविदो जनाः ॥ ३० ॥
ततो हेमप्रतिष्ठाने वरास्तरणसंवृते।
प्रासादशिखरे रम्ये चित्रमाल्योपशोभिते ॥ ३१ ॥
प्राङ्मुखं विधिवन्मन्त्रैः स्थापयित्वा वरासने।
नदीनदेभ्यः संहृत्य तीर्थेभ्यश्च समन्ततः ॥ ३२ ॥

गन्धान् गन्धद्रव्याणि ॥ २६ ॥ २७ ॥

समालम्भनम् अनुलेपनद्रव्यम्। तदेवाह,—गोरोचनमित्यादि ॥ २८ ॥ २९ ॥

ततः कुशेति। अनेनाग्निसाध्यकर्माधिकारं तेषां दर्शयति। मनुष्यसदृशसर्वव्यवहारात् वेदज्ञत्वाच्च ॥ ३० ॥ ३१ ॥

आहृत्य च समुद्रेभ्यः सर्वेभ्यो वानरर्षभाः ।
अपः कनककुम्भेषु निधाय विमलं जलम् ॥ ३३ ॥
शुभैश्चर्षभशृङ्गैश्च कलशैश्चैव काञ्चनैः ।
शास्त्रदृष्टेन विधिना महर्षिविहितेन च ॥ ३४ ॥
गयो गवाक्षो गवयः शरभो गन्धमादनः ।
मैन्दश्च द्विविदश्चैव हनूमान् जाम्बवांस्तथा ॥ ३५ ॥
अभ्यषिञ्चन्त सुग्रीवं प्रसन्नेन सुगन्धिना ।
सलिलेन सहस्राक्षं वसवो वासवं यथा ॥ ३६ ॥
अभिषिक्ते तु सुग्रीवे सर्वे वानरपुङ्गवाः ।
प्रचुक्रुशुर्महात्मानो हृष्टाः शतसहस्रशः ॥ ३७ ॥
रामस्य तु वचः कुर्वन् सुग्रीवो वानरेश्वरः ।
अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् ॥ ३८ ॥
अङ्गदे चाभिषिक्ते तु सानुक्रोशाः प्लवङ्गमाः ।
साधु साध्विति सुग्रीवं महात्मानो ह्यपूजयन् ॥ ३९ ॥

मन्त्रैः स्थापयित्वा । वसवस्त्वा गायत्रेण छन्दसेत्यादिमन्त्रैरासने स्थापयित्वेत्यर्थः ॥ ३२ ॥

अप आहृत्य मिलिताः कृत्वा विमलं जलं कुम्भेषु निधायेति सम्बन्धः ॥ ३३ ॥

महर्षिविहितेन बौधायनादिविहितेन ॥ ३४ ॥ ३५ ॥ ३६ ॥

हृष्टाः प्रचुक्रुशुः किलकिलाशब्दं कृतवन्तः ॥ ३७ ॥ ३८ ॥ ३९ ॥

रामञ्चैव महात्मानं लक्ष्मणञ्च पुनः पुनः ।
सीताश्च तुष्टुवुः सर्वे तादृशे तत्रवर्त्तिनि ॥ ४० ॥
हृष्टपुष्टजनाकीर्णा पताकाध्वजशोभिता ।
बभूव नगरी रम्या किष्किन्धागिरिगह्वरे ॥ ४१ ॥
निवेद्य रामाय तदा महात्मने
महाभिषेकं कपिवाहिनीपतिः ।
रुमाञ्च भार्य्यामुपलभ्य वीर्य्यवा-
नवाप राज्यं त्रिदशाधिपो यथा ॥ ४२ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
षड्विंशः सर्गः ॥ २६ ॥

तादृशे तत्रवर्त्तिनि । अभिषिक्ते सुग्रीवेऽङ्गदे च । तत्र किष्किन्धायां वर्त्तिनि वर्त्तमाने सतीत्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

## सप्तविंशः सर्गः ।



अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् ।
आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ॥ १ ॥
शार्दूलमृगसङ्घुष्टं सिंहैर्भीमरवैर्वृतम् ।
नानागुल्मलतागूढ़ं बहुपादपसङ्कुलम् ॥ २ ॥
ऋक्षवानरगोपुच्छैर्मार्जारैश्च निषेवितम् ।
मेघराशिनिभं शैलं नित्यं शुचिकरं शिवम् ॥ ३ ॥
तस्य शैलस्य शिखरे महतीमायतां गुहाम् ।
प्रत्यगृह्णत वासार्थं रामः सौमित्रिणा सह ॥ ४ ॥
कृत्वा च समयं रामः सुग्रीवेण सहानघः ।
कालयुक्तं महद्वाक्यमुवाच रघुनन्दनः ॥ ५ ॥

गुहां किष्किन्धाख्यां प्रस्रवणं तदाख्यम् ॥ १ ॥
गिरिवर्णनं शार्दूलेति ॥ २ ॥ ३ ॥
प्रत्यगृह्णत प्रत्यग्रहीत् ॥ ४ ॥
समयं पूर्वोक्तम् । कालयुक्तं तत्कालोचितम् ॥ ५ ॥

विनीतं भ्रातरं भ्राता लक्ष्मणं लक्ष्मिवर्द्धनम्।
इयं गिरिगुहा रम्या विशाला युक्तमारुता ॥ ६ ॥
अस्यां वत्स्याम सौमित्रे! वर्षरात्रमरिन्दम!।
गिरिशृङ्गमिदं रम्यमुत्तमं पार्थिवात्मज! ॥ ७ ॥
श्वेताभिः कृष्णताम्राभिः शिलाभिरुपशोभितम्।
नानाधातुसमाकीर्णं नदीदर्दुरसंयुतम् ॥ ८ ॥
विविधैर्वृक्षखण्डैश्च चारु चित्रलतायुतम्।
नानाविहगसङ्घुष्टं मयूरवरनादितम् ॥ ९ ॥
मालतीकुन्दगुल्मैश्च सिन्दुवारः शिरीषकैः।
कदम्बार्जुनसर्जैश्च पुष्पितैरुपशोभितम् ॥ १० ॥
इयञ्च नलिनी रम्या फुल्लपङ्कजमण्डिता।
नातिदूरे गुहाया नौ भविष्यति नृपात्मज! ॥ ११ ॥
प्रागुदक्प्रवणे देशे गुहा साधु भविष्यति।
पश्चाच्चैवोन्नता सौम्य! निवातेयं भविष्यति ॥ १२ ॥

युक्तमारुता उचितवाता ॥ ६ ॥

वर्षरात्रं जातावेकवचनम्। वार्षिका मासा इत्यर्थः ॥ ७ ॥

नदीसम्बन्धिदर्दुरैः संयुतं वृक्षखण्डैश्चारु सुन्दरम् ॥ ८ ॥ ९ ॥ १० ॥

गुहाया नातिदूरे भविष्यति। भाविवारिपूरवद्या गुहासमीपवर्त्तिनी भविष्यतीत्यर्थः ॥ ११ ॥

गुहाद्वारे च सौमित्रे! शिला समतला शिवा।
कृष्णा चैवायता चैव भिन्नाञ्जनचयोपमा॥ १३॥
गिरिशृङ्गमिदं तात! पश्य चोत्तरतः शुभम्।
भिन्नाञ्जनचयाकारमम्भोधरमिवोदितम्॥ १४॥
दक्षिणस्यामपि दिशि स्थितं श्वेतमिवाम्बरम्।
कैलासशिखरप्रख्यं नानाधातुविराजितम्॥ १५॥
प्राचीनवाहिनीञ्चैव नदीं भृशमकर्दमाम्।
गुहायाः पुरतः पश्य त्रिकूटे जाह्नवीमिव॥ १६॥
चन्दनैस्तिलकैः सालैः तमालैरतिमुक्तकैः।
पद्मकैः सरलैश्चैव अशोकैश्चैव शोभिताम्॥ १७॥

प्रागुदक् प्रवणे ईशानदिङ्म्नवति देशे वर्त्तमाना गुहा साधु सम्यक् भविष्यति सुखसाधनमिति शेषः। पौरस्त्यवर्षवातप्रवेशाभावाच्च साधुत्वं बोध्यम्। तेन निर्ऋतिद्वारत्वं सूचितम्। पश्चाद्भागे चेषोन्नता। अतएव पुरोवातनिरोधकत्वान्निवाता च॥ १२॥

गुहाद्वारे इति। तेन बहिरुपवेशनसौकर्य्यम्॥ १३॥

उत्तरतः उत्तरभागे॥ १४॥

श्वेतमिवाम्बरं श्वेतवस्त्रमिव स्थितम्। श्वेतमिवापरमिति पाठे-परशृङ्गं श्वेतमिव रूप्यमिव स्थितमित्यर्थः॥ १५॥

त्रिकूटे पूर्वोषितत्रिकूटाचले जाह्नवीपदेन तत्रत्या जाह्नवीसदृशी मन्दाकिन्याख्या नदी॥ १६॥

वानीरैस्तिमिदैश्चैव बकुलैः केतकैरपि।
हिन्तालैः स्तिनिशैर्नीपैर्वेतसैः कृतमालकैः ॥ १८ ॥
तीरजैः शोभिता भाति नानारूपैस्ततस्ततः।
वसनाभरणोपेता प्रमदेवाभ्यलङ्कृता ॥ १९ ॥
शतशः पक्षिसङ्घैश्च नानानादविनादिता।
एकैकमनुरक्तैश्च चक्रवाकैरलङ्कृता ॥ २० ॥
पुलिनैरतिरम्यैश्च हंससारससेविता।
प्रहसन्त्येव भात्येषा नानारत्नसमन्विता ॥ २१ ॥
क्वचिन्नीलोत्पलैश्छन्ना भाति रक्तोत्पलैः क्वचित्।
क्वचिदाभाति शुक्लैश्च दिव्यैः कुमुदकुड्मलैः ॥ २२ ॥
पारिप्लवशतैर्जुष्टा बर्हिक्रौञ्चविनादिता।
रमणीया नदी सौम्या मुनिसङ्घनिषेविता ॥ २३ ॥
पश्य चन्दनवृक्षाणां पंक्तीः सुरुचिरा इव।
ककुभानाञ्च दृश्यन्ते मनसैवोदिताः समम् ॥ २४ ॥

अतिमुक्तः पुण्ड्रकः पद्मकश्चन्दनभेदः सरलः पीतद्रुमः ॥ १७ ॥ १८ ॥
॥ १९ ॥
एकैकमनुरक्तैः परस्परानुरागयुक्तैः ॥ २० ॥ २१ ॥ २२ ॥
पारिप्लवाः जलपक्षिणः ॥ २३ ॥

अहो सुरमणीयोऽयं देशः शत्रुनिषूदन ! ।
इह रंस्याव सौमित्रे ! साध्वत्र निवसावहे ॥ २५ ॥
इतश्च नातिदूरे सा किष्किन्धा चित्रकानना ।
सुग्रीवस्य पुरी रम्या भविष्यति नृपात्मज ! ॥ २६ ॥
गीतवादित्रनिर्घोषः श्रूयते जयतां वर ! ।
नदतां वानराणाञ्च मृदङ्गाडम्बरैः सह ॥ २७ ॥
लब्ध्वा भार्य्यां कपिवरः प्राप्य राज्यं सुहृद्वृतः ।
ध्रुवं नन्दति सुग्रीवः संप्राप्य महतीं श्रियम् ॥ २८ ॥
इत्युक्त्वा न्यवसत्तत्र राघवः सहलक्ष्मणः ।
बहुदृश्यदरीकुञ्जे तस्मिन् प्रस्रवणे गिरौ ॥ २९ ॥
सुसुखे हि बहुद्रव्ये तस्मिन् हि धरणीधरे ।
वसतस्तस्य रामस्य रतिरल्पापि नाभवत् ॥ ३० ॥

सुरुचिरा इव । इवोऽप्यर्थे शोभमानाश्चन्दनवृक्षपंक्तीरपि पश्य । मनसा सङ्कल्पेन सममेवोदिताः । ककुभानां वृक्षविशेषाणां पंक्तय इति शेषः ॥ २४ ॥ २५ ॥ २६ ॥

नातिदूरत्वगमकं गीतेत्यादि । मृदङ्गाडम्बरैः मृदङ्गशब्दैः ॥ २७ ॥ ॥ २८ ॥

बहूनि दृश्यानि उत्तमवस्तूनि यत्र ताः दर्य्यः कुञ्जाश्च यस्मिन्निति गिरिविशेषणम् ॥ २९ ॥

बहुद्रव्ये सुखसाधनबहुद्रव्यवितिं । रतिः सुखम् ॥ ३० ॥

हृतां हि भार्य्यां स्मरतः प्राणेभ्योऽपि गरीयसीम्।
उदयाभ्युदितं दृष्ट्वा शशाङ्कं स विशेषतः॥ ३१॥
आविवेश न तं निद्रा निशासु शयनं गतम्।
तत्समुत्थेन शोकेन बाष्पोपहतचेतनम्॥ ३२॥
तं शोचमानं काकुत्स्थं नित्यं शोकपरायणम्।
तुल्यदुःखोऽब्रवीत् भ्राता लक्ष्मणोऽनुनयं वचः॥ ३३॥
अलं वीर! व्यथां गत्वा न त्वं शोचितुमर्हसि।
शोचन्तो ह्यवसीदन्ति सर्वार्था विदितं हि ते॥ ३४॥
भवान् क्रियापरो लोके भवान् दैवपरायणः।
आस्तिको धर्मशीलश्च व्यवसायी च राघव!॥ ३५॥
न ह्यव्यवसितः शत्रुं राक्षसं तं विशेषतः।
समर्थस्त्वं रणे हन्तुं विक्रमे जिह्मकारिणम्॥ ३६॥

उदये उदयपर्वते अभ्युदितम् उदयं प्राप्तम्॥ ३१॥ ३२॥

अनुनयम् अनुनयवत्॥ ३३॥

व्यथां गत्वा अलं व्यथा मास्त्वित्यर्थः॥ ३४॥

क्रियापरो नित्यकर्मानुष्ठाता दैवपरायणो दैवपूजकः व्यवसायी उद्यमी॥ ३५॥

अव्यवसितः शोकेनोद्यमहीनस्त्वं हन्तुं न समर्थः। विक्रमे विक्रमस्थाने रणे जिह्मकारिणं कुटिलम्॥ ३६॥

समुन्मूलय शोकन्त्वं व्यवसायं स्थिरीकुरु ।
ततः सपरिवारं तं राक्षसं हन्तुमर्हसि ॥ ३७ ॥
पृथिवीमपि काकुत्स्थ ! ससागरवनाचलाम् ।
परिवर्त्तयितुं शक्तः किं पुनस्तं हि रावणम् ॥ ३८ ॥
शरत्कालं प्रतीक्षस्व प्राविट् कालोऽयमागतः ।
ततः सराष्ट्रं सगणं रावणं तं वधिष्यसि ॥ ३९ ॥
अहन्तु खलु ते वीर्य्यं प्रसुप्तं प्रतिवोधये ।
दीप्तैराहुतिभिः काले भस्मच्छन्नमिवानलम् ॥ ४० ॥
लक्ष्मणस्य हि तद्वाक्यं प्रतिपूज्य हितं शुभम् ।
राघवः सुहृदं स्निग्धमिदं वचनमब्रवीत् ॥ ४१ ॥
वाच्यं यदनुरक्तेन स्निग्धेन च हितेन च ।
सत्यविक्रमयुक्तेन तदुक्तं लक्ष्मण ! त्वया ॥ ४२ ॥
एष शोकः परित्यक्तः सर्वकार्य्यावसादकः ।
विक्रमेष्वप्रतिहतं तेजः प्रोत्साहयाम्यहम् ॥ ४३ ॥

अतः शोकं समुन्मूलय व्यवसायमुद्योगम् ॥ ३७ ॥
परिवर्त्तनमधरोत्तरीकरणम् ॥ ३८ ॥ ३९ ॥
दीप्तैर्दीपकैर्वाक्यैरिति शेषः । काले होमकाले ॥ ४० ॥ ४१ ॥
अनुरक्तेनानुरागयुतेन स्निग्धेन तत्कालोचितप्रियपरेण हितेनो दर्क्कहितैषिणा । सत्यविक्रमयुक्तेन अमोघविक्रमयुक्तेन ॥ ४२ ॥

शरत्कालं प्रतीक्षिष्ये स्थितोऽस्मि वचने तव।
सुग्रीवस्य नदीनाञ्च प्रसादमनुपालयन्॥ ४४ ॥
उपकारेण वीरस्तु प्रतिकारेण युज्यते।
अकृतज्ञो प्रतिकृतो हन्ति सत्त्ववतां मनः॥ ४५ ॥

तदेव युक्तं प्रणिधाय लक्ष्मणः
कृताञ्जलिस्तत्प्रतिपूज्य भाषितम्।
उवाच रामं स्वभिरामदर्शनं
प्रदर्शयन् दर्शनमात्मनः शुभम्॥ ४६ ॥

विक्रमकालेषु तेजः सहजमिति शेषः। प्रोत्साहयामि वर्धयामि अधुना त्वाच्छन्नमिव तदिति भावः॥ ४३ ॥

शरत्कालं तत्प्रान्तं सुग्रीवस्य प्रसादं चित्तसौमनस्यं नदीनाञ्चामलोदकत्वरूपम्॥ ४४ ॥

उपकारेण युक्तो वीरोऽवश्यं प्रतिकारेण प्रत्युपकारेण युज्यते। केनचित् कृतोपकारो वीरपुरुषोऽवश्यं प्रत्युपकरोत्येवेति भावः। कुत एवं निश्चयस्तत्राह, अकृतज्ञो भूत्वा यद्यप्रतिकृतोऽकृतप्रत्युपक्रियो भवति तदा सत्त्ववतामस्मादृशां मनो हन्ति मैत्रीं नाशयत्येवातो मित्रत्वादवश्यं स प्रत्युपकर्तेति भावः॥ ४५ ॥

तदेव रामवाक्यमेव युक्तं प्रणिधाय निश्चित्य आत्मनः शुभं दर्शनं शुभां बुद्धिं प्रदर्शयन्नुवाच॥ ४६ ॥

यथोक्तमेतत्तव सर्व्वमीप्सितं
नरेन्द्र ! कर्त्ता न चिरात्तु वानरः ।
शरत्प्रतीक्षः क्षमतामिमं भवान्
जलप्रपातं रिपुनिग्रहे धृतः ॥ ४७ ॥
नियम्य कोपं परिपाल्यतां शरत्
क्षमस्व मासांश्चतुरो मया सह ।
वसाचलेऽस्मिन् मृगराजसेविते
संवर्त्तयन् शत्रुबधे समर्थः ॥ ४८ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
सप्तविंशः सर्गः ॥ २७ ॥

जलप्रपातं वर्षाकालं धृतः स्थिरनिश्चयः ॥ ४७ ॥

किन्तु सुग्रीवेणायैव रावणं हनिष्यामीत्येवं क्रुद्धं राममालक्ष्याह,—नियम्येति । शरत् तदन्तः संवर्त्तयन्नुक्तकालं क्षपयन् ॥ ४८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः ।



स तदा वालिनं हत्वा सुग्रीवमभिषिच्य च ।
वसन् माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत् ॥ १ ॥
अयं स कालः संप्राप्तः समयोऽद्य जलागमः ।
संपश्य त्वं नभो मेघैः संवृतं गिरिसन्निभैः ॥ २ ॥
नवमासधृतं गर्भं भास्करस्य गभस्तिभिः ।
पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥ ३ ॥
शक्यमम्बरमारुह्य मेघसोपानपंक्तिभिः ।

स तदेति ॥ १ ॥

स विरहिप्रमाथकः स कालत्वाह,—अद्य जलागमः समयः संप्रवृत्तस्त्वं संपश्य । नभ आकाशम् ॥ २ ॥

समुद्राणां रसं जलं भास्करस्य गभस्तिभिर्द्यौः पीत्वा कार्त्तिकादिनवमासधृतं गर्भं जलरूपं रसायनं लोकजीवातु । भूतं प्रसूते त्यजति गर्भमाहात्म्यात्समुद्रस्य क्षारस्यापि स्वादुता जीवातुर्जीवनौषधमित्यमरः । ॥ ३ ॥

कुटजार्जुनमालाभिरलङ्कर्त्तुं दिवाकरः ॥ ४ ॥
सन्ध्यारागोत्थितैस्ताम्रैरन्तेष्वपि च पाण्डुभिः ।
स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम् ॥ ५ ॥
मन्दमारुतनिश्वासं सन्ध्याचन्दनरञ्जितम् ।
आपाण्डुजलदं भाति कामातुरमिवाम्बरम् ॥ ६ ॥
एषा घर्मपरिक्लिष्टा नववारिपरिप्लुता ।
सीतेव शोकसन्तप्ता मही बाष्पं विमुञ्चति ॥ ७ ॥
मेघोदरविनिर्मुक्ताः कर्पूरदलशीतलाः ।
शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः ॥ ८ ॥
एष फुल्लार्जुनः शैलः केतकैरभिवासितः ।

दिवाकरोऽलङ्कर्त्तुं शक्यं सुकर इत्यर्थः ॥ ४ ॥

सन्ध्यारागोत्थितैः उद्भिन्नसन्ध्यारागैरतएव ताम्रैरन्तेषु पर्य्यन्तभागेषु श्वेतैः स्निग्धैः किञ्चिज्जलसम्बन्धात् । अभ्रपटच्छेदैः अभ्ररूपैः छिन्नपटैः बद्धव्रणमिवेत्युत्प्रेक्षा ॥ ५ ॥

मन्दमारुत एव निश्वासो यस्य तम् । सन्ध्यारूपेण चन्दनेन हरिचन्दनेन रञ्जितम् । आपाण्डु प्रान्तपाण्डुजलदम् । जलदस्थाने कामातुरस्य कपोलादि ॥ ६ ॥

घर्मेण रवितेजसा परिक्लिष्टा सन्तप्ता बाष्पमूष्माणं बाष्पं नेत्रजलञ्च ॥ ७ ॥

मेघैः खोदरादिनिर्मुक्ता इति मन्दता । कर्पूरलिप्तजलवच्छीतलाः

सुग्रीव इव शान्तारिर्धाराभिरभिषिच्यते ॥ ९ ॥
मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः ।
मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ १० ॥
कशाभिरिव हैमीभिर्विद्युद्भिरभिताड़ितम् ।
अन्तस्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥ ११ ॥
नीलमेघाश्रिता विद्युत् स्फुरन्ती प्रतिभाति मे ।
स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी ॥ १२ ॥
इमास्तामन्मथवतां हिताः प्रतिहता दिशः ।
अनुलिप्ता इव घनैर्नष्टग्रहनिशाकराः ॥ १३ ॥

केतकगन्धिनो वाता अञ्जलिभिः पातुमित्यादरातिशयादुक्तिः जलत्वच्छान्तिहरत्वाच्च ॥ ८ ॥

फुल्लाः पुष्पिता अर्जुना यस्मिन्। धाराः जलधाराः अत्र शैलस्यारिर्वनदाहकत्वाद्दावाग्निः ॥ ९ ॥

धाराः वर्षधारास्तद्रूपयज्ञोपवीतधराः। मारुतापूरितत्वेन शब्दवता प्राधीताः उपक्रान्ताध्ययना बटव इवेत्यर्थः ॥ १० ॥

अन्तर्गतस्तनितरूपो निर्घोषः कशाप्रहारे क्रियमाणः शब्दो यस्य तत् सवेदनमित्यस्योत्तमाश्वमिति शेषः ॥ ११ ॥ १२ ॥

घनैरनुलिप्ता इवातएव नष्टा अदृश्या ग्रहादयो यासु ताः प्रतिहताः प्रतिहतप्राचीत्वादिज्ञानाः। इमा दिशो मन्मथवतां मन्मथोत्सवसावधानप्रियासहितानां हिताः सुखजनिकाः ॥ १३ ॥

क्वचिद्बाष्पाभिसंरुद्धान् वर्षागमसमुत्सुकान् ।
कुटजान् पश्य सौमित्रे ! पुष्पितान् गिरिसानुषु ।
मम शोकाभिभूतस्य कामसन्दीपनान् स्थितान् ॥ १४ ॥

रजः प्रशान्तं सहिमोऽद्य वायु-
र्निदाघदोषप्रसराः प्रशान्ताः ।
स्थिता हि यात्रा वसुधाधिपानां
प्रवासिनो यान्ति नराः स्वदेशान् ॥ १५ ॥

संप्रस्थिता मानसवासलुब्धाः
प्रियान्विताः संप्रति चक्रवाकाः ।
अभीक्ष्णवर्षोदकविक्षतेषु
यानानि मार्गेषु न सम्पतन्ति ॥ १६ ॥

बाष्पाभिसंरुद्धान्नववारिसेकजमहीसमुद्गतोष्मणा वृतान् वर्षाया आगमेन समुत्सुकान् सहर्षान् सानुषु स्थितानित्यन्वयः ॥ १४ ॥

सहिमः सशीतः । निदाघस्य ग्रीष्मस्य दोषप्रसरास्तापादयः । स्थिता स्तब्धा निवृत्तेति यावत् । स्वदेशान् यान्ति प्रियावियुक्तैः स्थातुमशक्यत्वात् ॥ १५ ॥

मानसं सरः । अभीक्ष्णमतिशयितं यद्वर्षोदकं तेन विक्षतेषु क्लिष्टगमनेषु मार्गेष्विति शेषः । यानानि रथादीनि न संपतन्ति न गच्छन्ति ॥ १६ ॥

क्वचित्प्रकाशं क्वचिदप्रकाशं
नभः प्रकीर्णाम्बुधरं विभाति ।
क्वचित् क्वचित्पर्वतसन्निरुद्धं
रूपं यथा शान्तमहार्णवस्य ॥ १७ ॥
व्यामिश्रितं सर्जकदम्बपुष्पै-
र्नवं जलं पर्वतधातुताम्रम् ।
मयूरकेकाभिरनुप्रयातं
शैलापगाः शीघ्रतरं वहन्ति ॥ १८ ॥
रसाकुलं षट्पदसन्निकाशं
प्रभुज्यते जम्बुफलं प्रकामम् ।
अनेकवर्णं पवनावधूतं
भूमौ पतत्याम्रफलं विपक्वम् ॥ १९ ॥
विद्युत्पताकाः सबलाकमालाः
शैलेन्द्रकूटाकृतिसन्निकाशाः ।

शान्तमहार्णवस्य निस्तरङ्गसमुद्रस्य ॥ १७ ॥

सर्जादिपुष्पैर्मिश्रं पर्वतसम्बन्धिधातुभिस्ताम्रं ताम्रवर्णं मयूरशब्दैरनुप्रयातमनुसृतं जलं नद्यः शीघ्रं वहन्ति समुद्वहन्ते ॥ १८ ॥

रसाकुलं रसवत् । षट्पदसन्निकाशं भ्रमरसदृशवर्णं । प्रकामं यथेच्छं यथा भवति तथा प्रभुज्यते जनैरिति शेषः । आम्रफलस्यातिपक्वत्वात् स्वतएव भूमौ पातः ॥ १९ ॥

गर्जन्ति मेघाः समुदीर्णनादा
मत्ता गजेन्द्रा इव संयुगस्थाः ॥ २० ॥
वर्षोदकाप्यायितशाद्वलानि
प्रवृत्तनृत्तोत्सवबर्हिणानि ।
वनानि निर्वृष्टबलाहकानि
पश्चापराह्णेष्वधिकं विभान्ति ॥ २१ ॥
समुद्वहन्तः सलिलातिभारं
बलाकिनो वारिधरा नदन्तः ।
महत्सु शृङ्गेषु महीधराणां
विश्रम्य विश्रम्य पुनः प्रयान्ति ॥ २२ ॥
मेघाभिकामा परिसम्पतन्ती
सम्मोदिता भाति बलाकपंक्तिः ।
वातावधूता वरपौण्डरीकी
लम्बेव माला रुचिराम्बरस्य ॥ २३ ॥

बलाकमालया तत्पंक्त्या सहिताः । कूटः शिखरं तदाकारसदृशाकाराः ॥ २० ॥

प्रवृत्तेत्यादि । नृत्तोत्सवप्रवृत्तमयूराणि । नितरां वृष्टा बलाहका येषु तानि ॥ २१ ॥

सलिलातिभारं सलिलरूपभारं भारवत्त्वाच्च विश्रम्य विश्रम्य गमनम् ॥ २२ ॥

बालेन्द्रगोपान्तरचित्रितेन
विभाति भूमिर्नवशाद्वलेन।
गात्रानुपृक्तेन शुकप्रभेण
नारीव लाक्षोक्षितकम्बलेन ॥ २४ ॥

निद्रा शनैः केशवमभ्युपैति
द्रुतं नदी सागरमभ्युपैति।
हृष्टा बलाका घनमभ्युपैति
कान्ता सकामा प्रियमभ्युपैति ॥ २५ ॥

जाता वनान्ताः शिखिसुप्रनृत्ता
जाताः कदम्बाः सकदम्बशाखाः।
जाता वृषा गोषु समानकामा
जाता मही सस्यवनाभिरामा ॥ २६ ॥

गर्भार्थं मेघेष्वभिकामो यस्याः सा। परिसम्पतन्ती नभसि गच्छन्ती अतएव संमोदिता हर्षवती। बलाकपङ्क्तिरित्याशा क्रमः। तदुत्प्रेक्षा वातेत्यादि। वरा श्रेष्ठा पौण्डरीकी श्वेतपद्मसम्बन्धिनी लम्बा रुचिराम्बरस्य मालेव ॥ २३ ॥

बालैरिन्द्रगोपै रन्तरे मध्ये मध्ये चित्रितेन शाद्वलेन युता भूमिः। सतः शुकवर्णेन मध्ये मध्ये लाक्षाबिन्दुयुतेन कम्बलेन गात्रानुपृक्तेन गात्रानुसंपृक्तेन वृता नारीव ॥ २४ ॥

निद्रेति आषाढ्यां स्वापे त्सवाद्दृष्टा गर्भधारणार्थम् ॥ २५ ॥

वहन्ति वर्षन्ति नदन्ति भान्ति
ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः
प्रियाविहीनाः शिखिनः प्लवङ्गाः ॥ २७ ॥

प्रहर्षिताः केतकिपुष्पगन्ध-
माघ्राय मत्ता वननिर्झरेषु ।
प्रपातशब्दाकुलिता गजेन्द्राः
सार्द्धं मयूरैः समदा नदन्ति ॥ २८ ॥

धारानिपातैरभिहन्यमानाः
कदम्बशाखासु विलम्बमानाः ।
क्षणार्जितं पुष्परसावगाढं
शनैर्मदं षट्चरणास्त्यजन्ति ॥ २९ ॥

शिखिनां सुष्ठु प्रवृत्तं येषु ते। सकदम्बाः सकदम्बपुष्पाः शाखा येषाम्। समानकामा उभयेपि कामवन्त इत्यर्थः। सस्यैर्वनैश्चाभिरामा ॥ २६ ॥

वहनादिक्रियाणां नद्यादीनाञ्च क्रमेणान्वयाद्यथासंख्यमत्रालङ्कारः। प्लवङ्गमाः समाश्वसन्ति सुग्रीवराज्यलाभात् ॥ २७ ॥

वननिर्झरे क्रीड़या केतकगन्धमाघ्राय प्रहर्षिताः प्रपातशब्दः प्रपतन्निर्झरशब्दः ॥ २८ ॥

पुष्परसैस्तदास्वादैरवगाढं दृढं मदं क्षणेनोत्सवेनार्जितम् ॥ २९ ॥

अङ्गारचूर्णोत्करसन्निकाशैः
फलैः सुपर्य्याप्तरसैः समृद्धैः।
जम्बूद्रुमाणां प्रविभान्ति शाखा
निपीयमाना इव षट्पदौघैः॥ २०॥
तडित्पताकाभिरलङ्कृताना-
मुदीर्णगम्भीरमहारवाणाम्।
विभान्ति रूपाणि बलाहकानां
रणोत्सुकानामिव वारणानाम्॥ २१॥
मार्गानुगः शैलवनानुसारी
संप्रस्थितो मेघरवं निशम्य।
युद्धाभिकामः प्रतिनादशङ्की
मत्तो गजेन्द्रः प्रतिसन्निवृत्तः॥ २२॥
क्वचित्प्रगीता इव षट्पदौघैः
क्वचित्प्रवृत्ता इव नीलकण्ठैः।

अङ्गारः शान्ताग्निः तच्चूर्णस्य य उत्करस्तत्समैः। अनेन फलाना-मतिमहत्त्वं सूचितम्। अत्युक्तिरलङ्कारः॥ २०॥ २१॥

पृष्ठतो मेघरवं निशम्य श्रुत्वा प्रतिनादशङ्की। प्रत्युद्भूतगजान्तर-नादशङ्की प्रतिनिवृत्तः॥ २२॥

क्वचित्प्रमत्ता इव वारणेन्द्रै-
र्विभान्त्यनेकाश्रयिणो वनान्ताः ॥ २३ ॥
कदम्बसर्ज्जार्जुनकन्दलाढ्या
वनान्तभूमिर्मधुवारिपूर्णा ।
मयूरमत्ताभिरुतप्रनृत्तै-
रापानभूमिप्रतिमा विभाति ॥ २४ ॥
मुक्तासमाभं सलिलं पतद्वै
सुनिर्मलं पत्रपुटेषु लग्नम् ।
हृष्टा विवर्णच्छदना विहङ्गाः
सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥ २५ ॥
षट्पादतन्त्रीमधुराभिधानं
प्लवङ्गमोदीरितकण्ठतालम् ।
आविष्कृतं मेघमृदङ्गनादै-
र्वनेषु सङ्गीतमिव प्रवृत्तम् ॥ २६ ॥

अनेकाश्रयिणः अनेकभावाश्रयिणः ॥ २३ ॥

कन्दलं स्थलोत्पलं मधुवारि मधुसदृशवारि । आपानभूमिर्मद्यपानभूमिस्तस्यामपि कदम्बादिपुष्पाणि । मद्यपूर्णता मत्तजनशब्दसम्नृत्यञ्च ॥ २४ ॥

विवर्णच्छदनाः जलसेकतो विवर्णपक्षाः ॥ २५ ॥

क्वचित् प्रनृत्तैः क्वचिदुन्नदद्भिः
क्वचिच्च वृक्षाग्रनिषण्णकायैः।
व्यालम्बबर्हाभरणैर्मयूरै-
र्वनेषु सङ्गीतमिव प्रवृत्तम्॥ ३७॥
स्वनैर्घनानां प्लवगाः प्रबुद्धा
विहाय निद्रां चिरसन्निरुद्धाम्।
अनेकरूपाकृतिवर्णनादा
नवाम्बुधाराभिहता नदन्ति॥ ३८॥
नद्यः समुद्वाहितचक्रवाका-
स्तटानि शीर्णान्यपवाहयित्वा।

षट्पदो भ्रमरस्तत्ध्वनिरूपं तन्त्रीणां मधुरमभिधानं गीतं यस्मिन्। प्लवङ्गमानां भेकानामुदीरितमेव कण्ठतालं यत्र सूत्रधारमुखशब्द तालो यस्मिन्। मेघशब्दा एव मृदङ्गनादाः तैराविष्कृतं प्रकटितं सङ्गीतं वनेषु प्रवृत्तमिव॥ ३६॥

प्रनृत्तैरारब्धनृत्तैः उन्नदन्तो गायकास्तैः। वृक्षाग्रनिषण्णकायास्ते सङ्गीतोपलक्षितनृत्यद्रष्टारः॥ ३७॥

चिरसन्निरुद्धां चिरसम्पादितां शुष्कमृत्तिकास्विति शेषः। प्लवगा भेकाः अनेकरूपा आकृतिः संस्थानं वर्णो नीलपीतादिर्नादश्च येषाम्॥ ३८॥

द्दष्ट्वा नवप्रावृतपूर्णभोगा-
द्दतं स्वभर्त्तारमुपोपयन्ति ॥ ३९ ॥
नीलेषु नीला नववारिपूर्णा
मेघेषु मेघाः प्रतिभान्ति सक्ताः ।
दवाग्निदग्धेषु दवाग्निदग्धाः
शैलेषु शैला इव बद्धमूलाः ॥ ४० ॥
प्रमत्तसन्नादितबर्हिणानि
सशक्रगोपाकुलशाद्वलानि ।
चरन्ति नीपार्जुनवासितानि
गजाः सुरम्याणि वनान्तराणि ॥ ४१ ॥
नवाम्बुधाराहतकेसराणि
ध्रुवं परिष्वज्य सरोरुहाणि ।

कामातुरयुवतिवृत्तान्तं नदीषु आरोपयति । नद्य इति । वारिपूरेण समुद्वाहिता उन्नमिताश्चक्रवाकस्तनपस्तना याभिः शीर्णानि तटानि निराधकजरतीस्थानीयान्यपवाहयित्वा निरस्य नवप्रावृतपूर्णभोगावृतं नवं प्रावृतं पुष्पाद्युपहारात् पूर्वं पूर्णभोगायावृतं स्वीकृतम् । उपोपयन्ति । प्रसमुपोदः पादपूरणे इति द्वित्वम् ॥ ३९ ॥

नीलेषु मेघेषु सक्ता नीलमेघाः प्रतिभान्ति । दवाग्निदग्धेषु शैलेषु तादृशाः शैला यदि शक्ता भवन्ति तदाऽनेन इव । बद्धमूला इत्युभयान्वयि ॥ ४० ॥

कदम्बपुष्पाणि सकेसराणि
नवानि हृष्टा भ्रमराः पिबन्ति ॥ ४२ ॥
मत्ता गजेन्द्रा मुदिता गवेन्द्रा
वनेषु विक्रान्ततरा मृगेन्द्राः।
रम्या नगेन्द्रा निभृता नरेन्द्राः
प्रक्रीड़ितो वारिधरैः सुरेन्द्रः ॥ ४३ ॥
मेघाः समुद्भूतसमुद्रनादा
महाजलौघैर्गगनावलम्बाः।
नदीस्तटाकानि सरांसि वापी-
र्महीञ्च कृत्स्नामपवाहयन्ति ॥ ४४ ॥
वर्षप्रवेगा विपुलाः पतन्ति
प्रवान्ति वाताः समुदीर्णवेगाः।
प्रनष्टकूलाः प्रवहन्ति शीघ्रं
नद्यो जलं विप्रतिपन्नमार्गाः ॥ ४५ ॥

प्रमत्तप्रब्दवन्मयूरवन्ति। शक्रगोप इन्द्रगोपः ॥ ४१ ॥ ४२ ॥

गवेन्द्राः वृषभाः निभृतास्त्यक्तोद्योगाः सर्वत्र जाता इति शेषः। सुरेन्द्रो देवेन्द्रः प्रक्रीड़ितः कर्त्तरि निष्ठा ॥ ४३ ॥

समुद्भूतस्तिरस्कृतः समुद्रनादो यैः अपवाहयन्ति प्रवहज्जलानि कुर्वन्ति ॥ ४४ ॥

नरैर्नरेन्द्रा इव पर्वतेन्द्राः
सुरेन्द्रनीतैः पवनोपनीतैः ।
घनाम्बुकुम्भैरभिषिच्यमाना
रूपं श्रियं स्वामिव दर्शयन्ति ॥ ४६ ॥
घनोपगूढं गगनं न तारा
न भास्करो दर्शनमभ्युपैति ।
नवैर्जलौघैर्धरणी वितृप्ता
तमोविलिप्ता न दिशः प्रकाशाः ॥ ४७ ॥
महान्ति कूटानि महीधराणां
धाराविधौतान्यधिकं विभान्ति ।
महाप्रमाणैर्विपुलैः प्रपातै-
र्मुक्ताकलापैरिव लम्बमानैः ॥ ४८ ॥
शैलोपलप्रस्खलमानवेगाः
शैलोत्तमानां विपुलाः प्रपाताः ।

वर्षप्रवेगा वृष्टयः विप्रतिपन्नः प्रतिबद्धो मार्गो यथा याभिस्ताः ॥ ४५ ॥

रूपं निर्मलमाकारं श्रियं विविधधातुयुक्तत्वरूपां दर्शयन्तीव ॥ ४६ ॥

घनोपगूढत्वात् गगनस्य तारा रविदर्शनाभावः । वितृप्ता जामितां प्राप्ता ॥ ४७ ॥

प्रपातैर्निर्झरैः ॥ ४८ ॥

गुहासु सन्नादितबर्हिणासु
हारा विकीर्य्यन्त इवावभान्ति ॥ ४९ ॥
शीघ्रं प्रवेगा विपुलाः प्रपाता
निर्धौतशृङ्गोपतला गिरीणाम्।
मुक्ताकलापप्रतिमाः पतन्तो
महागुहोत्सङ्गतलैः ध्रियन्ते ॥ ५० ॥
सुरतामर्द्दविच्छिन्नाः स्वर्गस्त्रीहारमौक्तिकाः।
पतन्ति चातुला दिक्षु तोयधाराः समन्ततः ॥ ५१ ॥
विलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥ ५२ ॥
वृत्ता यात्रा नरेन्द्राणां सेना पथ्येव वर्त्तते।
वैराणि चैव मार्गाश्च सलिलेन समीकृताः ॥ ५३ ॥
मासि प्रौष्ठपदे ब्रह्म ब्राह्मणानां विवक्षताम्।
अयमध्यायसमयः सामगानामुपस्थितः ॥ ५४ ॥

प्रपतन्तीति। प्रपाता निर्झराः विकीर्य्यन्तस्त्रुट्यन्तः ॥ ४९ ॥
निर्धौतं क्षालितं शृङ्गाणामुपतलं यैस्ते ॥ ५० ॥ ५१ ॥
ज्ञायतेऽनुमीयते। अनुमानालङ्कारः ॥ ५२ ॥
वृत्ता निवृत्ता एतेति पाठेप्ययमेवार्थः। प्रस्थितापि सेना पथ्येव वर्त्तते समीकृता. निकृष्टत्वं साधारणधर्मः ॥ ५३ ॥

निवृत्तकर्मायतनो नूनं सञ्चितसञ्चयः ।
आषाढ़ीमभ्युपगतो भरतः कोसलाधिपः ॥ ५५ ॥
नूनमापूर्य्यमाणायाः सरय्वा वर्द्धते रयः ।
मां समीक्ष्य समायान्तमयोध्याया इव स्वनः ॥ ५६ ॥
इमा स्फीतगुणा वर्षाः सुग्रीवः सुखमश्नुते ।
विजितारिः सदारश्च राज्ये महति च स्थितः ॥ ५७ ॥
अहन्तु हृतदारश्च राज्याच्च महतश्च्युतः ।
नदीकूलमिव क्लिन्नमवसीदामि लक्ष्मण ! ॥ ५८ ॥
शोकश्च मम विस्तीर्णो वर्षाश्च भृशदुर्गमाः ।
रावणश्च महान् शत्रुरपारः प्रतिभाति मे ॥ ५९ ॥

प्रोष्ठपदो भाद्रपदः ब्रह्म वेदं विवक्षतामध्येतुमिच्छताम् । अध्यायसमय उपकरणकालः ॥ ५४ ॥

निवृत्तं कर्म छादनादि कर्म यस्य तादृशमायतनं यस्य सञ्चिताः सञ्चयाः जीवनसाधनानि येन स भरत आषाढ़ीं प्राप्याभ्युपगतः कृत यत्किञ्चित् व्रतसङ्कल्पः ॥ ५५ ॥

मामायान्तं समीक्ष्य वनतः प्रतिनिवृत्तमिति शेषः ॥ ५६ ॥

वर्षाः प्राप्येति शेषः ॥ ५७ ॥

नदीकूलं कर्त्तृ ॥ ५८ ॥

वर्षाश्च विस्तीर्णा इत्यनुकर्षः । अपारः दुष्प्रापवैरनिर्य्यातनपारः ॥ ५९ ॥

अयात्राञ्चैव दृष्ट्वेमां मार्गांश्च भृशदुर्गमान्।
प्रणते चैव सुग्रीवे न मया किञ्चिदीरितम्॥ ६० ॥
अपि चापि परिक्लिष्टं चिराद्दारैः समागतम्।
आत्मकार्य्यगरीयस्त्वाद्वक्तुं नेच्छामि वानरम्॥ ६१ ॥
स्वयमेव हि विश्रम्य ज्ञात्वा कालमुपागतम्।
उपकारञ्च सुग्रीवो वेत्स्यते नात्र संशयः॥ ६२ ॥
तस्मात् कालप्रतीक्षोऽहं स्थितोऽस्मि शुभलक्षण !।
सुग्रीवस्य नदीनाञ्च प्रसादमभिकाङ्क्षयन्॥ ६३ ॥
उपकारेण वीरो हि प्रतीकारेण युज्यते।
अकृतज्ञो प्रतिकृतो हन्ति सत्त्ववतां मनः॥ ६४ ॥
अथैवमुक्तः प्रणिधाय लक्ष्मणः
कृताञ्जलिस्तत्प्रतिपूज्य भाषितम्।
उवाच रामं स्वभिरामदर्शनं
प्रदर्शयन् दर्शनमात्मनः शुभम्॥ ६५ ॥

अयात्रां वर्षवशाद्यात्राभावं कार्य्योन्मुखतया सुग्रीवे प्रणतेऽपि मया सीतान्वेषणाद्युद्दिश्य किञ्चिदपि नोक्तम्॥ ६० ॥

अपिच तदानीं गरीयसे आत्मकार्य्याय वक्तुमनुचितमित्याह,—अपिचेति। अपिपरिक्लिष्टम् अतिपरिक्लिष्टम्। गरीयस्त्वादल्पकालाल्पयत्नासाध्यत्वात् नेच्छामि नैषिषम्॥ ६१ ॥ ६२ ॥ ६३ ॥

यदुक्तमेतत्तव सर्वमीप्सितं
नरेन्द्रकर्त्ता न चिराद्धरीश्वरः ।
शरत्प्रतीक्षः क्षमतामिमं भवान्
जलप्रपातं रिपुनिग्रहे धृतः ॥ ६६ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
अष्टाविंशः सर्गः ॥ २८ ॥

शेषं व्याख्यातम् ॥ ६४ ॥ ६५ ॥ ६६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

---

## एकोनत्रिंशः सर्गः ।

समीक्ष्य विमलं व्योम गतविद्युद्बलाहकम् ।
सारसाकुलसङ्घुष्टं रम्यज्योत्स्नानुलेपनम् ॥ १ ॥
समृद्धार्थञ्च सुग्रीवं मन्दधर्मार्थसंग्रहम् ।
अत्यर्थञ्चासतां मार्गमेकान्तगतमानसम् ॥ २ ॥
निवृत्तकार्य्यं सिद्धार्थं प्रमदाभिरतं सदा ।
प्राप्तवन्तमभिप्रेतान् सर्वानेव मनोरथान् ॥ ३ ॥
स्वाञ्च पत्नीमभिप्रेतां ताराञ्चापि समीप्सिताम् ।
विहरन्तमहोरात्रं कृतार्थं विगतज्वरम् ॥ ४ ॥

ईदृशं व्योम समीक्ष्य हरीश्वरमुपागम्य हनूमानब्रवीदित्युत्तरेण
नवमश्लोकस्थेनान्वयः ॥ १ ॥

मन्दो धर्मार्थयोः संग्रहो यस्य तम् । असतां मार्गं कामप्रवृत्ति-
लक्षणमत्यर्थमाश्रयन्तम् इति शेषः । एकान्तगतमानसम् । काम-
भोगार्थैकान्तदेशगतचित्तम् ॥ २ ॥

निवृत्तकार्य्यं निष्पन्नवालिबधरूपस्वकार्य्यं सिद्धार्थं प्राप्तराज्यम् ।
अभिप्रेतानीप्सितानर्थान् प्राप्तवन्तम् ॥ ३ ॥



क्रीडन्तमिव देवेशं गन्धर्वाप्सरसाङ्गणैः ।
मन्त्रिषु न्यस्तकार्य्यञ्च मन्त्रिणामनवेक्षकम् ॥ ५ ॥
उच्छिन्नराज्यसन्देहं कामवृत्तमिव स्थितम् ।
निश्चितार्थोऽर्थतत्त्वज्ञः कालधर्मविशेषवित् ॥ ६ ॥
प्रसाद्य वाक्यैर्विविधैर्हेतुमद्भिर्मनोरमैः ।
वाक्यविद्वाक्यतत्त्वज्ञं हरीशं मारुतात्मजः ॥ ७ ॥
हितं पथ्यञ्च तथ्यञ्च सामधर्मार्थनीतिमत् ।
प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयम् ॥ ८ ॥
हरीश्वरमुपागम्य हनूमान् वाक्यमब्रवीत् ।
राज्यं प्राप्तं यशश्चैव कौली श्रीरभिवर्द्धिता ॥ ९ ॥

स्वां पत्नीं रुमाम् ॥ ४ ॥ ५ ॥

उच्छिन्नराज्यसन्देहं मन्त्रिसौष्ठवेन नष्टराज्यपालनसन्देहं निश्चितार्थः निश्चितसर्वशास्त्रार्थः । अतएवार्थतत्त्वज्ञः कर्त्तव्याकर्त्तव्यसकलार्थतत्त्वज्ञः । कालेति कालोचितं धर्मविशेषमनुष्ठेयं वेत्ति तादृशः ॥ ६ ॥

वाक्यैः प्रसादप्रयोजनैः ॥ ७ ॥

हितं तत्कालहितं पथ्यं कालान्तरहितम् । तथ्यं सत्यम् । सामादिचतुष्कवत् । एतच्चतुष्टयं वाक्यविशेषणम् । प्रणयत्वं प्राप्तया प्रीत्या संयुक्तम् । विश्वासे स्ववचनप्रामाण्ये कृतनिश्चयमीदृशं हरीश्वरमित्यन्वयः ॥ ८ ॥

तत्र प्रसादप्रयोजनवाक्यान्याह,—राज्यं प्राप्तमित्यादि । कौली कुलक्रमागता ॥ ९ ॥

मित्राणां संग्रहः शेषस्तद्वान् कर्त्तुमर्हति।
यो हि मित्रेषु कालज्ञः सततं साधु वर्त्तते ॥ १० ॥
तस्य राज्यञ्च कीर्त्तिश्च प्रतापश्चापि वर्द्धते।
यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिप!।
समान्येतानि सर्वाणि स राज्यं महदश्नुते ॥ ११ ॥
तद्भवान् वृत्तसम्पन्नः स्थितः पथि निरत्यये।
मित्रार्थमभिनीतार्थं यथावत् कर्त्तुमर्हति ॥ १२ ॥
संत्यज्य सर्वकर्माणि मित्रार्थे यो न वर्त्तते।
सम्भ्रमाद्विकृतोत्साहः सोऽनर्थेनावरुध्यते ॥ १३ ॥
यो हि कालव्यतीतेषु मित्रकार्य्येषु वर्त्तते।
स कृत्वा महतोऽप्यर्थान्न मित्रार्थेन युज्यते ॥ १४ ॥

शेषः कर्त्तव्यशेषः। कालज्ञः प्रत्युपकारकालज्ञः साधु वर्त्तते साध्वनुष्ठानवान् वर्त्तते ॥ १० ॥

दण्ड्यतेऽनेन दण्डः सैन्यम्। आत्मा सकरणग्रामः समानि स्ववशत्वेन समत्वम्। समवेतानीति पाठे मिलितानीत्यर्थः। नत्वेकमपि पृथग्भूतमिति भावः ॥ ११ ॥

निरत्यये निरपाये अभिनीतार्थं प्रतिज्ञातार्थम् ॥ १२ ॥

सम्भ्रमात्त्वरया विशेषेण कृतोत्साहोऽन्यत्र कर्मणीति शेषः ॥ १३ ॥

कालव्यतीतेषु करणोचितकालमतिक्रान्तेषु पश्चात्तेषु वर्त्तते तत्सिद्ध्यर्थं यतते स मित्रस्य महतोऽर्थान् कृत्वापि मित्रार्थेन मित्रत्व-

तदिदं मित्रकार्य्यं नो कालातीतमरिन्दम!।
क्रियतां राघवस्यैतद्वैदेह्याः परिमार्गणम्॥ १५॥
न च कालमतीतं ते निवेदयति कालवित्।
त्वरमाणोऽपि स प्राज्ञस्तव राजन्! वशानुगः॥ १६॥
कुलस्य हेतुः स्फीतस्य दीर्घबन्धुश्च राघवः।
अप्रमेयप्रभावश्च स्वयञ्चाप्रतिमो गुणैः॥ १७॥
तस्य त्वं कुरु वै कार्य्यं पूर्वं तेन कृतं तव।
हरीश्वर! कपिश्रेष्ठानाज्ञापयितुमर्हसि॥ १८॥
न हि तावद्भवेत् कालो व्यतीतश्चोदनादृते।
चोदितस्य हि कार्य्यस्य भवेत् कालव्यतिक्रमः॥ १९॥

प्रयोजनकार्थेन न युज्यते उचितकालाकृतं कृतमप्यकृतप्रायमिति भावः॥ १४॥

तत्कालातीतं भविष्यतीति शेषः। तस्मात् क्रियतामित्यादि॥ १५॥

ननु तत्कार्य्यकालात्ययश्चेत् स तं ज्ञापयिष्यत्येवेत्याह,—नचेति। कालवित् कालज्ञोऽपि स प्राज्ञत्वात्त्वदभिप्रायमेव केवलमनुगच्छेत् तूष्णीं तिष्ठतीति भावः॥ १६॥

त्वदीयस्य स्फीतस्य महतः कुलस्य हेतुर्वृद्धिहेतुः दीर्घबन्धुः इदानीं कालान्तरे च बन्धुः। स्वयञ्च चाप्रतिमगुणः॥ १७॥

कृतं तव कार्य्यमिति शेषः। आज्ञापयितुमर्हसि। रामनियोगात् पूर्वमिति शेषः॥ १८॥

अकर्त्तुरपि काय्यस्य भवान् कर्त्ता हरीश्वर !।
किं पुनः प्रतिकर्त्तुस्ते राज्येन च वधेन च ॥ २० ॥
शक्तिमानतिविक्रान्तो वानरर्क्षगणेश्वर !।
कर्त्तुं दाशरथेः प्रीतिमाज्ञायां किन्नु सज्जसे ॥ २१ ॥
कामं खलु शरैः शक्तः सुरासुरमहोरगान् ।
वशे दाशरथिः कर्त्तुं त्वत्प्रतिज्ञामवेक्षते ॥ २२ ॥
प्राणत्यागाविशङ्केन कृतं तेन महत् प्रियम् ।
तस्य मार्गाम वैदेहीं पृथिव्यामपि चाम्बरे ॥ २३ ॥

नन्वेवमपि कालव्यतिक्रमस्तत्राह,—नहीति। चोदनादृते रामप्रेरणां विना जातोऽपि कालातिक्रमो न दोषायेति भावः। तत्प्रेरणया यदि कार्य्यकरणं तदा कालव्यतिक्रमो भवेदेवेत्यर्थः॥ १९॥

अकर्त्तुरपि अनुपकर्त्तुरपि कार्य्यस्य कर्त्ता। अर्हे तृच्। प्रतिकर्त्तुः उपकर्त्तुः॥ २०॥

आज्ञायां किन्नु सज्जसे। किमर्थं तदाज्ञाप्रतीक्षया विलम्बसे॥ २१॥

यद्यपि रामस्य न सहायापेक्षा तथापि सपरिवारोऽहं सीतामन्वेषयिष्यामीति त्वत्प्रतिज्ञामवेक्षते सत्याऽसत्यावेति परीक्षते इत्यर्थः॥ २२॥

प्राणत्यागाविशङ्केन। अनपकारिवालिप्राणत्याजने तदनौचित्यशङ्कारहितेन मित्रकृत्यं कर्त्तव्यमेवेति बुद्ध्या तव प्रियं कृतं मार्गाम अन्वेषयाम॥ २३॥

देवदानवगन्धर्वा असुराः समरुद्गणाः ।
न च यक्षा भयं तस्य कुर्य्युः किमिव राक्षसाः ॥ २४ ॥
तदेवं शक्तियुक्तस्य पूर्वं प्रतिकृतस्तथा ।
रामस्यार्हसि पिङ्गेश ! कर्त्तुं सर्वात्मना प्रियम् ॥ २५ ॥
नाधस्तादवनौ नाप्सु गतिर्नोपरि चाम्बरे ।
कस्यचित् सज्जतेऽस्माकं कपीश्वर ! तवाज्ञया ॥ २६ ॥
तदाज्ञापय कः किं ते कुतो वापि व्यवस्यतु ।
हरयो ह्यप्रधृष्यास्ते सन्ति कोट्यग्रतोऽनघ ! ॥ २७ ॥
तस्य तद्वचनं श्रुत्वा काले साधु निरूपितम् ।

भयमिति रक्ष इति शेषः ॥ २४ ॥

प्रतिकृतः कृतोपकारस्य पिङ्गेश कपिराज ॥ २५ ॥

इदानीं सुग्रीवस्याज्ञावैभवं दर्शयति। तवाज्ञयाज्ञाने सति अस्माकं हरीणां मध्ये यः कश्चिदपि सज्जते विलम्बते तस्य कस्यचित् कस्यापि बलिनो दुर्बलस्य वाऽधस्तात् पातालेऽन्यत्र वा गतिर्जीवनं नास्ति ॥ २६ ॥

यदेवं तदाज्ञापय। आज्ञाप्रकारं पृच्छति। कः कपिः ते किं कं नियोगं कुतो वापि। सार्वविभक्तिकस्तसिः। कुत्रापि स्थितः व्यवस्यतु अनुतिष्ठतु। आज्ञापनीया सेना कियत्यस्ति। तत्राह,—हरय इति। कोट्यग्रतः कोटिघटितसंख्यायामि अर्बुदस्याग्रे उपरि या संख्या समुद्राख्या तया संख्यया इत्यर्थः ॥ २७ ॥

सुग्रीवः सत्त्वसम्पन्नश्चकार मतिमुत्तमाम् ॥ २८ ॥
सन्दिदेशातिमतिमान्नीलं नित्यकृतोद्यमम्।
दिक्षु सर्वासु सर्वेषां सैन्यानामुपसंग्रहे ॥ २९ ॥
यथा सेना समग्रा मे यूथपालाश्च सर्वशः।
समागच्छन्त्यसङ्गेन सेनाग्रेण तथा कुरु ॥ ३० ॥
ये त्वन्तपालाः प्लवगाः शीघ्रगा व्यवसायिनः।
समानयन्तु ते शीघ्रं त्वरिताः शासनान् मम ॥ ३१
स्वयञ्चानन्तरं कार्य्यं भवानेवानुपश्यतु ॥ ३२ ॥
त्रिपञ्चरात्रादूर्द्ध्वं यः प्राप्नुयादिह वानरः।
तस्य प्राणान्तिको दण्डो नात्र कार्य्या विचारणा ॥ ३३ ॥
हरींश्च वृद्धानुपयातु साङ्गदो
भवान् ममाज्ञामधिकृत्य निश्चितम्।

मतिं तदनुष्ठानविषयाम् ॥ २८ ॥ २९ ॥

असङ्गेन अविलम्बेन सेनाग्रेण सेनानाथेन सहेति शेषः ॥ ३० ॥

अन्तपाला दिगन्तवर्त्तिसेनापतयः समानयन्तु समागच्छन्तु ॥ ३१ ॥

अनन्तरम् आनयनानन्तरं कार्य्यं सेनादर्शनगणनादि अनुपश्यतु सम्पादयत्विति यावत् ॥ ३२ ॥

त्रिपञ्चरात्रात् पञ्चदशदिनादूर्द्ध्वं य आगच्छेत्तस्य दण्डः तेन पञ्चमध्ये सर्वैरागन्तव्यमिति भावः। कार्त्तिकशुक्लादावियमाज्ञेति बोध्यम् ॥ ३३ ॥

इति व्यवस्थां हरिपुङ्गवेश्वरो
विधाय वेश्म प्रविवेश वीर्यवान् ॥ ३४ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
एकोनत्रिंशः सर्गः ॥ २९ ॥

वृद्धान् हरीन् साङ्गदो भवानुपयातु ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

# त्रिंशः सर्गः ।



गृहं प्रविष्टे सुग्रीवे विमुक्ते गगने घनैः ।
वर्षरात्रे स्थितो रामः कामशोकाभिपीड़ितः ॥ १ ॥
पाण्डुरं गगनं दृष्ट्वा विमलं चन्द्रमण्डलम् ।
शारदीं रजनीञ्चैव दृष्ट्वा ज्योत्स्नानुलेपनाम् ॥ २ ॥
कामवृत्तञ्च सुग्रीवं नष्टाञ्च जनकात्मजाम् ।
दृष्ट्वा कालमतीतञ्च मुमोह परमातुरः ॥ ३ ॥
स तु संज्ञामुपागम्य मुहूर्त्तान् मतिमान् नृपः ।
मनस्थामपि वैदेहीं चिन्तयामास राघवः ॥ ४ ॥
दृष्ट्वा च विमलं व्योम गतविद्युत्बलाहकम् ।
सारसारवसंघुष्टं विललापार्त्तया गिरा ॥ ५ ॥

कालं सैन्योद्योगकालं मुमोह व्याकुलचित्तो बभूव ॥ १ ॥ २ ॥ ३ ॥
संज्ञां चित्तस्वास्थ्यं मनस्थां मनःसन्निहितामपि चिन्तयामास ।
जीवति न वा कथमेनां प्रत्यानेष्यामीति चिन्ता ॥ ४ ॥
सारसशब्दैः संघुष्टं शब्दवत् व्योम दृष्ट्वेति सम्बन्धः ॥ ५ ॥

आसीनः पर्वतस्याग्रे हेमधातुविभूषिते ।
शारदं गगनं दृष्ट्वा जगाम मनसा प्रियाम् ॥ ६ ॥
सारसारावसन्नादैः सारसारावनादिनी ।
याश्रमे रमते बाला साद्य मे रमते कथम् ॥ ७ ॥
पुष्पितांश्चासनान् दृष्ट्वा काञ्चनानिव निर्मलान् ।
कथं सा रमते बाला पश्यन्ती मामपश्यती ॥ ८ ॥
या पुरा कलहंसानां कलेन कलभाषिणी ।
बुध्यते चारुसर्वाङ्गी साद्य मे रमते कथम् ॥ ९ ॥
निःस्वनं चक्रवाकानां निशम्य सहचारिणाम् ।
पुण्डरीकविशालाक्षी कथमेषा भविष्यति ॥ १० ॥
सरांसि सरितो वापीः काननानि वनानि च ।
तां विना मृगशावाक्षीं चरन्नाद्य सुखं लभे ॥ ११ ॥

हेमवर्णा धातवो हेमधातवः ॥ ६ ॥

सारसनादसदृशनादवती या सारसानामारावाय परस्परसमाह्वानाय कृतैर्नादैर्या रमते आश्रमे ॥ ७ ॥

काञ्चनानिव काञ्चनपुष्पानिव निर्मलानासनवृक्षान् दृष्ट्वा सौन्दर्यातिशयात् पुनःपुनस्तान् पश्यन्ती तदा च मामपश्यन्ती कथं वर्त्तते ॥ ८ ॥

कलेन शब्देन बुध्यते इत्यन्वयः। कलभाषिणी कोमलशब्दवती ॥ ९ ॥

निशम्य श्रुत्वा ॥ १० ॥

काननवनयोः कान्तारोपवनात्मना भेदः ॥ ११ ॥

अपि तां मद्वियोगाच्च सौकुमार्य्याच्च भामिनीम्।
सुदूरं पीड़येत् कामः शरद्गुणनिरन्तरः॥ १२॥
एवमादि नरश्रेष्ठो विललाप नृपात्मजः।
विहङ्ग इव सारङ्गः सलिलं त्रिदशेश्वरात्॥ १३॥
ततश्चञ्चूर्य्य रम्येषु फलार्थी गिरिसानुषु।
ददर्श पर्य्युपावृत्तो लक्ष्मीवान् लक्ष्मणोऽग्रजम्॥ १४॥

संचिन्तया दुःसहया परीतं
विसंज्ञमेकं विजने मनस्वी।
भ्रातुर्विषादात्त्वरितोऽतिदीनः
समीक्ष्य सौमित्रिरुवाच दीनम्॥ १५॥

अपि तामित्यादि। शरद्गुणनिरन्तरः शरद्गुणैर्निरन्तरप्रवृत्तः कामः मद्वियोगसौकुमार्य्यातिशयाभ्यां हेतुभ्यां सुदूरं अतिशयेन पीड़येदेव॥ १२॥

सारङ्गाख्यचातकविहङ्गस्तृषितो यथा त्रिदशेश्वराज्जलं काङ्क्षमाणो विलपतिस्म एवं सीताप्राप्तिं काङ्क्षमाणो विललाप॥ १३॥

ततस्तत्र काले रम्येषु गिरिसानुषु चञ्चूर्य्य भ्रातुर्दुःखेन गर्हितं चरित्वा यङ्लुगन्तादार्षोऽसमासे ल्यप्। पर्य्युपावृत्तो लक्ष्मणोऽग्रजं रामं ददर्श॥ १४॥

विषादाद्विषाददर्शनात्॥ १५॥

किमार्य्य! कामस्य वशङ्गतेन
किमात्मपौरुष्यपराभवेन।
अयं ह्रिया संह्रियते समाधिः
किमत्र योगेन निवर्त्तते न॥ १६॥
क्रियाभियोगं मनसः प्रसादं
समाधियोगानुगतञ्च कालम्।
सहायसामर्थ्यमदीनसत्त्वः
स्वकर्महेतुञ्च कुरुष्व तात!॥ १७॥

अथ लक्ष्मणः कर्मयोगज्ञानयोगावेव पौरुषद्वयं दुःखशान्तये चानुतिष्ठेति स्मारयति। किमार्य्येत्यादि। हे आर्य्य! कामस्य वशङ्गतेन त्वया किं कर्म कृतं स्यात्। अपिचैवं कामवशत्वेनात्मपौरुषस्य स्वपौरुषस्याभिभवेन किं प्रयोजनं साधितं स्यात्तस्मात् कामवशत्वं त्यक्त्वा कर्मयोगं कुरु। किञ्च स्नानादिकर्मयोगोत्तरकालमवसरप्राप्तोऽयं समाधिर्ब्रह्मानुसन्धानं ह्रिया हरतीति ह्रीः शोकस्तेन किमर्थं संह्रियते। अत्रास्यामवस्थायां योगेन समाधिना सर्वं दुःखमिति शेषः। किं न निवर्त्तते अपितु निवर्त्तत एवेत्यर्थः। एवमेव प्राञ्चः पाठ इति कतककृत्। पाठान्तरं त्वस्य योजनशक्त्या कल्पितमितिच सः॥ १६॥

उक्तमेव विवृणोति। क्रियाभियोगमिति। क्रियाणां शौचस्नानादीनामभितः कार्त्स्न्येन योगमनुष्ठानं मनसः प्रसादं चास्थाय कालं सर्वकालं समाधियोगानुगतं तेन सम्बद्धमेव कुरुष्व। तथाऽदीनसत्वः अक्षीणसत्वः सन् स्वकर्महेतुं पौरुषद्वैः कारणं सहायसामर्थ्यं तद्घटन-

न जानकी मानववंशनाथ !
त्वया सनाथा सुलभा परेण।
न चाग्निचूड़ां ज्वलितामुपेत्य
न दह्यते वीरवरार्ह ! कश्चित् ॥ १८ ॥
सलक्षणं लक्ष्मणमप्रधृष्यं
स्वभावजं वाक्यमुवाच रामः।
हितञ्च पथ्यञ्च नयप्रसक्तं
ससामधर्मार्थसमाहितञ्च ॥ १९ ॥
निःसंशयं कार्य्यमवेक्षितव्यं
क्रियाविशेषोप्यनुवर्त्तितव्यः।

रूपं स्वकर्म देवार्चनादिरूपकर्मयोगञ्च कुरुष्व। अनेन यावत् फलं निदिध्यासनजातकर्मसमुच्चय उक्तः ॥ १७ ॥

त्वया सनाथा नाथवती जानकी परेण न सुलभा न सुग्राह्या ज्वलितामग्निचूड़ामग्निशिखामुपेत्य स्पृष्ट्वा कश्चिदपि न दह्यते इति नापितु वह्निर्व्यतिरिक्तः सर्व्वोऽपि दह्यत एव अतोऽया नीता सा तत्प्रकृतिरेव सा तु त्वदुपासितात्माविति व्यङ्ग्यम् ॥ १८ ॥

रामः अप्रधृष्यं न्यायोपेतत्वादविचाल्यं स्वभावजं तत्त्वार्थकं वाक्यमुक्तवन्तं लक्षणसहितं लक्ष्मणमुवाच। किमुवाच। यत्त्वया प्रयुक्तं वाक्यं तद्धितं तत्कालसुखं पथ्यं कालान्तरेपि सुखम्। नयप्रसक्तं राजनीत्युपेतम्। सामान्वितधर्मार्थाभ्यां समाहितं सङ्गतम् ॥ १९ ॥

न तु प्रवृद्धस्य दुरासदस्य
　　कुमार ! वीर्य्यस्य फलञ्च चिन्तयम् ॥ २० ॥
अथ पद्मपलाशाक्षीं मैथिलीमनुचिन्तयन् ।
उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥ २१ ॥
तर्पयित्वा सहस्राक्षः सलिलेन वसुन्धराम् ।
निर्वर्त्तयित्वा सस्यानि कृतकर्मा व्यवस्थितः ॥ २२ ॥
दीर्घगम्भीरनिर्घोषाः शैलद्रुमपुरोगमाः ।
विसृज्य सलिलं मेघाः परिश्रान्ता नृपात्मज ! ॥ २३ ॥
नीलोत्पलदलश्यामाः श्यामीकृत्वा दिशो दश ।

तस्मात्त्वदुक्तं निःसंशयं कार्य्यं त्वद्वाक्यार्थोऽनुष्ठेय एव। अनुष्ठेयमाह,—अवेक्षितव्यम्। समाधियोगेन भगवत्तत्त्वं द्रष्टव्यं क्रियाविशेषः कर्मयोगः सोऽपि अनुवर्त्तितव्योऽनुष्ठेयः। हे कुमार ! नतु कर्मज्ञानयोगौ हित्वा प्रकर्षेण वृद्धिं प्राप्तस्यातएव दुरासदस्य वीर्य्यस्य वीर्य्यवतः कर्मणः फलञ्च फलमेव चिन्त्यमपेक्षणीयम्। अनेन यावत् फलं निदिध्यासनकर्मसमुच्चय उक्तः ॥ २० ॥

लक्ष्मणवचसा तत्कालं स्वस्थस्यापि पुनर्मैथिलीं स्मृत्वा खिद्यमानस्य शरदनुभववर्णनम् अथेत्यादि ॥ २१ ॥

निर्वर्त्तयित्वा सम्पाद्य। अहं त्वकृतकर्मेति व्यङ्ग्यम् ॥ २२ ॥

गच्छन्तीति गमाः पचाद्यच्। शैलद्रुम पुर इति द्वितीया बहुवचनान्तं तान् गच्छति तथा भूत्वा सलिलं विसृज्य परिश्रान्ताः ॥ २३ ॥

विमदा इव मातङ्गाः शान्तवेगाः पयोधराः ॥ २४ ॥
जलगर्भा महामेघाः कुटजार्जुनगन्धिनः ।
चरित्वा विरताः सौम्य ! वृष्टिवाताः समुद्यताः ॥ २५ ॥
घनानां वारणानाञ्च मयूराणाञ्च लक्ष्मण ! ।
नादः प्रस्रवणानाञ्च प्रशान्तः सहसानघ ! ॥ २६ ॥
अभिवृष्टा महामेघैर्निर्मलाश्चित्रसानवः ।
अनुलिप्ता इवाभान्ति गिरयश्चन्द्ररश्मिभिः ॥ २७ ॥

शाखासु सप्तच्छदपादपानां
प्रभासु तारार्कनिशाकराणाम् ।
लीलासु चैवोत्तमवारणानां
श्रियं विभज्याद्य शरत्प्रवृत्ता ॥ २८ ॥
सम्प्रत्यनेकाश्रयचित्रशोभा
लक्ष्मी शरत्कालगुणोपपन्ना ।

नीलोत्पलदलश्यामा इति पयोधरविशेषणम्। अहन्त्वशान्तकामवेग इति व्यङ्ग्यम्। एवमग्रेप्यूह्यम्। २४ ॥

वृष्टिसहितवाताः समुद्यता अपि विरताः ॥ २५ ॥ २६ ॥

महामेघैरभिवृष्टा अतएव निर्मलाः ॥ २७ ॥

श्रियं विभज्येति। शाखाप्रभालीलासु त्रिधा विभागं कृत्वेत्यर्थः ॥ २८ ॥

सूर्य्याग्रहस्तप्रतिबोधितेषु
पद्माकरेष्वभ्यधिकं विभाति ॥ २९ ॥

सप्तच्छदानां कुसुमोपगन्धी
षट्पादवृन्दैरनुगीयमानः ।
मत्तद्विपानां पवनानुसारी
दर्पं विनेष्यन्नधिकं विभाति ॥ ३० ॥

अभ्यागतैश्चारुविशालपक्षैः
स्मरप्रियैः पद्मरजोवकीर्णैः ।
महानदीनां पुलिनोपयातैः
क्रीड़न्ति हंसाः सह चक्रवाकैः ॥ ३१ ॥

मदप्रगल्भेषु च वारणेषु
गवां समूहेषु च दर्पितेषु ।
प्रसन्नतोयासु च निम्नगासु
विभाति लक्ष्मीर्बहुधा विभक्ता ॥ ३२ ॥

अनेकपदार्थाश्रयाः चित्राः शोभा यस्याः सा । अग्रहस्ताः प्रथमविस्तृतकिरणाः ॥ २९ ॥

पवनमनुसरति तच्छीलः विनेष्यन् जलं शोषयन् । शरत्काल इति शेषः । मत्तद्विपानां दर्पमधिकं कुर्वन् विभाति ॥ ३० ॥

मानससरसः स्वेन सहाभ्यागतैश्चक्रवाकैः सह क्रीड़न्ति ॥ ३१ ॥ ३२ ॥

नभः समीक्ष्याम्बुधरैर्विमुक्तं
विमुक्तबर्हाभरणा वनेषु।
प्रियास्वरक्ता विनिवृत्तशोभा
गतोत्सवा ध्यानपरा मयूराः॥ ३३॥

मनोज्ञगन्धैः प्रियकैरनल्पैः
पुष्पाग्रभारावनताग्रशाखैः।
सुवर्णगौरैर्नयनाभिरामै-
रुद्योतितानीव वनान्तराणि॥ ३४॥

प्रियान्वितानां नलिनीप्रियाणां
वने प्रियाणां कुसुमोद्गतानाम्।
मदोत्कटानां मदलालसानां
गजोत्तमानां गतयोऽद्य मन्दाः॥ ३५॥

व्यक्तं नभः शस्त्रविधौतवर्णं
कृशप्रवाहानि नदीजलानि।

विमुक्तं त्यक्तं बर्हरूपमाभरणं यैः। अरक्ताः रागरहिताः॥ ३३॥
प्रियकैरसनवृक्षैः॥ ३४॥

कुसुमोद्गतानां सप्तच्छदकुसुमाघ्राणप्रवृत्तानाम्। उद्गतानामित्येव प्राङ्कः पाठः। उद्धतानामिति क्वचित इति कतककृतः। मदोत्कटा अधिकमदा अतएव मदलालसाः। मदशब्देन तज्जन्यः कामभोगस्तत्रेच्छावन्तः॥ ३५॥

कल्हारशीताः पवनाः प्रवान्ति
तमोविमुक्ताश्च दिशः प्रकाशाः ॥ ३६ ॥
सूर्य्यातपक्रामणनष्टपङ्का
भूमिश्चिरोद्घाटितसान्द्ररेणुः ।
अन्योऽन्यवैरेण समायुतानां
उद्योगकालोऽद्य नराधिपानाम् ॥ ३७ ॥
शरद्गुणाप्यायितरूपशोभाः
प्रहर्षिताः पांसुसमुत्थिताङ्गाः ।
मदोत्कटाः सम्प्रति युद्धलुब्धा
वृषा गवां मध्यगता नदन्ति ॥ ३८ ॥
समन्मथा तीव्रतरानुरागा
कुलान्विता मन्दगतिः करेणूः ।
मदान्वितं संपरिवार्य्य यान्तं
वनेषु भर्त्तारमनुप्रयाति ॥ ३९ ॥

शस्त्रवदुत्तेजितासिवद्विधौतो विमलो वर्णो नैर्मल्यं यस्य तत्। कल्हारशीताः कल्हाराश्च शीतास्चेत्यर्थः ॥ ३६ ॥

सूर्य्यातपस्य क्रामणं सम्बन्धः । चिरेणोद्घाटितः प्रकाशितः सान्द्रो रेणुर्यया। अनेन शरदुत्तरार्द्धकालोऽयमिति ज्ञायते ॥ ३७ ॥

आप्यायिते वर्द्धिते रूपशोभे येषां पांसुसमुत्थिताङ्गाः पांसुयुक्ताङ्गाः ॥ ३८ ॥

त्यक्त्वा वराण्यात्मविभूषितानि
बर्हाणि तीरोपगता नदीनाम् ।
निर्भर्त्स्यमाना इव सारसौघैः
प्रयान्ति दीना विमना मयूराः ॥ ४० ॥
वित्रास्य कारण्डवचक्रवाकान्
महारवैर्भिन्नकटा गजेन्द्राः ।
सरस्सु बुद्धाम्बुजभूषणेषु
विक्षोभ्य विक्षोभ्य जलं पिबन्ति ॥ ४१ ॥
व्यपेतपङ्कासु सवालुकासु
प्रसन्नतोयासु सगोकुलासु ।
ससारसारावविनादितासु
नदीषु हंसा निपतन्ति हृष्टाः ॥ ४२ ॥
नदीघनप्रस्रवणोदकाना-
मतिप्रवृद्धानिलबर्हिणानाम् ।

समन्मथत्वादिविशेषणचतुष्टयं करेणवाः । करेणूरिति दीर्घत्व-मार्षम् ॥ ३९ ॥

विभूषितं विभूषणं विमनाः मयूराः मनःपर्य्यायो मनशब्दः अकारान्तोऽपि दिरूपकोशात् ॥ ४० ॥

बुद्धाम्बुजानि विकसितकमलानि ॥ ४१ ॥

ससारसाश्च तास्तदारावविनादिताश्च तासु ॥ ४२ ॥

प्लवङ्गमानाञ्च गतोत्सवानां
ध्रुवं रवाः संप्रति संप्रनष्टाः ॥ ४३ ॥
अनेकवर्णाः सुविनष्टकाया
नवोदितेष्वम्बुधरेषु नष्टाः।
क्षुधार्दिता घोरविषा बिलेभ्यः
चिरोषिता विप्रसरन्ति सर्पाः ॥ ४४ ॥
चञ्चच्चन्द्रकरस्पर्शहर्षोन्मीलिततारका।
अहो रागवती सन्ध्या जहातु स्वयमम्बरम् ॥ ४५ ॥
रात्रिः शशाङ्कोदितसौम्यवक्त्रा
तारागणोन्मीलितचारुनेत्रा।

अतिप्रवृद्धानिलो महावायुः। बर्हिणा मयूराः प्लवङ्गमा भेकाः ॥ ४३ ॥

अनेके वर्णा येषां ते नवोदितेष्वम्बुधरेषु सुविनष्टकायाः सुतरां नष्टदेहयात्राः। अतएव नष्टा मृतप्रायाः ॥ ४४ ॥

चञ्चतां शोभमानानां चन्द्रकिरणानां स्पर्शेन यो हर्षस्तेनोन्मीलिता ईषत्प्रकाशितास्तारका नक्षत्राणि नेत्रकनीनिका च यया सा। रागवती रक्तवर्णा अनुरक्ता च अम्बरमाकाशं वस्त्रञ्च। समासोक्तिरलङ्कारः। कान्तकरस्पर्शसुखादर्द्धोन्मीलितनयनायास्तदनुरागवशात् स्वतो विगलितवसनायाः कामुक्या वृत्तान्तस्य सन्ध्यायामारोपादिति बोध्यम् ॥ ४५ ॥

ज्योत्स्नांशुकप्रावरणा विभाति
नारीव शुक्लांशुकसंवृताङ्गी ॥ ४६ ॥
विपक्वशालिप्रसवानि भुक्त्वा
प्रहर्षिता सारसचारुपंक्तिः ।
नभः समाक्रामति शीघ्रवेगा
वातावधूता ग्रथितेव माला ॥ ४७ ॥
सुप्तैकहंसं कुमुदैरुपेतं
महाह्रदस्थं सलिलं विभाति ।
घनैर्विमुक्तं निशि पूर्णचन्द्रं
तारागणाकीर्णमिवान्तरिक्षम् ॥ ४८ ॥
प्रकीर्णहंसाकुलमेखलानां
प्रवुद्धपद्मोत्पलमालिनीनाम् ।
वाप्युत्तमानामधिकाद्य लक्ष्मी-
र्वराङ्गनानामिव भूषितानाम् ॥ ४९ ॥

शशाङ्कोदितेति। उदितशशाङ्केत्यर्थः। तारागणा एवोन्मीलितानि चारूणि नेत्राणि यस्याः सा ॥ ४६ ॥

शालिप्रसवा व्रीहयः मालेव नभः समाक्रामति ॥ ४७ ॥

सुप्तैक हंसमिति। चन्द्रप्रतिविम्बवत् ॥ ४८ ॥

प्रकीर्णा हंसा एवाकुला मेखला यासां वाप्युत्तमानाम् उत्तमवापीनाम् ॥ ४९ ॥

वेणुस्वरव्यञ्जिततूर्य्यमिश्र:
प्रत्यूषकालेऽनिलसंप्रवृत्तः।
संमूर्च्छितो गह्वरगोवृषाणा-
मन्योऽन्यमापूरयतीव शब्दः॥ ५०॥

नवैर्नदीनां कुसुमप्रहासै-
र्व्याधूयमानैर्मृदुमारुतेन।
धौतामलक्षौमपटप्रकाशैः
कूलानि काशैरुपशोभितानि॥ ५१॥

वनप्रचण्डा मधुपानशौण्डाः
प्रियान्विताः षट्चरणाः प्रहृष्टाः।
वनेषु मत्ताः पवनानुयात्रां
कुर्व्वन्ति पद्मासनरेणुगौराः॥ ५२॥

वेणुस्वररूपेण व्यञ्जितेन व्यक्तेन तूर्य्येण वाद्यघोषेण मिश्रः प्रत्यूषकाले प्रातःकाले अनिलेन संप्रवृत्तः तत्सम्बन्धेन जातः संमूर्च्छितो व्याप्तः। गह्वराणां गिरिगह्वराणां वृषाणाञ्च वनवर्त्तिनां शब्दोऽन्योऽन्यमापूरयतीव वर्द्धयतीव गह्वरगोवृषशब्दात्साजात्यात्परस्परवर्द्धका इत्यर्थः। गह्वरगोवृषाणामिति पाठः॥ ५०॥

नदीनां कूलानि मृदुमारुतेन व्याधूयमानैः कम्पितैः कुसुमप्रहासैः कुसुमविकाशैर्युतैः काशैरुपशोभितानि॥ ५१॥

जलं प्रसन्नं कुसुमप्रहासं
क्रौञ्चस्वनं शालिवनं विपक्वम् ।
मृदुश्च वायुर्विमलश्च चन्द्रः
शंसन्ति वर्षव्यपनीतकालम् ॥ ५३ ॥
मीनोपसन्दर्शितमेखलानां
नदीवधूनां गतयोऽद्य मन्दाः ।
कान्तोपभुक्तालसगामिनीनां
प्रभातकालेष्विव कामिनीनाम् ॥ ५४ ॥
सचक्रवाकानि सशैवलानि
काशैर्दुकूलैरिव संवृतानि ।
सपत्ररेखाणि सरोचनानि
वधूमुखानीव नदीमुखानि ॥ ५५ ॥
प्रफुल्लबाणासनचित्रितेषु
प्रहृष्टषट्पादनिकूजितेषु ।

प्रचण्डाः प्रगल्भाः शौण्डाः मत्ताः पद्मानामसनपुष्पाणाञ्च रेणुभिर्गौराः पीताः पवनानुयात्रां कुर्वन्ति गन्धलोभादिति भावः ॥ ५२ ॥

कुसुमरूपः प्रहासो यस्य तम् । शालिवनं शालिसमूहः वर्षस्य व्यपनीतं व्यपनयो यस्मिन् तं कालम् ॥ ५३ ॥

मीना एवोपसन्दर्शिता मेखला यासाम् ॥ ५४ ॥

चक्रवाकशैवलकाशाः रोचना पत्ररेखा दुकूलस्थानीयाः ॥ ५५ ॥

गृहीतचापोद्यतदण्डचण्डः
प्रचण्डचापोऽद्य वनेषु कामः ॥ ५६ ॥
लोकं सुवृष्ट्या परितोषयित्वा
नदीस्तटाकानि च पूरयित्वा ।
निष्पन्नसस्यां वसुधाञ्च कृत्वा
त्यक्त्वा नभस्तोयधराः प्रनष्टाः ॥ ५७ ॥
दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः ।
नवसङ्गमसव्रीडा जघनानीव योषितः ॥ ५८ ॥
प्रसन्नसलिलाः सौम्य ! कुरराभिविनादिताः ।
चक्रवाकगणाकीर्णा विभान्ति सलिलाशयाः ॥ ५९ ॥
अन्योन्यबद्धवैराणां जिगीषूणां नृपात्मज ! ।
उद्योगसमयः सौम्य ! पार्थिवानामुपस्थितः ॥ ६० ॥
इयं सा प्रथमा यात्रा पार्थिवानां नृपात्मज ! ।
न च पश्यामि सुग्रीवमुद्योगञ्च तथाविधम् ॥ ६१ ॥

सप्तम्यन्तवनविशेषणो वनेष्विति शेषः। गृहीतेन चापेनोद्यते आरब्धे विरहिविषयके दण्डे चण्डः प्रचण्डः। प्रचण्डश्चापो यस्य स इदं हेतुगर्भम् ॥ ५६ ॥ ५७ ॥

दर्शयन्तीति पद्ये समासोक्तिः स्पष्टैव बद्धा ॥ ५८ ॥ ५९ ॥ ६० ॥

यात्रा यात्राकाल इत्यर्थः। तथाविधं यात्रोपयोगिनमुद्योगञ्च तस्य न पश्यामीत्यनुकर्षः ॥ ६१ ॥

असनाः सप्तपर्णाश्च कोविदाराश्च पुष्पिताः।
दृश्यन्ते बन्धुजीवाश्च श्यामाश्च गिरिसानुषु ॥ ६२ ॥
हंससारसचक्राङ्कैः कुररैश्च समन्ततः।
पुलिनान्यवकीर्णानि नदीनां पश्य लक्ष्मण ! ॥ ६३ ॥
चत्वारो वार्षिका मासा गता वर्षशतोपमाः।
मम शोकाभितप्तस्य तथा सीतामपश्यतः ॥ ६४ ॥
चक्रवाकीव भर्त्तारं पृष्ठतोऽनुगता वनम्।
विषमं दण्डकारण्यमुद्यानमिव चाङ्गना ॥ ६५ ॥
प्रियाविहीने दुःखार्त्ते हृतराज्ये विवासिते।
कृपां न कुरुते राजा सुग्रीवो मयि लक्ष्मण ! ॥ ६६ ॥
अनाथो हृतराज्योऽयं रावणेन च धर्षितः।
दीनोदूरगृहः कामी माञ्चैव शरणं गतः ॥ ६७ ॥
इत्येतैः कारणैः सौम्य ! सुग्रीवस्य दुरात्मनः।

श्यामास्तमालाः ॥ ६२ ॥ ६३ ॥

चत्वार इति। यद्यपि चतुर्थो मासो विद्यत एव तथापि तत्रो-द्योगाभावेन तस्यापि गतप्रायत्वाद्गता इत्युक्तिः ॥ ६४ ॥

का सा सीता तत्राह,—या विषमं दण्डकारण्याख्यं वनमुद्यानमिव ज्ञात्वा। चक्रवाकी भर्त्तारमिव मां पृष्ठतोऽनुगता ॥ ६५ ॥ ६६ ॥

कृपाया अकरणे हेतुमुन्नयति। अनाथ इति। दूरग्रह इति पाठे दूरवर्त्तिस्त्रीविषयो ग्रहो रावणेऽभिनिवेशो वा यस्येत्यर्थः ॥ ६७ ॥

अहं वानरराजस्य परिभूतः परन्तप ! ॥ ६८ ॥
स कालं परिसंख्याय सीतायाः परिमार्गणे ।
कृतार्थः समयं कृत्वा दुर्मतिर्नावबुध्यते ॥ ६९ ॥
स किष्किन्धां प्रविश्य त्वं ब्रूहि वानरपुङ्गवम् ।
मूर्खं ग्राम्यसुखे सक्तं सुग्रीवं वचनान् मम ॥ ७० ॥
अर्थिनामुपपन्नानां पूर्वं चाप्युपकारिणाम् ।
आशां संश्रुत्य यो हन्ति स लोके पुरुषाधमः ॥ ७१ ॥
शुभं वा यदि वा पापं यो हि वाक्यमुदीरितम् ।
सत्येन परिगृह्णाति स वीरः पुरुषोत्तमः ॥ ७२ ॥
कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये ।
तान् मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ७३ ॥
नूनं काञ्चनपृष्ठस्य विकृष्टस्य मया रणे ।
द्रष्टुमिच्छसि चापस्य रूपं विद्युद्गणोपमम् ॥ ७४ ॥

वानरराजस्य वानरराजेन । शेषे षष्ठी ॥ ६८ ॥

परिसंख्याय गणयित्वा न बुध्यते समयमिति शेषः ॥ ६९ ॥ ७० ॥

उपपन्नानां बलवीर्य्यादियुक्तानाम् । आशाम् अभिमतार्थविषयां संश्रुत्य प्रतिज्ञाय ॥ ७१ ॥

सत्येनामोघतया ॥ ७२ ॥

न भवन्ति कार्य्यायेति शेषः । क्रव्यादा श्वादयः ॥ ७३ ॥ ७४ ॥

घोरं ज्यातलनिर्घोषं क्रुद्धस्य मम संयुगे।
निर्घोषमिव वज्रस्य पुनः संश्रोतुमिच्छसि॥ ७५॥
काममेवं गतेऽप्यस्य परिज्ञाते पराक्रमे।
त्वत्सहायस्य मे वीर! न चिन्ता स्यान्नृपात्मज!॥ ७६॥
यदर्थमयमारम्भः कृतः परपुरञ्जय!।
समयं नाभिजानाति कृतार्थः प्लवगेश्वरः॥ ७७॥
वर्षाः समयकालन्तु प्रतिज्ञाय हरीश्वरः।
व्यतीतांश्चतुरो मासान् विहरान् नावबुध्यते॥ ७८॥
सामात्यपरिषत्क्रीडन् पानमेवोपसेवते।
शोकदीनेषु नास्मासु सुग्रीवः कुरुते दयाम्॥ ७९॥
उच्यतां गच्छ सुग्रीवस्त्वया वीर! महाबल!।

संश्रोतुमिच्छसीत्युत्तरम् इति सुग्रीवं ब्रूहीति सम्बन्धः॥ ७५॥

एवं गते इत्यस्य विवरणं पराक्रमे परिज्ञाते इति। त्वत्सहायस्य मे पराक्रमे ज्ञातेऽपि अस्य सुग्रीवस्य चिन्ता वालिवन्मामपि मारयिष्यतीति चिन्ता कामं न स्यादित्यास्वर्य्यमिति भावः॥ ७६॥

यदर्थं सीतान्वेषणार्थम् अयमारम्भः एतत्सख्यरूपः कृतः तद्विषयं समयं कृतार्थो निष्पन्नस्वप्रयोजनो नाभिजानाति न स्मरति॥ ७७॥

वर्षाः वर्षान्तरकालं समयकालं सङ्केतविषयं कालं प्रतिज्ञाय व्यतीतान् व्यतीतप्रायान्॥ ७८॥

पानं मद्यपानम्॥ ७९॥

मम रोषस्य यद्रूपं ब्रूयास्त्वेनमिदं वचः ॥ ८० ॥
न स सङ्कुचितः पन्था येन वाली हतो गतः ।
समये तिष्ठ सुग्रीव ! मा वालिपथमन्वगाः ॥ ८१ ॥
एकएव रणे वाली शरेण निहतो मया ।
त्वान्तु सत्यादतिक्रान्तं हनिष्यामि सबान्धवम् ॥ ८२ ॥
यदेवं विहिते कार्य्ये यद्धितं पुरुषर्षभ ! ।
तत्तत् ब्रूहि नरश्रेष्ठ ! त्वर कालव्यतिक्रमः ॥ ८३ ॥
कुरुष्व सत्यं मम वानरेश्वर !
प्रतिश्रुतं धर्ममवेक्ष्य शाश्वतम् ।
मा वालिनं प्रेतगतो यमक्षये
त्वमद्य पश्येर्मम चोदितः शरैः ॥ ८४ ॥

उच्यतामित्युक्तं किं वक्तव्यमित्यत आह,—यद्रूपमिति मम रोषस्य यद्रूपमुचितमिति शेषः । तत् ब्रूया इदं वचश्च ब्रूयाः ॥ ८० ॥

तद्वच आह,—नेति । समये तिष्ठ समयं माहासीरित्यर्थः ॥ ८१ ॥ ८२ ॥

एवं तेन विहिते कार्य्ये यद्धितमस्माकं तस्य च तत्तत् ब्रूहि त्वरा हेतुः कालव्यतिक्रमः जायते इति शेषः ॥ ८३ ॥

उपदेशसंक्षेपः कुरुष्वेति । प्रेतगतः प्रेतत्वं प्राप्तः यमक्षये यमगृहे मा वालिनं पश्येः । मम शरैश्चोदितः प्रेरितः प्रेतत्वायेति शेषः इति ब्रूहीत्यन्वयः ॥ ८४ ॥

स पूर्व्वजं तीव्रविवृद्धकोपं
लालप्यमानं प्रसमीक्ष्य दीनम्।
चकार तीव्रां मतिमुग्रतेजा
हरीश्वरे मानववंशवर्द्धनः॥ ८५॥

इत्यार्ष रामायणे वाल्मीकीये किष्किन्धाकाण्डे
त्रिंशः सर्गः॥ ३०॥

मानववंशवर्द्धनो लक्ष्मणः॥ ८५॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे त्रिंशः सर्गः॥ ३०॥

---

## एकत्रिंशः सर्गः ।

स कामिनं दीनमदीनसत्त्वं
शोकाभिपन्नं समुदीर्णकामम् ।
नरेन्द्रसूनुर्नरदेवपुत्रं
रामानुजः पूर्वजमित्युवाच ॥ १ ॥
न वानरः स्थास्यति साधुवृत्ते
न मन्यते कर्म्मफलानुषङ्गान् ।
न भोच्यते वानरराज्यलक्ष्मीं
तथाहि नातिक्रमतेऽस्य बुद्धिः ॥ २ ॥

स लक्ष्मणः ॥ १ ॥

साधुवृत्ते साधूनां वृत्ते । स्थिरस्नेहतालक्षणे । कर्मणा जनितान् फलानुषङ्गान् अकण्टकराज्यभोगसम्बन्धान्न मन्यते । सख्यमूलानिति शेषः । अतएव वानरराज्यलक्ष्मीं न भोच्यते हि यस्मात्तस्मात्तथा तत्प्रकारस्य बुद्धिः प्रेमप्रतिपालने अति अत्यन्तं न क्रमते । तथाहि नातिक्रमत इति पाठः पाङ्क्तः ॥ २ ॥

मतिक्षयात् ग्राम्यसुखेषु सक्तः
तव प्रसादात् प्रतिकारबुद्धिः।
हतोऽग्रजं पश्यतु वीर! वालिनं
न राज्यमेवं विगुणस्य देयम् ॥ ३ ॥

न धारये कोपमुदीर्णवेगं
निहन्मि सुग्रीवमसत्यमद्य।
हरिप्रवीरैः सह वालिपुत्रो
नरेन्द्रपुत्र्या विचयं करोतु ॥ ४ ॥

तमात्तबाणासनमुत्पतन्तं
निवेदितार्थं रणचण्डकोपम्।
उवाच रामः परवीरहन्ता
स्ववेक्षितं सानुनयञ्च वाक्यम् ॥ ५ ॥

तत्र हेतुमाह,—मतिक्षयादिति। मतिक्षये हेतुस्तव प्रसादः अतस्तस्य प्रतिकारबुद्धिः प्रत्युपकारबुद्धिर्न वर्त्तत इति शेषः। न देयं दत्तं नानुपालनीयमित्यर्थः ॥ ३ ॥

न धारये धारयितुं न शक्नोमि। वालिपुत्रोऽङ्गदः। विचयमन्वेषणं सुग्रीवं हत्वा तस्मै राज्यसमर्पणादिति भावः ॥ ४ ॥

निवेदितार्थं विज्ञापितसुग्रीववधप्रवृत्तिम्। स्ववेक्षितं सुष्ठु अवेक्षितं समयोचितम् ॥ ५ ॥

न हि वै त्वद्विधो लोके पापमेवं समाचरेत् ।
कोपमार्य्येण यो हन्ति स वीरः पुरुषोत्तमः ॥ ६ ॥
नदमत्र त्वया ग्राह्यं साधुवृत्तेन लक्ष्मण ! ।
तां प्रीतिमनुवर्त्तस्व पूर्व्ववृत्तञ्च सङ्गतम् ॥ ७ ॥
सामोपहितया वाचा रूक्षाणि परिवर्जयन् ।
वक्तुमर्हसि सुग्रीवं व्यतीतं कालपर्य्यये ॥ ८ ॥
सोऽग्रजेनानुशिष्टार्थो यथावत् पुरुषर्षभः ।
प्रविवेश पुरीं वीरो लक्ष्मणः परवीरहा ॥ ९ ॥
ततः शुभमतिः प्राज्ञो भ्रातुः प्रियहिते रतः ।
लक्ष्मणः प्रतिसंरब्धो जगाम भवनं कपेः ॥ १० ॥
शक्रबाणासनप्रख्यं धनुः कालान्तकोपमम् ।

त्वद्विधः धर्मज्ञः पापं मित्रबधाध्यवसायरूपम् आर्य्येण सम्यक् विवेकेन ॥ ६ ॥

इदं मित्रघातरूपं वस्तु न ग्राह्यं न निश्चेयम् । साधुवृत्तं साधुत्वं तेन तां पूर्वकृतां प्रीतिम् अनुवर्त्तस्व सुग्रीवे इति शेषः । पूर्ववृत्तं सङ्गतञ्च सख्यञ्च स्मरेति शेषः ॥ ७ ॥

कालपर्य्यये कालातिक्रमे व्यतीतम् अतिक्रममेव कालोऽतिक्रान्त इत्येव वक्तुमर्हसि नापरं किञ्चिदित्यर्थः ॥ ८ ॥

अग्रजेन रामेण ॥ ९ ॥

भवनं प्रति जगाम संरब्धः नातिकालातिक्रमजकोपः ॥ १० ॥

प्रगृह्य गिरिशृङ्गाभं मन्दरः सानुमानिव ॥ ११ ॥
यथोक्तकारी वचनमुत्तरञ्चैव सोत्तरम् ।
वृहस्पतिसमो बुद्ध्या मत्वा रामानुजस्तदा ॥ १२ ॥
कामक्रोधसमुत्थेन भ्रातुः क्रोधाग्निना वृतः ।
प्रभञ्जन इवाप्रीतः प्रययौ लक्ष्मणस्ततः ॥ १३ ॥
सालतालाश्वकर्णांश्च तरसा पातयन् बलात् ।
पर्य्यस्यन् गिरिकूटानि द्रुमानन्यांश्च वेगितः ॥ १४ ॥
शिलाश्च शकलीकुर्व्वन् पद्भ्यां गज इवाशुगः ।
दूरमेकं पदं त्यक्त्वा ययौ कार्य्यवशात् द्रुतम् ॥ १५ ॥

कालान्तकोपमं कालादिवद्भयङ्करं सानुमान् मन्दर इव जगामेत्यन्वयः ॥ ११ ॥

यथोक्तकारी रामस्येति शेषः। वचनं सुग्रीवं प्रति स्वेन वक्तव्यम् उत्तरं तदुपरि सुग्रीवेण वक्तव्यं सोत्तरं तदुपरि स्ववक्तव्योत्तरसहितं मत्वा आलोच्य ॥ १२ ॥

भ्रातू रामस्य यः कामो मनोरथस्तज्जन्यो यः क्रोधस्तद्विघातजन्यः क्रोधस्तत् समुत्थेन तज्जन्येन क्रोधाग्निना वृतः अतएवाप्रीतः प्रभञ्जनो वायुरिव वेगेन प्रययौ ॥ १३ ॥

तरसा उरुवेगेन पर्य्यस्यन् क्षिपन् वेगितः सञ्जातवेगः ॥ १४ ॥

एकपदं एकैकपदं दूरं यथा भवति तथा त्यक्त्वा कार्य्यवशात् द्रुतं ययौ ॥ १५ ॥

तामपश्यत् बलाकीर्णां हरिराजमहापुरीम् ।
दुर्गामिक्ष्वाकुशार्दूलः किष्किन्धां गिरिसङ्कटे ॥ १६ ॥
रोषात् प्रस्फुरमाणोष्ठः सुग्रीवं प्रति लक्ष्मणः ।
ददर्श वानरान् भीमान् किष्किन्धायां बहिश्चरान् ॥ १७ ॥
तं दृष्ट्वा वानराः सर्वे लक्ष्मणं पुरुषर्षभम् ।
शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ।
जगृहुः कुञ्जरप्रख्या वानराः पर्व्वतान्तरे ॥ १८ ॥
तान् गृहीतप्रहरणान् सर्व्वान् दृष्ट्वा तु लक्ष्मणः ।
बभूव द्विगुणं क्रुद्धो बह्विन्धन इवानलः ॥ १९ ॥
तं ते भयपरीताङ्गाः क्षुब्धं दृष्ट्वा प्लवङ्गमाः ।
कालमृत्युयुगान्ताभं शतशो विद्रुता दिशः ॥ २० ॥
ततः सुग्रीवभवनं प्रविश्य हरिपुङ्गवाः ।
क्रोधमागमनञ्चैव लक्ष्मणस्य न्यवेदयन् ॥ २१ ॥
तारया सहितः कामी सक्तः कपिवृषस्तदा ।
न तेषां कपिसिंहानां शुश्राव वचनं तदा ॥ २२ ॥

बलाकीर्णां वानरसेनाव्याप्तां गिरिसङ्कटे भूधरमध्ये वर्त्तमानाम् ॥ १६ ॥ १७ ॥

क्रुद्धलक्ष्मणदर्शनेन भीत्या शैलशृङ्गादिग्रहो वानराणाम् ॥ १८ ॥

द्विगुणं क्रुद्धः मां दृष्ट्वेमे प्रणामं त्यक्त्वा प्रहरणं गृह्णन्तीति कोपद्वैगुण्यम् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

ततः सचिवसन्दिष्टा हरयो रोमहर्षणाः।
गिरिकुञ्जरमेघाभा नगरान् निर्य्ययुस्तदा ॥ २३ ॥
नखदंष्ट्रायुधाः सर्व्वे वीरा विकृतदर्शनाः।
सर्व्वे शार्दूलदंष्ट्राश्च सर्व्वे विवृतदर्शनाः ॥ २४ ॥
दशनागबलाः केचित् केचित् दशगुणोत्तराः।
केचिन्नागसहस्रस्य बभूवुस्तुल्यवर्च्चसः ॥ २५ ॥
ततस्तैः कपिभिर्व्याप्तां द्रुमहस्तैर्महाबलैः।
अपश्यत् लक्ष्मणः क्रुद्धः किष्किन्धां तां दुरासदाम् ॥ २६ ॥
ततस्ते हरयः सर्व्वे प्राकारपरिखान्तरात्।
निष्क्रम्योदग्रसत्त्वास्तु तस्थुराविष्कृतं तदा ॥ २७ ॥
सुग्रीवस्य प्रमादञ्च पूर्व्वजस्यार्थमात्मवान्।

ततः सचिवसन्दिष्टाः सुग्रीवं बोधयित्वा तदनुमत्या लक्ष्मणोऽस्माभिर्यावत्प्रवेक्ष्यते तावद्धटात्लक्ष्मणप्रवेशं निरुन्धानास्तिष्ठन्त इत्येवं सचिवैर्हनूमदादिभिः सन्दिष्टाः हरयो नगरान्निर्य्ययुः ॥ २३ ॥

विकृतदर्शना भीमदर्शनाः विवृतदर्शनाः प्रकटदर्शनाः ॥ २४ ॥

दशगुणोत्तराः शतनागबला इत्यर्थः। नागसहस्रस्य तुल्यवर्चसः नागसहस्रतेजस्तुल्यतेजसः ॥ २५ ॥

दुरासदामपश्यदित्यन्वयः ॥ २६ ॥

प्राकारात् बहिर्वर्त्तिनी परिखा तदन्तरात्तदवधेरपि बहिर्निष्क्रम्य आविष्कृतं प्रकटितं यथा तथा तस्थुः ॥ २७ ॥

दृष्ट्वा क्रोधवशं वीरः पुनरेव जगाम सः ॥ २८ ॥
स दीर्घोष्णमहोच्छ्वासः कोपसंरक्तलोचनः ।
बभूव नरशार्दूलः सधूम इव पावकः ॥ २९ ॥
बाणशल्यस्फुरज्जिह्वः सायकासनभोगवान् ।
स्वतेजोविषसम्भूतः पञ्चास्य इव पन्नगः ॥ ३० ॥
तं दीप्तमिव कालाग्निं नागेन्द्रमिव कोपितम् ।
समासाद्याङ्गदः त्रासात् विषादमगमत् परम् ॥ ३१ ॥
सोऽङ्गदं रोषताम्राक्षः सन्दिदेश महायशाः ।
सुग्रीवः कथ्यतां वत्स ! ममागमनमित्युत ॥ ३२ ॥
एष रामानुजः प्राप्तः त्वत्सकाशमरिन्दम ! ।
भ्रातुर्व्यसनसन्तप्तो द्वारि तिष्ठति लक्ष्मणः ॥ ३३ ॥

प्रमादञ्च चादानरप्रतिरोधञ्च । पूर्वजस्य रामस्यार्थञ्च दृष्ट्वा विचार्य्य ॥ २८ ॥

दीर्घ उष्णो महानुच्छ्वासो यस्य ॥ २९ ॥

बाणस्य शल्यमेव स्फुरन्ती जिह्वा यस्य सः । सायकासनं धनुरेव भोगो यस्य स्वतेजोरूपविषेण सम्भूतो व्याप्तः ॥ ३० ॥

विषादमगमत् एतावत्पर्य्यन्तं रामकार्य्यं न चिन्तितमिति विषादः ॥ ३१ ॥

इत्युत एवम्प्रकारेणेत्यर्थः ॥ ३२ ॥

तं प्रकारं दर्शयति एष इति ॥ ३३ ॥

तस्य वाक्यं यदि रुचिः क्रियतां साधु वानरः ।
इत्युक्त्वा शीघ्रमागच्छ वत्स ! वाक्यमरिन्दम ! ॥ ३४ ॥
लक्ष्मणस्य वचः श्रुत्वा शोकाविष्टोऽङ्गदोऽब्रवीत् ।
पितुः समीपमागम्य सौमित्रिरयमागतः ॥ ३५ ॥
अथाङ्गदस्तस्य सुतीव्रवाचा
सम्भ्रान्तभावः परदीनवक्त्रः ।
निर्गत्य पूर्व्वं नृपतेस्तरस्वी
ततोरुमायाश्चरणौ ववन्दे ॥ ३६ ॥
संगृह्य पादौ पितुरुग्रतेजा
जग्राह मातुः पुनरेव पादौ ।
पादौ रुमायाश्च निपीड़यित्वा
निवेदयामास ततस्तदर्थम् ॥ ३७ ॥

इदमुक्तं मम वाक्यं तस्मै इति उक्तप्रकारेण उक्त्वा स वानर सुग्रीवः साधु साधुकारी यथा भवति तथा क्रियताम् । अनन्तरं तस्यास्मासु यदि रुचिर्भवति तदा तस्य वाक्यं श्रुत्वा शीघ्रमागच्छ ॥ ३४ ॥ ३५ ॥

लक्ष्मणस्येति श्लोकेन संक्षिप्योक्तस्यार्थस्य विस्तरोऽग्रेति । सम्भ्रान्तभावः सम्भ्रान्तचित्तः । परदीनवक्त्रः परमतिशयेन दीनं वक्त्रं यस्य सः । परिदीनेति पाठान्तरम् । निर्गत्य लक्ष्मणसन्निहितदेशात् परावृत्येत्यर्थः । पूर्वं नृपतेस्ततोरुमाया इदमुपलक्षणं तारायाश्चरणावित्यन्वयः ॥ ३६ ॥

स निद्राक्लान्तसंवीतो वानरो न विबुद्धवान् ।
बभूव मदमत्तश्च मदनेन च मोहितः ॥ ३८ ॥
ततः किलकिलाञ्चक्रुर्लक्ष्मणं प्रेक्ष्य वानराः ।
प्रसादयन्तस्तं क्रुद्धं भयमोहितचेतसः ॥ ३९ ॥
ते महौघनिभं दृष्ट्वा वज्राशनिसमस्वनम् ।
सिंहनादं समं चक्रुर्लक्ष्मणस्य समीपतः ॥ ४० ॥
तेन शब्देन महता प्रत्यबुध्यत वानरः ।
मदविक्लवताम्राक्षो व्याकुलः स्रग्विभूषणः ॥ ४१ ॥
अथाङ्गदवचः श्रुत्वा तेनैव च समागतौ ।
मन्त्रिणौ वानरेन्द्रस्य सम्मतोदारदर्शनौ ॥ ४२ ॥

तदेव विस्तारयति । संरब्धेति । मातुस्ताराया: ॥ ३७ ॥

निद्रया क्लान्तः संवीतो व्याप्तश्चेत्यर्थः । न विबुद्धवान् । तन्नतिं तद्वचनश्चेत्यर्थः । यतो मदनेन मोहितो मदमत्तश्च बभूवासीत् ॥ ३८ ॥

ततः अङ्गदस्य सुग्रीवसमीपगमनानन्तरम् । वानराणां भयक्रोधादिजः शब्दसमूहः किलकिला । तं लक्ष्मणम् ॥ ३९ ॥

ते लक्ष्मणं दृष्ट्वा महौघनिभं तच्छब्दसदृशशब्दं वज्रादिसदृशशब्दञ्च समं सह सिंहनादञ्चक्रुः । सुग्रीवोद्बोधनायेति शेषः ॥ ४० ॥ ४१ ॥

अथेति । वानरशब्देन प्रबुद्धस्य वानरेन्द्रस्य सुग्रीवस्य समीपमङ्गदवचः श्रुत्वा तेनाङ्गदेनैव सह मन्त्रिणौ वानरेन्द्रस्य समीपमागतौ सम्मतौ च तावुदारदर्शनौ च सम्मतोदारदर्शनौ च ॥ ४२ ॥

यत्तस्यैव प्रभावस्य मन्त्रिणावर्थधर्म्मयोः।
वक्तुमुच्चावचं प्राप्तं लक्ष्मणं तौ प्रशंसतुः॥ ४३॥
प्रसादयित्वा सुग्रीवं वचनैः सार्थनिश्चितैः।
आसीनं पर्य्युपासीनौ यथा शक्रं मरुत्पतिम्॥ ४४॥
सत्यसन्धौ महाभागौ भ्रातरौ रामलक्ष्मणौ।
मनुष्यभावं संप्राप्तौ राज्यार्हौ राज्यदायिनौ॥ ४५॥
तयोरेको धनुष्पाणिर्द्वारि तिष्ठति लक्ष्मणः।
यस्य भीताः प्रवेपन्तो नादान् मुञ्चन्ति वानराः॥ ४६॥
स एष राघवभ्राता लक्ष्मणो वाक्यसारथिः।
व्यवसायरथः प्राप्तस्तस्य रामस्य शासनात्॥ ४७॥
अयञ्च तनयो राजन्! ताराया दयितोऽङ्गदः।
लक्ष्मणेन सकाशं ते प्रेषितस्त्वरयानघ!॥ ४८॥
सोऽयं रोषपरीताक्षो द्वारि तिष्ठति वीर्य्यवान्।

कौ तौ तत्राह,—यत्त इत्यादि। अर्थधर्मयोर्विषये उच्चावचं स्वरात्ति वक्तुं प्राप्तं लक्ष्मणं प्रशंसतुः॥ ४३॥

सार्थनिश्चितैः अर्थनिश्चयसहितैर्वचनैः प्रसादयित्वा प्रशंसतुरित्यन्वयः॥ ४४॥

राज्यार्हौ त्रिलोकीराज्यार्हौ राज्यदायिनौ तवेति शेषः। मनुष्यभावं प्राप्तावित्यनेन वस्तुतो न मनुष्याविति सूचितम्॥ ४५॥

यस्य भीताः यस्माद्भीताः॥ ४६॥

वानरान् वानरपते ! चक्षुषा निर्दहन्निव ॥ ४९ ॥
तस्य मूर्ध्ना प्रणामं त्वं सपुत्रः सहबान्धवः ।
गच्छ शीघ्रं महाराज ! रोषो ह्यस्योपशाम्यताम् ॥ ५० ॥
यथा हि रामो धर्मात्मा तत् कुरुष्व समाहितः ।
राजन् ! तिष्ठस्व समये भव सत्यप्रतिश्रवः ॥ ५१ ॥

## इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

वाक्यं रामवाक्यं सारथिर्यस्य व्यवसायः कर्त्तव्यार्थनिश्चयः स रथो यस्य ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥

धर्मात्मा वदतीति शेषः । सत्यप्रतिश्रवः सत्यप्रतिज्ञः ॥ ५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धाकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

# द्वात्रिंशः सर्गः ।



अङ्गदस्य वचः श्रुत्वा सुग्रीवः सचिवैः सह ।
लक्ष्मणं कुपितं श्रुत्वा मुमोचासनमात्मवान् ॥ १ ॥
स च तानब्रवीद्वाक्यं निश्चित्य गुरुलाघवम् ।
मन्त्रज्ञान् मन्त्रकुशलो मन्त्रेषु परिनिष्ठितः ॥ २ ॥
न मे दुर्व्याहृतं किञ्चिन्नापि मे दुरनुष्ठितम् ।
लक्ष्मणो राघवभ्राता क्रुद्धः किमिति चिन्तये ॥ ३ ॥
असुहृद्भिर्ममामित्रैर्नित्यमन्तरदर्शिभिः ।
मम दोषानसम्भूतांश्राविता राघवानुजः ॥ ४ ॥

अङ्गदस्येति ॥ १ ॥

गुरुलाघवं गुरुत्वलघुत्वेत्यर्थः ॥ २ ॥

दुर्व्याहृतम् अनुचितवचनमुक्तं दुरनुष्ठितम् अनुचितं कृत्यं कृतमिति शेषः ॥ ३ ॥

कोपकारणमुन्नयति । असुहृद्भिरिति । असुहृदः शत्रवः अमित्राः अपकारिणः अन्तरं छिद्रम् असम्भूतान् अनुत्पन्नान् श्राविता नूनमिति शेषः ॥ ४ ॥

अत्र तावद्यथाबुद्धिः सर्व्वैरेव यथाविधि ।
भावस्य निश्चयस्तावद्विज्ञेयो निपुणं शनैः ॥ ५ ॥
न खल्वस्ति मम त्रासो लक्ष्मणान्नापि राघवात् ।
मित्रं त्वस्थानकुपितं जनयत्येव सम्भ्रमम् ॥ ६ ॥
सर्वथा सुकरं मित्रं दुष्करं प्रतिपालनम् ।
अनित्यत्वात्तु चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥ ७ ॥
अतोनिमित्तं त्रस्तोऽहं रामेण तु महात्मना ।
यन्ममोपकृतं शक्यं प्रतिकर्त्तुं न तन्मया ॥ ८ ॥
सुग्रीवेणैवमुक्त तु हनूमान् हरिपुङ्गवः ।
उवाच स्वेन तर्केण मध्ये वानरमन्त्रिणाम् ॥ ९ ॥

अत्र लक्ष्मणकोपविषये तावत् प्रथमतः यथा तत्त्वात्मिका बुद्धिर्ज्ञानं यस्मिन्निश्चये स भावस्य कोपस्य निश्चयः तात्त्विककोपनिमित्तस्य निश्चयो विज्ञेयः कर्त्तव्यः ॥ ५ ॥

त्रासो मदपराधमूल इति शेषः। कुतस्तर्हि त्रासोऽत आह,—मित्रमिति। अस्थानेऽकाण्डे वास्तवापराधाभावेऽपि रिपुकृतमिथ्योपजापेन कुपितं सञ्जातकोपं मित्रं सम्भ्रमं भयं जनयत्येव ॥ ६ ॥

रिपुजोपजापपरिहारेण सख्यपालनं दुष्करमित्याह,—सर्वथेति। अल्पेपि उपजापे इति शेषः ॥ ७ ॥

अतोनिमित्तम् अस्मान्निमित्तात्। अथ स्वदोषशङ्कानिवृत्तये कृतज्ञतां मन्त्रिभ्यो दर्शयति। रामेणत्विति ॥ ८ ॥

सर्वथा नैतदाश्चर्य्यं यत्त्वं हरिगणेश्वर ! ।
न विस्मरस्यविस्रब्धमुपकारं कृतं शुभम् ॥ १० ॥
राघवेण तु वीरेण भयमुत्सृज्य दूरतः ।
त्वत्प्रियार्थं हतो वाली शक्रतुल्यपराक्रमः ॥ ११ ॥
सर्वथा प्रणयात् क्रुद्धो राघवो नात्र संशयः ।
भ्रातरं संप्रहितवान् लक्ष्मणं लक्ष्मिवर्द्धनम् ॥ १२ ॥
त्वं प्रमत्तो न जानीषे कालं कालविदांवर ! ।
फुल्लसप्तच्छदश्यामा प्रवृत्ता तु शरच्छुभा ॥ १३ ॥
निर्मलग्रहनक्षत्रा द्यौः प्रनष्टबलाहका ।
प्रसन्नाश्च दिशः सर्व्वाः सरितश्च सरांसि च ॥ १४ ॥

अथ मुख्यमन्त्री हनूमान् कोपनिमित्तं निश्चित्याह,—सुग्रीवेणेति । तत्रोक्ता युक्तिः ॥ ९ ॥

अथ निश्चयं विवक्षुः स्वस्य गुणग्राहित्वरूपं मन्त्रिलक्षणं प्रक-टयति । सर्वथेति ॥ १० ॥

उपकारमेवाह,—राघवेणेति । भयं वालिपराक्रमजं वालिनः छलेन वधकृतं लोकापवादजं वा ॥ ११ ॥

प्रणयात् क्रुद्धः न तु त्वद्विपुत्वमजायत इत्यर्थः ॥ १२ ॥

प्रणयकोपस्यापि निमित्ताभासं दर्शयति त्वमिति । कालं प्रतिज्ञातं सीतान्वेषणकालं प्रवृत्ता प्रकर्षेण वृत्ता गतप्रायेति यावत् ॥ १३ ॥ १४ ॥

प्राप्तमुद्योगकालन्तु नावैषि हरिपुङ्गव ! ।
त्वं प्रमत्त इति व्यक्तं लक्ष्मणोऽयमिहागतः ॥ १५ ॥
आर्त्तस्य हृतदारस्य परुषं पुरुषान्तरात् ।
वचनं मर्षणीयन्ते राघवस्य महात्मनः ॥ १६ ॥
कृतापराधस्य हि ते नान्यत् पश्याम्यहं क्षमम् ।
अन्तरेणाञ्जलिं बध्वा लक्ष्मणस्य प्रसादनात् ॥ १७ ॥
नियुक्तैर्मन्त्रिभिर्वाच्यो ह्यवश्यं पार्थिवो हितम् ।
अतएव भयं त्यक्का ब्रवीम्यवधृतं वचः ॥ १८ ॥
अभिक्रुद्धः समर्थो हि चापमुद्यम्य राघवः ।
सदेवासुरगन्धर्वं वशे स्थापयितुं जगत् ॥ १९ ॥
न स क्षमः कोपयितुं यः प्रसाद्यः पुनर्भवेत् ।
पूर्व्वोपकारं स्मरता कृतज्ञेन विशेषतः ॥ २० ॥
तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रः ससुहृज्जनः ।

व्यक्तं ज्ञात्वेति शेषः ॥ १५ ॥

पुरुषान्तरात् लक्ष्मणात् श्रुतं परुषं वचनं ते त्वया मर्षणीयं तत्सम्भावनमालक्ष्यायमुपदेशः ॥ १६ ॥ १७ ॥

नियुक्तैर्हितोपदेशे इति शेषः। भयं त्यक्का ब्रवीमि राजानमपि कार्य्यवशात् परस्मै अञ्जलिं कुर्विति वक्तो अवहृतं निश्चितं वदामि ॥ १८ ॥ १९ ॥

राजंस्तिष्ठस्व समय भर्त्तुर्भार्य्येव तद्वशे ॥ २१ ॥

न रामरामानुजशासनं त्वया

कपीन्द्र! युक्तं मनसाप्यपोहितुम्।

मनो हि ते ज्ञास्यति मानुषं बलं

सराघवस्यास्य सुरेन्द्रवर्च्चसः ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
द्वात्रिंशः सर्गः ॥ ३२ ॥

यः पुनः प्रसाद्यो भवेत् स कोपयितुं न क्षमो न युक्तः॥ २०॥ २१॥ अपोहितुम् उपेक्षितुं स राघवस्य लक्ष्मणस्यास्य रामस्य मानुषं मनुष्यमतिक्रान्तं बलं ते मनो ज्ञास्यति जानात्येव वालिवधादिनेति भावः॥ २२॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे द्वात्रिंशः सर्गः॥ ३२॥

---

## त्रयस्त्रिंशः सर्गः।

अथ प्रतिसमादिष्टो लक्ष्मणः परवीरहा।
प्रविवेश गुहां रम्यां किष्किन्धां रामशासनात् ॥ १ ॥
द्वारस्था हरयस्तत्र महाकाया महाबलाः।
बभूवुर्लक्ष्मणं दृष्ट्वा सर्व्वे प्राञ्जलयः स्थिताः ॥ २ ॥
निश्वसन्तन्तु तं दृष्ट्वा क्रुद्धं दशरथात्मजम्।
बभूवुर्हरयस्तस्ता न चैनं पर्य्यवारयन् ॥ ३ ॥
स तां रत्नमयीं दिव्यां श्रीमान् पुष्पितकाननाम्।
रम्यां रत्नसमाकीर्णां ददर्श महतीं गुहाम् ॥ ४ ॥
हर्म्यप्रासादसम्बाधां नानारत्नोपशोभिताम्।
सर्व्वकामफलैर्वृक्षैः पुष्पितैरुपशोभिताम् ॥ ५ ॥

अथ एवं हनुमद्वचनानन्तरं प्रतिसमादिष्टः अङ्गदात् प्रतिसन्देशं प्राप्तः ॥ १ ॥

स्थिता हरयः प्राञ्जलयो बभूबुरित्यन्वयः ॥ २ ॥

पर्य्यवारयन् भयेन लक्ष्मणं परिवार्य्य गन्तुं नाशक्नुवन्नित्यर्थः ॥ ३ ॥

पुष्पितानि काननानि यस्यां सा तां रत्नसमाकीर्णाम् अनेकोत्तमवस्त्वाक्रान्ताम् ॥ ४ ॥

देवगन्धर्व्वपुत्रैश्च वानरैः कामरूपिभिः ।
दिव्यमाल्याम्बरधरैः शोभितां प्रियदर्शनैः ॥ ६ ॥
चन्दनागुरुपद्मानां गन्धैः सुरभिगन्धिताम् ।
मैरेयाणां मधूनाञ्च सम्मोदितमहापथाम् ॥ ७ ॥
विन्ध्यमेरुगिरिप्रख्यैः प्रासादैर्नैकभूमिभिः ।
ददर्श गिरिनद्यश्च विमलास्तत्र राघवः ॥ ८ ॥
अङ्गदस्य गृहं रम्यं मैन्दस्य द्विविदस्य च ।
गवयस्य गवाक्षस्य गजस्य शरभस्य च ॥ ९ ॥
विद्युन्मालेश्च सम्पातेः सूर्य्याक्षस्य हनूमतः ।
वीरबाहोः सुबाहोश्च नलस्य च महात्मनः ॥ १० ॥
कुमुदस्य सुषेणस्य तारजाम्बवतोस्तथा ।
दधिवक्त्रस्य नीलस्य सुपाटलसुनेत्रयोः ॥ ११ ॥
एतेषां कपिमुख्यानां राजमार्गे महात्मनाम् ।
ददर्श गृहमुख्यानि महासाराणि लक्ष्मणः ॥ १२ ॥
पाण्डुराभ्रप्रकाशानि गन्धमाल्ययुतानि च ।
प्रभूतधनधान्यानि स्त्रीरत्नैः शोभितानि च ॥ १३ ॥

तस्यैव प्रपञ्चः हर्म्येति । सर्वकामफलैः सर्वदापेक्षितफलयुक्तैः ॥ ५ ॥ ६ ॥

पद्मं पद्मकाख्यं गन्धद्रव्यम् । सुरभिगन्धितां सुगन्धितां मधूनाञ्च गन्धैरिति शेषः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

पाण्डुरेण तु शैलेन परिक्षिप्तं दुरासदम् ।
वानरेन्द्रगृहं रम्यं महेन्द्रसदनोपमम् ॥ १४ ॥
शुक्लैः प्रासादशिखरैः कैलासशिखरोपमैः ।
सर्व्वकामफलैर्वृक्षैः पुष्पितैरुपशोभितम् ॥ १५ ॥
महेन्द्रदत्तैः श्रीमद्भिर्नीलजीमूतसन्निभैः ।
दिव्यपुष्पफलैर्वृक्षैः शीतच्छायैर्मनोरमैः ॥ १६ ॥
हरिभिः संवृतद्वारं बलिभिः शस्त्रपाणिभिः ।
दिव्यमाल्यावृतं शुभ्रं तप्तकाञ्चनतोरणम् ॥ १७ ॥
सुग्रीवस्य गृहं रम्यं प्रविवेश महाबलः ।
अवार्य्यमाणः सौमित्रिर्महाभ्रमिव भास्करः ॥ १८ ॥
स सप्तकक्ष्या धर्मात्मा यानासनसमावृताः ।
ददर्श सुमहत् गुप्तं ददर्शान्तःपुरं महत् ॥ १९ ॥
हैमराजतपर्य्यङ्कैर्बहुभिश्च वरासनैः ।
महार्हास्तरणोपेतैस्तच तत्र समावृतम् ॥ २० ॥
प्रविशन्नेव सततं शुश्राव मधुरस्वनम् ।

पाण्डुरेण शैलेन परिक्षिप्तं स्फटिकशिलामयवप्रेण वेष्टितम् ॥ १४ ॥ १५ ॥
महेन्द्रदत्तैः वृक्षैः कल्पवृक्षैः ॥ १६ ॥ १७ ॥ १८ ॥
सप्तकक्ष्या इत्यस्यातिक्रम्येति शेषः ॥ १९ ॥ २० ॥

तन्त्रीगीतसमाकीर्णं समतालपदाचरम् ॥ २१ ॥
बह्वीश्च विविधाकारा रूपयौवनगर्विताः।
स्त्रियः सुग्रीवभवने ददर्श स महाबलः ॥ २२ ॥
दृष्ट्वाभिजनसम्पन्नास्तत्र माल्यकृतस्रजः।
वरमाल्यकृतव्यग्रा भूषणोत्तमभूषिताः ॥ २३ ॥
नातृप्तान्नाति च व्यग्राननुदात्तपरिच्छदान्।
सुग्रीवानुचरांश्चापि लक्षयामास लक्ष्मणः ॥ २४ ॥
कूजितं नूपुराणाञ्च काञ्चीनां निस्वनं तथा।
स निशम्य ततः श्रीमान् सौमित्रिर्लज्जितोऽभवत् ॥ २५ ॥
रोषवेगप्रकुपितः श्रुत्वा चाभरणस्वनम्।
चकार ज्यास्वनं वीरो दिशः शब्देन पूरयन् ॥ २६ ॥

तन्त्रीगीतेन वीणावाद्यघोषेण सहितं मधुरस्वनं मुरजादेः सुश्राव ॥ २१ ॥ २२ ॥

अभिजनसम्पन्ना आभिजात्ययुक्ताः वरमाल्यकृतव्यग्राः उत्तममाल्याम्बरस्रजां कृतं करणं तत्र व्यग्राः ॥ २३ ॥

अव्यग्रान् परिचर्य्यात्वरारहितान् अनुदात्तपरिच्छदान् प्रशस्तालङ्काररहितान् ॥ २४ ॥

लज्जितोऽभवत् अयोध्यातोऽप्यधिकसौभाग्यदर्शनाल्लज्जा परस्त्रीदर्शनकृता लज्जेत्यन्ये ॥ २५ ॥

रोषवेगेन प्रकुपितः नेदानीमपि कामभोगं त्यजतीति कोपवृद्धिः।

चारित्रेण महाबाहुरपकृष्टः स लक्ष्मणः।
तस्थावेकान्तमाश्रित्य रामकोपसमन्वितः॥ २७॥
तेन चापस्वनेनाथ सुग्रीवः प्लवगाधिपः।
विज्ञायागमनं त्रस्तः स चचाल वरासनात्॥ २८॥
अङ्गदेन यथा मह्यं पुरस्तात् प्रतिवेदितम्।
सुव्यक्तमेष सम्प्राप्तः सौमित्रिर्भ्रातृवत्सलः॥ २९॥
अङ्गदेन समाख्यातो ज्यास्वनेन च वानरः।
बुबुधे लक्ष्मणं प्राप्तं मुखञ्चास्योपशुष्यत॥ ३०॥
ततस्तारां हरिश्रेष्ठः सुग्रीवः प्रियदर्शनाम्।
उवाच हितमव्यग्रस्त्राससम्भ्रान्तमानसः॥ ३१॥
किन्नु रुट्कारणं सुभ्रु! प्रकृत्या मृदुमानसः।
सरोष इव सम्प्राप्तो येनायं राघवानुजः॥ ३२॥

रोषवेगप्रचलित इति पाठान्तरम्। अर्थस्तुल्यः आभरणस्वनं श्रुत्वा स्त्रीणां ततो निवृत्तये ज्यास्वनं चकार॥ २६॥

तदेवाह,—चारित्रेणेति। चारित्रेण स्त्रीगोष्ठ्यां प्रवेष्टुं नोचितमिति आचारपर्य्यालोचनया अपकृष्टः निवर्त्तितान्तःपुरप्रवेशः सन् एकान्तमाश्रित्य रामकोपसमन्वितः रामकार्य्याप्रवृत्तिदर्शनजकोपेन समन्वितस्तस्थौ॥ २७॥ २८॥ २९॥

समाख्यातः बोधितलक्ष्मणागमनः उपशुष्यत उपाशुष्यत॥ ३०॥ ३१॥

सरोष इव सरोष एव॥ ३२॥

किं पश्यसि कुमारस्य रोषस्थानमनिन्दिते!।
न खल्वकारणे कोपमाहरेन्नरपुङ्गवः ॥ ३३ ॥
यद्यस्य कृतमस्माभिर्बुध्यसे किञ्चिदप्रियम्।
तत् बुध्वा सम्प्रधार्य्याशु क्षिप्रमेवाभिधीयताम् ॥ ३४ ॥
अथवा स्वयमेवैनं द्रष्टुमर्हसि भामिनि!।
वचनैः सान्त्वयुक्तैश्च प्रसादयितुमर्हसि ॥ ३५ ॥
त्वद्दर्शने विशुद्धात्मा न स्म कोपं करिष्यति।
न हि स्त्रीषु महात्मानः क्वचित् कुर्वन्ति दारुणम् ॥ ३६ ॥
त्वया सान्त्वैरुपक्रान्तं प्रसन्नेन्द्रियमानसम्।
ततः कमलपत्राक्षं द्रक्ष्याम्यहमरिन्दमम् ॥ ३७ ॥
सा प्रस्खलन्ती मदविक्लवाक्षी
प्रलम्बकाञ्चीगुणहेमसूत्रा।

रोषस्थानं रोषकारणं ममापराधमित्यर्थः ॥ ३३ ॥
अस्माभिः कृतं यत्किञ्चिदित्यन्वयः ॥ ३४ ॥
निर्निमित्तकोपासम्भवान्निमित्तस्यानिर्णीय स्वस्य समीपगमनमनुचितमिति पक्षान्तरं गृह्णाति। अथवेति। स्वयमेव मां विहायेत्यर्थः ॥ ३५ ॥
विशुद्धात्मा गतक्रोधचित्तः ॥ ३६ ॥
उपक्रान्तम् उपक्रान्तक्षमापनम् ॥ ३७ ॥
प्रस्खलन्ती मदालसतया पदे पदे स्खलन्ती। मदविक्लवाक्षी

सलक्षणा लक्ष्मणसन्निधानं
जगाम तारा नमिताङ्गयष्टिः ॥ ३८ ॥
स तां समीक्ष्यैव हरीशपत्नीं
तस्थावुदासीनतया महात्मा ।
अवाङ्मुखोऽभून्मनुजेन्द्रपुत्रः
स्त्रीसन्निकर्षाद्विनिवृत्तकोपः ॥ ३९ ॥
सा पानयोगाच्च निवृत्तलज्जा
दृष्टिप्रसादाच्च नरेन्द्रसूनोः ।
उवाच तारा प्रणयप्रगल्भं
वाक्यं महार्थं परिसान्त्वरूपम् ॥ ४० ॥
किं कोपमूलं मनुजेन्द्रपुत्र !
कस्ते न सन्तिष्ठति वाङ्निदेशे ।
कः शुष्कवृक्षं वनमापतन्तं
दवाग्निमासीदति निर्विशङ्कः ॥ ४१ ॥

भोगार्थं कृतमधुपानमदेनालसचकितनेत्रा। प्रलम्बे काञ्चीगुणहेमसूत्रे यस्याः काञ्चीगुणा रसना। नमिताङ्गयष्टिः स्तनभारेणेति शेषः ॥ ३८ ॥

हरीशपत्नीं सुग्रीवपत्नीं ताराम् ॥ ३९ ॥

प्रणयप्रगल्भं मैत्रीसमर्थनसमर्थं परिसान्त्वरूपं परितः सान्त्वरूपम्। पतिसान्त्वेति पाठः सुगमः ॥ ४० ॥

स तस्या वचनं श्रुत्वा सान्त्वपूर्व्वमशङ्कितः।
भूयः प्रणयदृष्टार्थं लक्ष्मणो वाक्यमब्रवीत् ॥ ४२ ॥
किमयं कामवृत्तस्ते लुप्तधर्म्मार्थसंग्रहः।
भर्त्ता भर्त्तृहिते युक्ते न चैवमवबुध्यसे ॥ ४३ ॥
न चिन्तयति राज्यार्थं सोऽस्मान् शोकपरायणान्।
सामात्यपरिषत्तारे काममेवोपसेवते ॥ ४४ ॥
स मासांश्चतुरः कृत्वा प्रमाणं प्लवगेश्वरः।
व्यतीतांस्तान् मदोदग्रो विहरन्नावबुध्यते ॥ ४५ ॥
न हि धर्म्मार्थसिध्यर्थं पानमेव प्रशस्यते।
पानादर्थश्च कामश्च धर्म्मश्च परिहीयते ॥ ४६ ॥
धर्म्मलोपो महांस्तावत् कृते ह्यप्रतिकुर्व्वतः।
अर्थलोपश्च मित्रस्य नाशे गुणवतो महान् ॥ ४७ ॥

वाङ्‌निर्देशे अनुशिष्टकार्य्यानुष्ठाने। आपतन्तं दृष्ट्वा तिष्ठन्तम् ॥ ४१ ॥

भूयोऽधिकं प्रणयप्रकाशपूर्वं दृष्टोऽर्थो यस्मिन् तत् ॥ ४२ ॥

अयं ते भर्त्ता लुप्तधर्म्मार्थसंग्रहो वर्त्तते। अर्थोऽत्र मित्ररूपः एनं किं न बुध्यसे ॥ ४३ ॥

लुप्तधर्म्मार्थादित्वमेवाह,—नेति। राज्यार्थं राज्यस्थैर्य्यार्थं सामात्या परिषद्यस्य तादृशो भूत्वेति शेषः ॥ ४४ ॥

विहरन् त्वया क्रीड़न् ॥ ४५ ॥ ४६ ॥

मित्रं ह्यर्थगुणश्रेष्ठं सत्यधर्मपरायणम् ।
तत् द्वयन्तु परित्यक्तं न तु धर्मे व्यवस्थितम् ॥ ४८ ॥
तदेवं प्रस्तुते कार्य्ये कार्य्यमस्माभिरुत्तरम् ।
तत्कार्य्यं कार्य्यतत्त्वज्ञे त्वमुदाहर्त्तुमर्हसि ॥ ४९ ॥

सा तस्य धर्मार्थसमाधियुक्तं
निशम्य वाक्यं मधुरस्वभावम् ।
ताराऽगतार्थे मनुजेन्द्रकार्य्ये
विश्वासयुक्तं तमुवाच भूयः ॥ ५० ॥
न कोपकालः क्षितिपालपुत्र !
न चापि कोपः स्वजने विधेयः ।

पानादर्थादिनाशमुपपादयति । धर्मेति । महान् धर्मलोपः प्रतिज्ञा-हानिरूपः । कृते उपकारेऽप्रतिकुर्वतः प्रत्युपकारमकुर्वतः तावत्प्रथमं ततो गुणवतो मित्रस्य मैत्रीनाशे महानर्थलोपो भवति ॥ ४७ ॥

अर्थगुणश्रेष्ठं मित्रार्थसाधनलक्षणश्रेष्ठगुणवत् सत्यधर्मपरायणम् । एतत् गुणद्वयवन्मित्रं हि प्रसिद्धं तत् द्वयं गुणद्वयमपि तव भर्त्रा परित्यक्तं न तु धर्मे मैत्रीपालनरूपे धर्मे व्यवस्थितम् ॥ ४८ ॥

तत्तस्मादेव सति प्रस्तुते कार्य्ये प्रस्तुतकार्य्यसिद्धिनिमित्तम् इत उत्तरं यदस्माभिः कार्य्यं तत्कार्य्यं उदाहर्त्तुमर्हसि ॥ ४९ ॥

धर्मार्थसमाधियुक्तं तत्सम्बन्धयुक्तम् आगतार्थे भग्नप्रयोजने मनु-जेन्द्रकार्य्ये तद्विषये विश्वासयुक्तं यथा तथा भूयः पुनरुवाच ॥ ५० ॥

त्वदर्थकामस्य जनस्य तस्य
प्रमादमप्यर्हसि वीर! सोढुम् ॥ ५१ ॥
कोपं कथं नाम गुणप्रकृष्टः
कुमार! कुर्य्यादपकृष्टसत्वे ।
कस्त्वद्विधः कोपवशं हि गच्छेत्
सत्वावरुद्धस्तपसः प्रसूतिः ॥ ५२ ॥
जानामि कोपं हरिवीरबन्धो-
र्जानामि कार्य्यस्य च कालसङ्गम् ।
जानामि कार्य्यं त्वयि यत् कृतं न
स्तच्चापि जानामि यदत्र कार्य्यम् ॥ ५३ ॥

न कोपप्रकाशः अर्थस्यानीतत्वादिति भावः। प्रमादं अज्ञातभूत-मपराधं तस्य सोढ़व्यतां समर्थयति ॥ ५१ ॥

कोपं कथं नामेति। अपकृष्टसत्वे हीने सत्वावरुद्धः सहजसत्व-गुणावरुद्धविपरीतव्यापारः। सत्वाविरुद्ध इति पाठे सहजगुणाविरुद्ध-व्यापारः। अतएव तपसः प्रसूतिः ॥ ५२ ॥

जानामि कोपमिति हरिवीरबन्धो रामस्य कोपं कोपनिमित्तं कार्य्यस्य कालसङ्गं विलम्बञ्च जानामि। त्वयि यदायत्तं नः कार्य्यं राज्यदानलक्षणं त्वया कृतं तदपि जानामि। यदत्र विषये कार्य्यं प्रतिकर्त्तव्यरूपं तदपि जानामि ॥ ५३ ॥

तच्चापि जानामि तथाऽविषह्यं
बलं नरश्रेष्ठ ! शरीरजस्य ।
जानामि यस्मिंश्च जनेऽवबद्धं
कामेन सुग्रीवमसक्तमद्य ॥ ५४ ॥
न कामतन्त्रे तव बुद्धिरस्ति
त्वं वै यथा मन्युवशं प्रपन्नः ।
न देशकालौ हि यथार्थधर्मौ
अवेक्षते कामरतिर्मनुष्यः ॥ ५५ ॥
तं कामवृत्तं मम सन्निकृष्टं
कामाभियोगाच्च विमुक्तलज्जम् ।

तव कोपस्यायुक्तत्वे हेतुमपि जानामीत्याह,—तच्चापीति । शरीरजस्य कामस्य तथाऽविषह्यं बलं तच्चापि जानामि । एवं सुग्रीवं यस्मिन् जने स्त्रीजने कामेनावबद्धं सम्भावयसि तच्च जानामि । तथाप्यन्यत्र कार्येऽसक्तम् अव्यापारञ्च जानामि ॥ ५४ ॥

नन्वेवं सति मम कोपस्यायुक्तता कथमत आह,—नेति । यथा त्वं वै निश्चयेन मन्युवशं प्रपन्नो दृश्यते तथा जानामि । कामतन्त्रे कामस्वभावपरिज्ञाने तव बुद्धिर्नास्ति चिरकालं स्त्रीसङ्गाभावादिति भावः । तमेव कामस्वभावमाह,—नेति । हि प्रसिद्धं यथा देशकालौ भोगायोग्यौ न जानाति तथार्थधर्मावपि नावेक्षते । मनुष्य इति । मनुष्योऽपि न जानाति किमुत तिर्यग्जन्तुरिति भावः ॥ ५५ ॥

क्षमस्व तावत् परवीरहन्तः
त्वद्भ्रातरं वानरवंशनाथम् ॥ ५६ ॥
महर्षयो धर्मतपोऽभिरामाः
कामानुकामाः प्रतिबद्धमोहाः।
अयं प्रकृत्या चपलः कपिस्तु
कथं न सज्जेत सुखेषु राजा ॥ ५७ ॥
इत्येवमुक्त्वा वचनं महार्थं
सा वानरी लक्ष्मणमप्रमेयम्।
पुनः सखेदं मदविह्वलाक्षी
भर्त्तुर्हितं वाक्यमिदं बभाषे ॥ ५८ ॥
उद्योगस्तु चिराज्ञप्तः सुग्रीवेण नरोत्तम !।
कामस्यापि विधेयेन तवार्थप्रतिसाधने ॥ ५९ ॥

मम सन्निकृष्टं स्वभार्य्यायाः मम समीपे कामवशाद्वर्त्तमानम्। कामाभियोगः कामावेशः क्षमस्वेति। परवशप्रवृत्तापराधत्वात् स्वभ्रातृत्वाच्च क्षमैवात्र योग्या न तु कोप इत्याशयः ॥ ५६ ॥

कामवशत्वं नास्यैवेत्याह,—महर्षय इति। कामे कामभोगे अनुकामोऽभिलाषो येषां ते अतएव स्त्रीषु प्रतिबद्धमोहाः। कपिस्त्वपि राजा ॥ ५७ ॥

भर्त्तुर्हितमुद्दिश्येति शेषः ॥ ५८ ॥

चिराज्ञप्तः त्वदागमनात् पूर्वमेवेति शेषः ॥ ५९ ॥

आगता हि महावीर्य्या हरयः कामरूपिणः ।
कोटीः शतसहस्राणि नानानगनिवासिनः ॥ ६० ॥
तदागच्छ महाबाहो ! चारित्रं रक्षितं त्वया ।
अच्छलं मित्रभावेन सतां दारावलोकनम् ॥ ६१ ॥
तारया चाप्यनुज्ञातः त्वरया वापि चोदितः ।
प्रविवेश महाबाहुरभ्यन्तरमरिन्दमः ॥ ६२ ॥
ततः सुग्रीवमासीनं काञ्चने परमासने ।
महार्हास्तरणोपेते ददर्शादित्यसन्निभम् ॥ ६३ ॥
दिव्याभरणचित्राङ्गं दिव्यरूपं यशस्विनम् ।
दिव्यमाल्याम्बरधरं महेन्द्रमिव दुर्जयम् ॥ ६४ ॥
दिव्याभरणमालाभिः प्रमदाभिः समन्ततः ।
संरब्धतररक्ताक्षो बभूवान्तकसन्निभः ॥ ६५ ॥

कामविधेयस्योद्योगाज्ञापि न विश्वसनीयेत्यत आह,—आगता इति । कोटीः शतेत्यस्य बहुत्वे तात्पर्य्यम् ॥ ६० ॥

चारित्रं रक्षितं त्रुटित्यन्तःपुरागमनेन । अच्छलं छलमधर्मः स नेत्यर्थः । मित्रभावेन न तु विकारेण ॥ ६१ ॥

त्वरया रामाज्ञाकरणत्वरया ॥ ६२ ॥ ६३ ॥ ६४ ॥

प्रमदाभिः समं ददर्शेत्यन्वयः । ततः संरब्धतररक्ताक्षो बभूवेत्यन्वयः ॥ ६५ ॥

रमान्तु वीरः परिरभ्य गाढं
वरासनस्थो वरहेमवर्णः ।
ददर्श सौमित्रिमदीनसत्त्वं
विशालनेत्रः स विशालनेत्रम् ॥ ६६ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

परिरभ्यावस्थित एव सन् ददर्शेत्यन्वयः ॥ ६६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

# चतुस्त्रिंशः सर्गः ।



तमप्रतिहतं क्रुद्धं प्रविष्टं पुरुषर्षभम् ।
सुग्रीवो लक्ष्मणं दृष्ट्वा बभूव व्यथितेन्द्रियः ॥ १ ॥
क्रुद्धं निश्वसमानन्तं प्रदीप्तमिव तेजसा ।
भ्रातुर्व्यसनसन्तप्तं दृष्ट्वा दशरथात्मजम् ॥ २ ॥
उत्पपात हरिश्रेष्ठो हित्वा सौवर्णमासनम् ।
महान्महेन्द्रस्य यथा स्वलङ्कृत इव ध्वजः ॥ ३ ॥
उत्पतन्तमनूत्पेतू रुमाप्रभृतयः स्त्रियः ।
सुग्रीवं गगने पूर्णं चन्द्रतारागणा इव ॥ ४ ॥
संरक्तनयनः श्रीमान् सञ्चचार कृताञ्जलिः ।
बभूवावस्थितस्तत्र कल्पवृक्षो महानिव ॥ ५ ॥
रुमाद्वितीयं सुग्रीवं नारीमध्यगतं स्थितम् ।
अब्रवील्लक्ष्मणः क्रुद्धः सतारं शशिनं यथा ॥ ६ ॥

तमिति । अप्रतिहतं केनाप्यप्रतिबद्धम् ॥ १ ॥ २ ॥

महान् महेन्द्रध्वजो यथालङ्कृतः ॥ ३ ॥

अनूत्पेतुः पश्चादुत्थितवत्यः ॥ ४ ॥

सञ्चचार सम्मुखमाजगाम । अवस्थितो बभूवेत्यस्य लक्ष्मणा इति शेषः । कल्पवृक्षोपमया सर्वहितत्वं व्यञ्जितम् ॥ ५ ॥

सत्वाभिजनसम्पन्नः सानुक्रोशो जितेन्द्रियः।
कृतज्ञः सत्यवादी च राजा लोके महीयते॥ ७॥
यस्तु राजा स्थितोऽधर्मे मित्राणामुपकारिणाम्।
मिथ्याप्रतिज्ञां कुरुते को नृशंसतरस्ततः॥ ८॥
शतमश्वानृते हन्ति सहस्रन्तु गवानृते।
आत्मानं स्वजनं हन्ति पुरुषः पुरुषानृते॥ ९॥
पूर्वं कृतार्थो मित्राणां न तत्प्रतिकरोति यः।
कृतघ्नः सर्वभूतानां स वध्यः प्लवगेश्वर!॥ १०॥
गीतोऽयं ब्रह्मणा श्लोकः सर्वलोकनमस्कृतः।
दृष्ट्वा कृतघ्नं क्रुद्धेन तन्निबोध प्लवङ्गम!॥ ११॥

सतारं शशिनमिव स्थितम्॥ ६॥

सत्वाभिजनाभ्यां सम्पन्नः। तल्लक्षणानि सानुक्रोशत्वादीनि॥ ७॥

अधर्मे स्थित इत्यन्वयः अधर्ममार्गस्थः। नृशंसतरः क्रूरतरः॥ ८॥

प्रकृतोपयुक्तमसत्यदोषमाह,—शतमिति। एकाश्वनिमित्तकेऽनृते दानादिप्रतिज्ञाविघाते सति सोऽनृतवाक् शतं हन्ति शताश्वहननदोषभाक्। गोविषयानृते गोसहस्रहननभाक्। एवं पुरुषानृते पुरुषविषयकिञ्चित्प्रतिज्ञाहानौ स पुरुषः प्रथममात्मानं हन्ति। आत्मघातदोषभाक् निजं पुण्यलोकं नाशयति वा। तथा स्वजनस्य पित्रादेः पुण्यलोकञ्च नाशयति॥ ९॥

अथ कृतघ्नदोषमाह,—पूर्वमिति। कृतार्थो मित्रैरिति शेषः। सर्वभूतानां सर्वलोकानां वध्यः सर्वलोकबहिष्कार्य्य इत्यर्थः॥ १०॥

गोघ्ने चैव सुरापे च चौरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ १२ ॥
अनार्य्यस्त्वं कृतघ्नश्च मिथ्यावादी च वानर ! ।
पूर्वं कृतार्थो रामस्य न तत्प्रतिकरोषि यत् ॥ १३ ॥
ननु नाम कृतार्थेन त्वया रामस्य वानर ! ।
सीताया मार्गणे यत्नः कर्त्तव्यः कृतमिच्छता ॥ १४ ॥
स त्वं ग्राम्येषु भोगेषु सक्तो मिथ्याप्रतिश्रवः ।
न त्वां रामो विजानीते सर्पं मण्डूकराविणम् ॥ १५ ॥

नायमर्थः स्वकल्पनामात्रकल्पित इत्याह,—गीत इति । ब्रह्मणा हिरण्यगर्भेण अयं श्लोकः पूर्वोक्तः सर्वलोकनमस्कृतः ब्रह्मवदेव सर्वस्मर्तृसम्मत इत्यर्थः । अथ रामवचनमाह,—त्वां प्राप्य दृष्ट्वा क्रुद्धेन रामेण यदुक्तं तच्छृणु ॥ ११ ॥

किं तत्तत्राह,—गोघ्नेति ॥ १२ ॥

कुतोऽहं कृतघ्नस्तत्राह,—पूर्वमिति ॥ १३ ॥

मिथ्यावादित्वं दर्शयति । यत्नः प्राक्प्रतिज्ञातः । कृतमिच्छता कृतस्य प्रतिकृतं कर्तुमिच्छता ॥ १४ ॥

मण्डूकराविणं स्वगृहीतमुखस्थमण्डूकशब्देन शब्दवन्तं सर्पं यथा जनोऽनवलोकनात् मण्डूकमेव जानीते न तु सर्पं तथा तव स्वरूपं रामो नाज्ञासीदिति भावः । कश्चित्तु मण्डूकग्रहणार्थं सर्पो मण्डूकवद्रौति तेन स्वरेण स्वगण इति विस्रब्धः स्वसमीपमागतो मण्डूकस्तेन गृह्यते एवं वञ्चकं त्वां नाज्ञासीदित्यर्थं इत्याह,—तत्तु तथा लोके अप्रसिद्धोपेक्ष्यम् ॥ १५ ॥

महाभागेन रामेण पापः करुणवेदिना।
हरीणां प्रापितो राज्यं त्वं दुरात्मा महात्मना ॥ १६ ॥
कृतघ्नन्नाभिजानीषे राघवस्य महात्मनः।
सद्यस्त्वं निशितैर्बाणैर्हतो द्रक्ष्यसि वालिनम् ॥ १७ ॥
न स सङ्कुचितः पन्था येन वाली हतो गतः।
समये तिष्ठ सुग्रीव! मा वालिपथमन्वगाः ॥ १८ ॥
न नूनमिक्ष्वाकुवरस्य कार्मुका:
शरांश्च तान् पश्यसि वज्रसन्निभान्।
ततः सुखं नाम निषेवसे सुखी
न रामकार्य्यं मनसाप्यवेक्षसे ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
चतुस्त्रिंशः सर्गः ॥ ३४ ॥

पापस्त्वमित्यन्वयः ॥ १६ ॥ १७ ॥ १८ ॥

शरान्नूनं न पश्यसि। यतो ग्राम्यसुखं निषेवसे तेन च सुखी सन् रामकार्य्यं मनसापि नावेक्षसे ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे चतुस्त्रिंशः सर्गः ॥ ४४ ॥

---

# पञ्चत्रिंशः सर्गः ।



तथा ब्रुवाणं सौमित्रिं प्रदीप्तमिव तेजसा ।
अब्रवील्लक्ष्मणं तारा ताराधिपनिभानना ॥ १ ॥
नैवं लक्ष्मण ! वक्तव्यो नायं परुषमर्हति ।
हरीणामीश्वरः श्रोतुं तव वक्त्राद्विशेषतः ॥ २ ॥
नैवाकृतज्ञः सुग्रीवो न शठो नापि दारुणः ।
नैवाऽनृतकथो वीर ! न जिह्मश्च कपीश्वरः ॥ ३ ॥
उपकारं कृतं वीरो नाप्ययं विस्मृतः कपिः ।
रामेण वीर ! सुग्रीवो यदन्यैर्दुष्करं रणे ॥ ४ ॥
रामप्रसादात् कीर्त्तिञ्च कपिराज्यञ्च शाश्वतम् ।
प्राप्तवानिह सुग्रीवो रुमां माञ्च परन्तप ! ॥ ५ ॥
सुदुःखशयितः पूर्वं प्राप्येदं सुखमुत्तमम् ।
प्राप्तकालं न जानीते विश्वामित्रो यथा मुनिः ॥ ६ ॥

तवेति । तव सुहृदो वक्त्रात् मुखादित्यर्थः ॥ १ ॥ २ ॥
नार्हतीत्यत्र हेतुर्नैवेत्यादि । अनृतकथोऽनृतवाक् ॥ ३ ॥ ४ ॥ ५ ॥
यदि न कृतघ्नः कथं तर्हि कालात्ययानभिज्ञस्तत्राह,—सुदुःखेति ।
सुतरामनुभूतदुःखः प्राप्तकालम् अवश्यं कर्त्तव्यम् ॥ ६ ॥

घृताच्यां किल संसक्तो दशवर्षाणि लक्ष्मण!।
अहो मन्यत धर्मात्मा विश्वामित्रो महामुनिः॥ ७॥
स हि प्राप्तं न जानीते कालं कालविदां वरः।
विश्वामित्रो महातेजाः किं पुनर्यः पृथक् जनः॥ ८॥
देहधर्मगतस्यास्य परिश्रान्तस्य लक्ष्मण!।
अवितृप्तस्य कामेषु रामः क्षन्तुमिहार्हति॥ ९॥
न च रोषवशं तात! गन्तुमर्हसि लक्ष्मण!।
निश्चयार्थमविज्ञाय सहसा प्राकृतो यथा॥ १०॥
सत्त्वयुक्ता हि पुरुषास्त्वद्विधाः पुरुषर्षभ!।
अविमृश्य न रोषस्य सहसा यान्ति वश्यताम्॥ ११॥
प्रसादये त्वां धर्मज्ञ! सुग्रीवार्थं समाहिता।
महान् रोषसमुत्पन्नः संरम्भस्त्यज्यतामयम्॥ १२॥
रुमां माञ्चाङ्गदं राज्यं धनधान्यपशूनि च।
रामप्रियार्थं सुग्रीवः त्यजेदिति मतिर्मम॥ १३॥
समानेष्यति सुग्रीवः सीतया सह राघवम्।

घृताच्यामिति। अहः दिनम्। यद्यपि पूर्वं बालकाण्डे मेनकासम्बन्ध-उक्तस्तथाप्येतद्वचनात् घृताचीसम्बन्धोऽपि तस्य ज्ञेयइत्याहुः॥ ७॥ ८॥

देहधर्मः आहारनिद्रामैथुनानि। पशुधर्मेति पाठेपि अय-मेवार्थः॥ ९॥

निश्चयार्थं कर्त्तव्यार्थनिश्चयम्॥ १०॥ ११॥

शशाङ्कमिव रोहिण्या हत्वा तं राक्षसाधमम् ॥ १४ ॥
शतकोटिसहस्राणि लङ्कायां किल रक्षसाम्।
अयुतानि च षट्त्रिंशत् सहस्राणि शतानि च ॥ १५ ॥
अहत्वा तांश्च दुर्धर्षान् राक्षसान् कामरूपिणः।
अशक्यं रावणं हन्तुं येन सा मैथिली हृता ॥ १६ ॥
ते न शक्या रणे हन्तुमसहायेन लक्ष्मण !।
रावणः क्रूरकर्मा च सुग्रीवेण विशेषतः ॥ १७ ॥
एवमाख्यातवान् वाली स ह्यभिज्ञो हरीश्वरः।

रोषेण समुत्पन्नः संरम्भः क्षोभः ॥ १२ ॥ १३ ॥ १४ ॥

कथमयं रावणं हनिष्यतीत्यत्र तत्सहायकसाध्यत्वात्तद्वधस्येत्याह,— शतेति। एषा संख्या विवक्षितैव। दशकोटिः समुद्रः शतकोटि-मध्यं मध्यानां सहस्रं तथा षष्टिसहस्राधिकत्रिलक्षाणि तदुपरि षट्-त्रिंशत्सहस्राणि तदुपरि तावन्ति शतानीत्यर्थः ॥ १५ ॥ १६ ॥

तावतांवधे परमशूरस्यापि सहायापेक्षास्तीत्याह,— ते इति। यस्मात् असहायेन रामेण ते हन्तुमशक्या यस्माद्रावणश्च क्रूरकर्मा क्रूरपराक्रमः तस्माद्विशेषतः सुग्रीवेण सहायेन प्रयोजनमस्ति। तत्सम-प्रतिमेनाघटनस्य सुग्रीवाधीनत्वात्सर्वेषां मनुष्यावध्यत्वाच्चेति भावः। यत्तु तीर्थः। सुग्रीवेण सहायेन ते राक्षसा हन्तुमशक्या रावणश्च हन्तुमशक्य इत्यन्वयं कृत्वा वाली किलोक्तवान् रावणवधाय सुग्रीवं वृथा प्रार्थयते रामस्तस्यासावशक्य इति कथाञ्च कल्पयति तदपार्थकम्। रामस्य सहायापेक्षासमर्थनस्यैव प्रस्तुतत्वात् ॥ १७ ॥

आगमस्तु न मे व्यक्तः श्रवात्तस्य ब्रवीम्यहम् ॥ १८ ॥
त्वत्सहायनिमित्तं हि प्रेषिता हरिपुङ्गवाः।
आनेतुं वानरान् युद्धे सुबहून् हरिपुङ्गवान् ॥ १९ ॥
तांश्च प्रतीक्षमाणोऽयं विक्रान्तान् सुमहाबलान्।
राघवस्यार्थसिद्ध्यर्थं न निर्य्याति हरीश्वरः ॥ २० ॥
कृता सुसंस्था सौमित्रे! सुग्रीवेण पुरा यथा।
अद्य तैर्वानरैः सर्वैरागन्तव्यं महाबल: ॥ २१ ॥
ऋक्षकोटिसहस्राणि गोलाङ्गूलशतानि च।
अद्य त्वामुपयास्यन्ति जहि कोपमरिन्दम!।
कोट्योऽनेकास्तु काकुत्स्थ! कपीनां दीप्ततेजसाम् ॥ २२ ॥

नन्वेषा रक्षः संख्या त्वया कथं ज्ञाता तत्राह,—एवमिति। आगमस्तु न मे व्यक्तः रावणस्यैवं बलप्राप्तिप्रकारस्तु न मया ज्ञातः। संख्यामात्रं प्रसङ्गात् पूर्वं श्रुतम्। तस्य श्रवात्तन्मुखतो वाक्यश्रवणात् ॥ १८ ॥

ननु सहायसम्पत्ति प्रवृत्तेरस्मिन्नदर्शनात् कोपो नस्तत्राह,—त्वदिति ॥ १९ ॥

राघवार्थं तान् प्रतीक्षमाणस्तिष्ठति अतएवेदानीं न निर्य्याति ॥२०॥

ते तर्हि कदा आगमिष्यन्ति तत्राह, कृतेति सुसंस्था शोभना आगमनकालमर्य्यादा पुरा पूर्वं दूतप्रेषणसमये यथा कृता तथा तैः सर्वैरद्यागन्तव्यम् ॥ २१ ॥

रक्ष सेनापेक्षया स्वसेनाधिक्यमाह,—ऋक्षेति। शतकोटिमध्य

तव हि मुखमिदं निरीक्ष्य कोपात्
क्षतजसम नयने निरीक्षमाणाः।
हरिवरवनिता न यान्ति शान्तिं
प्रथमभयस्य हि शङ्किता स्म सर्वाः॥ २३॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
पञ्चत्रिंशः सर्गः॥ ३५॥

लक्षगुणात्मिका सहस्रकोटिः तत्संख्याः ऋक्षाः गोलाङ्गूलानां शतानि च शतकोटिः अन्ये कपयोऽनेकाः कोटयः असंख्या इत्यर्थः॥ २२॥

प्रथमभयस्य तत्सदृशभयस्य वालिबधवत् सुग्रीवबधभयस्य यथार्थो॥ २३॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे पञ्चत्रिंशः सर्गः॥ ३५॥

---

## षट्त्रिंशः सर्गः ।



इत्युक्तस्तारया वाक्यं प्रश्रितं धर्म्मसंहितम् ।
मृदुस्वभावः सौमित्रिः प्रतिजग्राह तद्वचः ॥ १ ॥
तस्मिन् प्रतिगृहीते तु वाक्ये हरिगणेश्वरः ।
लक्ष्मणात् सुमहत्त्रासं वस्त्रं क्लिन्नमिवात्यजत् ॥ २ ॥
ततः कण्ठगतं माल्यं चित्रं बहुगुणं महत् ।
चिच्छेद विमदश्चासीत् सुग्रीवो वानरेश्वरः ॥ ३ ॥
स लक्ष्मणं भीमबलं सर्व्ववानरसत्तमः ।
अब्रवीत् प्रश्रितं वाक्यं सुग्रीवः सम्प्रहर्षयन् ॥ ४ ॥
प्रनष्टा श्रीश्च कीर्त्तिश्च कपिराज्यञ्च शाश्वतम् ।
रामप्रसादात् सौमित्रे ! पुनश्चाप्तमिदं मया ॥ ५ ॥
कः शक्तस्तस्य देवस्य ख्यातस्य स्वेन कर्म्मणा ।

इतीति ॥ १ ॥

तस्मिन् तारानुनयवाक्ये ॥ २ ॥

माल्यं मालां बहुगुणां बहुविधकाममदकरम् अतएव तच्छेदफलं विमदश्चासीदिति ॥ ३ ॥

लक्ष्मणं संप्रहर्षयन्नित्यन्वयः ॥ ४ ॥ ५ ॥

तादृशं प्रतिकुर्व्वीत अंशेनापि नृपात्मज ! ॥ ६ ॥
सीतां प्राप्स्यति धर्मात्मा बधिष्यति च रावणम् ।
सहायमात्रेण मया राघवः स्वेन तेजसा ॥ ७ ॥
सहायकृत्यं किं तस्य येन सप्त महाद्रुमाः ।
गिरिश्च वसुधा चैव बाणेनैकेन दारिताः ॥ ८ ॥
धनुर्विस्फारयाणस्य यस्य शब्देन लक्ष्मण ! ।
सशैला कम्पिता भूमिः सहायैः किन्नु तस्य वै ॥ ९ ॥
अनुयात्रां नरेन्द्रस्य करिष्येऽहं नरर्षभ ! ।
गच्छतो रावणं हन्तुं वैरिणं सपुरःसरम् ॥ १० ॥
यदि किञ्चिदतिक्रान्तं विश्वासात् प्रणयेन वा ।
प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति ॥ ११ ॥

शक्तः समर्थः तस्य देवावतारस्य । स्वेन कर्मणा धनुर्भङ्गवालिबधादिना ख्यातस्य । तादृशं तज्जनितोपकारसदृशम् ॥ ६ ॥

सहायमात्रेण उपलक्षितं स्वयमेवार्थनिर्वाहकोऽहन्तु परिकरमात्रमित्यर्थः ॥ ७ ॥

सहायकृत्यं सहायसाध्यं कृत्यञ्चेन पातालानि ततस्यदैत्याश्च ॥ ८ ॥ ९ ॥

अनुयात्रां पश्चाद्गमनम् । सपुरःसरं युद्धाग्रे पुरःसरैः सहितं रावणम् ॥ १० ॥

विश्वासादयं न क्रूरो मित्र इति विश्वासात् प्रणयेन वा यदि किञ्चिदतिक्रान्तम् अपराधं तदुक्तहेतुभ्यां प्रेष्यस्य दासस्य क्षमितव्यं

इति तस्य ब्रुवाणस्य सुग्रीवस्य महात्मनः।
अभवल्लक्ष्मणः प्रीतः प्रेम्णा चेदमुवाच ह ॥ १२ ॥
सर्वथा हि मम भ्राता सनाथो वानरेश्वर !।
त्वया नाथेन सुग्रीव ! प्रश्रितेन विशेषतः ॥ १३ ॥
यस्ते प्रभावः सुग्रीव ! यच्च ते शौचमीदृशम्।
अर्हस्त्वं कपिराज्यस्य श्रियं भोक्तुमनुत्तमाम् ॥ १४ ॥
सहायेन तु सुग्रीव ! त्वया रामः प्रतापवान्।
वधिष्यति रणे शत्रूनचिरान्नात्र संशयः ॥ १५ ॥
धर्मज्ञस्य कृतज्ञस्य संग्रामेष्वनिवर्त्तिनः।
उपपन्नञ्च युक्तञ्च सुग्रीव ! तव भाषितम् ॥ १६ ॥
दोषज्ञः प्रतिसामर्थ्ये कोऽन्यो भाषितुमर्हति।
वर्ज्जयित्वा मम ज्येष्ठं त्वाञ्च वानरसत्तम ! ॥ १७ ॥
सदृशश्चासि रामेण विक्रमेण बलेन च।
सहायो दैवतैर्दत्तश्चिराय हरिपुङ्गव ! ॥ १८ ॥

क्षन्तव्यं यस्माद्यो दासो नापराध्यति तादृशदासासम्भवः स्वामिचित्तानुवर्त्तनस्य सर्वथाऽसम्भवात् ॥ ११ ॥ १२ ॥ १३ ॥

शौचमिन्द्रियनिग्रहः ॥ १४ ॥ १५ ॥

उपपन्नं योग्यम्। युक्तं युक्तियुक्तम् ॥ १६ ॥

दोषज्ञो विद्वान् को रामसुग्रीवाभ्यामन्यो भवद्वाक्यसदृशं वाक्यं वक्तुमर्हति ॥ १७ ॥ १८ ॥

किन्तु शीघ्रमितो वीर ! निष्क्रम त्वं मया सह ।
सान्त्वयस्व वयस्यश्च भार्य्याहरणदुःखितम् ॥ १९ ॥
यच्च शोकाभिभूतस्य दृष्ट्वा रामस्य भाषितम् ।
मया त्वं परुषाण्युक्तस्तत् क्षमस्व सखे ! मम ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
षट्त्रिंशः सर्गः ॥ ३६ ॥

वयस्यं रामम् ॥ १९ ॥

स्वोक्तवाक्यानां रामोक्तत्वशङ्काव्यावृत्तये स्वोक्तिलमेव बोधयन् स्वापराधं क्षमापयति । यच्चेति । रामभाषितं सीतावियोगज-विलापरूपम् ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

# सप्तत्रिंशः सर्गः ।



एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना ।
हनूमन्तं स्थितं पार्श्वे वचनञ्चेदमब्रवीत् ॥ १ ॥
महेन्द्रहिमवद्विन्ध्यकैलासशिखरेषु च ।
मन्दरे पाण्डुशिखरे पञ्चशैलेषु ये स्थिताः ॥ २ ॥
तरुणादित्यवर्णेषु भ्राजमानेषु नित्यशः ।
पर्व्वतेषु समुद्रान्ते पश्चिमस्यान्तु ये दिशि ॥ ३ ॥
आदित्यभवने चैव गिरौ सन्ध्याभ्रसन्निभे ।
पद्माचलवनं भीमाः संश्रिता हरिपुङ्गवाः ॥ ४ ॥
अञ्जनाम्बुदसङ्काशाः कुञ्जरेन्द्रमहौजसः ।
अञ्जने पर्व्वते चैव ये वसन्ति प्लवङ्गमाः ॥ ५ ॥

अथ सुग्रीवेणापरिमितदूतप्रेषणमनेककोटिनिजसेनासम्मेलनम् एवमिति ॥ १ ॥ २ ॥

पर्वतेषु उक्तातिरिक्तेषु तथा पश्चिमस्यान्तु ये दिशि पश्चिमस्यामित्यार्षम् ॥ ३ ॥

आदित्यभवने गिरौ ये स्थिताः उदयाचलास्ताचलयोरित्यर्थः । पद्माचलो गिरिविशेषः ॥ ४ ॥ ५ ॥

महाशैलगुहावासा वानराः कनकप्रभाः ।
मेरुपार्श्वगताश्चैव ये च धूम्रगिरिं श्रिताः ॥ ६ ॥
तरुणादित्यवर्णाश्च पर्व्वते ये महारुणे ।
पिबन्तो मधुमैरेयं भीमवेगाः प्लवङ्गमाः ॥ ७ ॥
वनेषु च सुरम्येषु सुगन्धिषु महत्सु च ।
तापसाश्रमरम्येषु वनान्तेषु समन्ततः ॥ ८ ॥
तांस्तांस्त्वमानय क्षिप्रं पृथिव्यां सर्व्ववानरान् ।
सामदानादिभिः कल्पैर्वानरैर्वेगवत्तरैः ॥ ९ ॥
प्रेषिता प्रथमं ये च मया ज्ञाता महाजवाः ।
त्वरणार्थन्तु भूयस्त्वं सम्प्रेषय हरीश्वरान् ॥ १० ॥
ये प्रसक्ताश्च कामेषु दीर्घसूत्राश्च वानराः ।

महाशैलस्तदाख्यपर्वतः ॥ ६ ॥ ७ ॥

तापसाश्रमरम्येषु रम्यतापसाश्रमेषु यद्वा तै रम्येष्विति वनविशेषणम् ॥ ८ ॥

क्षिप्रमानयेत्युक्ते मयैव गन्तव्यमित्याशङ्क्याह,—सामदानादिभिः कल्पैर्वानरैर्वेगवत्तरैरित्यादिना दुष्टे दण्डः । कल्परूपैः आनयेत्यस्य चानाययेत्यर्थ इति कतकः ॥ ९ ॥

ननु प्रेषिता एव पूर्वं दूता इत्यत्राह,—प्रेषिता इति । प्रथमं पूर्वं ये महाजवा दूताः प्रेषितास्ते मया ज्ञाता एव तथापि तेषां त्वरणार्थम् अपरान् हरीश्वरान् प्रेषय ॥ १० ॥

दूतानयस्व तान् शीघ्रं सर्वानेव कपीश्वरान् ॥ ११ ॥
अहोभिर्दशभिर्ये च नागच्छन्ति ममाज्ञया।
हन्तव्यास्ते दुरात्मानो राजशासनदूषकाः ॥ १२ ॥
शतान्यथ सहस्राणि कोव्यश्च मम शासनात्।
प्रयान्तु कपिसिंहानां निदेशे मम ये स्थिताः ॥ १३ ॥
मेघपर्व्वतसङ्काशाश्छादयन्त इवाम्बरम्।
घोररूपाः कपिश्रेष्ठा यान्तु मच्छासनादितः ॥ १४ ॥
ते गतिज्ञा गतिं गत्वा पृथिव्यां सर्व्ववानराः।
आनयन्तु हरीन् सर्व्वांस्त्वरिताः शासनान् मम ॥ १५ ॥
तस्य वानरराजस्य श्रुत्वा वायुसुतो वचः।
दिक्षु सर्व्वासु विक्रान्तान् प्रेषयामास वानरान् ॥ १६ ॥
ते पदं विष्णुविक्रान्तं पतत्रिज्योतिरध्वगाः।
प्रयाताः प्रहिता राज्ञा हरयस्तु क्षणेन वै ॥ १७ ॥
ते समुद्रेषु गिरिषु वनेषु च सरःसु च।

कामेषु तद्भोगेषु प्रसक्ता ये च दीर्घसूत्रा विलम्बितव्यापाराः। आनयस्व आनायय ॥ ११ ॥

ये दूताः ॥ १२ ॥

प्रेषणीयदूतसंख्यामाह,—शतानीति। एतेन दूतानन्त्यमुक्तम् ॥ १३॥

तदेव स्पष्टयति छादयन्त इवाम्बरमिति ॥ १४ ॥

गतिं गत्वा वेगवत्तरां गतिं गत्वा ॥ १५। १६ ॥

वानरा वानरान् सर्व्वान् रामहेतोरचोदयन् ॥ १८ ॥
मृत्युकालोपमस्याज्ञां राजराजस्य वानराः ।
सुग्रीवस्याययुः श्रुत्वा सुग्रीवभयशङ्किताः ॥ १९ ॥
ततस्तेऽञ्जनसंकाशा गिरेस्तस्मान् महाबलाः ।
तिस्रः कोट्यः प्लवङ्गानां निर्ययुर्यत्र राघवः ॥ २० ॥
अस्तं गच्छति यत्रार्कस्तस्मिन् गिरिवरे रताः ।
सन्तप्तहेमवर्णाभास्तस्मात् कोट्यो दश च्युताः ॥ २१ ॥
कैलासशिखरेभ्यश्च सिंहकेसरवर्चसाम् ।
ततः कोटिसहस्राणि वानराणां समागमन् ॥ २२ ॥
फलमूलेन जीवन्तो हिमवन्तमुपाश्रिताः ।
तेषां कोटिसहस्राणां सहस्रं समवर्त्तत ॥ २३ ॥
अङ्गारकसमानानां भीमानां भीमकर्म्मणाम् ।
विन्ध्याद्वानरकोटीनां सहस्राण्यपतन् द्रुतम् ॥ २४ ॥
क्षीरोदवेलानिलयास्तमालवनवासिनः ।
नारिकेलाशनाश्चैव तेषां संख्या न विद्यते ॥ २५ ॥
वनेभ्यो गह्वरेभ्यश्च सरिद्भ्यश्च महाबलाः ।

विष्णुक्रान्तं पदमाकाशम् । पतन्ति ज्योतिरध्वगाः पक्षिणां नक्षत्राणाञ्च मार्गगाः ॥ १७ ॥ १८ ॥

मृत्युकालोपमस्य निग्रहविषये इति शेषः ॥ १९ ॥

तस्माद्गिरे रञ्जनगिरेः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

आगच्छद्वानरी सेना पिबन्तीव दिवाकरम् ॥ २६ ॥
ये तु त्वरयितुं याता वानराः सर्व्ववानरान्।
ते वीरा हिमवच्छैले ददृशुस्तं महाद्रुमम् ॥ २७ ॥
तस्मिन् गिरिवरे पुण्ये यज्ञो माहेश्वरः पुरा।
सर्व्वदेवमनस्तोषो बभूव सुमनोरमः ॥ २८ ॥
अन्ननिष्यन्दजातानि मूलानि च फलानि च।
अमृतस्वादुकल्पानि ददृशुस्तत्र वानराः ॥ २९ ॥
तदन्नसम्भवं दिव्यं फलमूलं मनोहरम्।
यः कश्चित्सकृदश्नाति मासम्भवति तर्पितः ॥ ३० ॥
तानि मूलानि दिव्यानि फलानि च फलाशनाः।
औषधानि च दिव्यानि जगृहुर्हरिपुङ्गवाः ॥ ३१ ॥
तस्माच्च यज्ञायतनात् पुष्पाणि सुरभीणि च।
आनिन्युर्वानरा गत्वा सुग्रीवप्रियकारणात् ॥ ३२ ॥

असंख्यबलमित्याह,—तेषां संख्या न विद्यत इति ॥ २५ ॥ २६ ॥

ये च त्वरयितुं याताः हनुमत्प्रेषिताः महाद्रुमम् अतिप्रसिद्ध-भगवद्धामभूतं माहेश्वरयज्ञवाटस्थं ददृशुः। पूर्वं नीलप्रेषितान् दूतांश्च ददृशुरिति शेषः अतस्तेषां तत एव परावृत्तिः ॥ २७ ॥

माहेश्वरो यज्ञः माहेश्वरदेवत्यो दिव्योऽश्वमेध इति कतकः। सर्व्वदेवानां मनस्तोषो यत्र सः ॥ २८ ॥

अन्ननिष्यन्दाद्धोमद्रव्याज्यादिस्रवणाज्जातानि ॥ २९ ॥ ३० ॥

ते तु सर्व्वे हरिवराः पृथिव्यां सर्व्ववानरान् ।
सञ्चोदयित्वा त्वरितं यूथानां जग्मुरग्रतः ॥ ३३ ॥
ते तु तेन मुहूर्त्तेन कपयः शीघ्रचारिणः ।
किष्किन्धां त्वरया प्राप्ताः सुग्रीवो यत्र वानरः ॥ ३४ ॥
ते गृहीत्वौषधीः सर्व्वाः फलमूलञ्च वानराः ।
तं प्रतिग्राहयामासुर्व्वचनञ्चेदमब्रुवन् ॥ ३५ ॥
सर्व्वे परिसृताः शैलाः सरितश्च वनानि च ।
पृथिव्यां वानराः सर्व्वे शासनादुपयान्ति ते ॥ ३६ ॥
एवं श्रुत्वा ततो हृष्टः सुग्रीवः प्लवगाधिपः ।
प्रतिजग्राह च प्रीतस्तेषां सर्व्वमुपायनम् ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
सप्तत्रिंशः सर्गः ॥ ३७ ॥

ओषधानि सञ्जीवन्यादीनि ॥ ३१ ॥ ३२ ॥

ते तु सर्वे दूतरूपाः यूथानामग्रतः सम्प्रेरितबलानामागमनात्पूर्वमित्यर्थः ॥ ३३ ॥ ३४ ॥

ते हनुमत्प्रेषसहिताः नीलप्रेषिताः दूताः ॥ ३५ ॥ ३६ ॥ ३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

## अष्टत्रिंशः सर्गः



प्रतिगृह्य च तत्सर्व्वमुपायनमुपाहृतम् ।
वानरान् सान्त्वयित्वा च सर्व्वानेव विसर्जयत् ॥ १ ॥
विसर्जयित्वा स हरीन् सहस्रान् कृतकर्म्मणः ।
मेने कृतार्थमात्मानं राघवस्य महाबलम् ॥ २ ॥
स लक्ष्मणो भीमबलं सर्व्ववानरसत्तमम् ।
अब्रवीत् प्रश्रितं वाक्यं सुग्रीवं सम्प्रहर्षयन् ॥ ३ ॥
किष्किन्धाया विनिष्क्राम यदि ते सौम्य ! रोचते ।
तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य सुभाषितम् ॥ ४ ॥
सुग्रीवः परमप्रीतो वाक्यमेतदुवाच ह ।
एवं भवतु गच्छाम स्थेयं त्वच्छासने मया ॥ ५ ॥
तमेवमुक्त्वा सुग्रीवो लक्ष्मणं शुभलक्षणम् ।
विसर्जयामास तदा ताराद्याश्चैव योषितः ॥ ६ ॥

प्रतिगृह्येति ॥ १ ॥
राघवस्य कृतार्थमित्यनुषङ्गः ॥ २ ॥ ३ ॥
विनिष्क्राम इति प्रार्थने लोट् ॥ ४ ॥
स्थेयं तत्र हातव्यमित्यर्थः ॥ ५ ॥ ६ ॥

एहीत्युच्चैर्हरिवरान् सुग्रीवः समुदाहरत् ।
तस्य तद्वचनं श्रुत्वा हरयः शीघ्रमाययुः ॥ ७ ॥
बद्धाञ्जलिपुटाः सर्व्वे ये स्युः स्त्रीदर्शनक्षमाः ।
तानुवाच ततः प्राप्तान् राजार्कसदृशप्रभः ॥ ८ ॥
उपस्थापयत क्षिप्रं शिबिकां मम वानराः ।
श्रुत्वा तु वचनं तस्य हरयः शीघ्रविक्रमाः ॥ ९ ॥
समुपस्थापयामासुः शिबिकां प्रियदर्शनाम् ।
तामुपस्थापितां दृष्ट्वा शिबिकां वानराधिपः ॥ १० ॥
लक्ष्मणारुह्यतां शीघ्रमिति सौमित्रिमब्रवीत् ।
इत्युक्त्वा काञ्चनं यान सुग्रीवः सूर्य्यसन्निभम् ॥ ११ ॥
बहुभिर्हरिभिर्युक्तमारुरोह सलक्ष्मणः ।
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥ १२ ॥
शुक्लैश्च वालव्यजनैर्धूयमानैः समन्ततः ।
शङ्खभेरीनिनादैश्च बन्दिभिश्चाभिनन्दितः ॥ १३ ॥
निर्ययौ प्राप्य सुग्रीवो राज्यश्रियमनुत्तमाम् ।
स वानरशतैस्तीक्ष्णैर्बहुभिः शस्त्रपाणिभिः ॥ १४ ॥
परिकीर्णो ययौ तत्र यत्र रामो व्यवस्थितः ।

एहि एतेत्यर्थः ॥ ७ ॥

स्त्रीदर्शनक्षमाः स्त्रीसमूहेऽपि राजदर्शनक्षमा अत्याप्ता इति यावत् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

स तं देशमनुप्राप्य श्रेष्ठं रामनिषेवितम् ॥ १५ ॥
अवातरन् महातेजाः शिबिकायाः सलक्ष्मणः।
आसाद्य च ततो रामं कृताञ्जलिपुटोऽभवत् ॥ १६ ॥
कृताञ्जलौ स्थिते तस्मिन् वानराश्चाभवंस्तथा।
तटाकमिव तं दृष्ट्वा रामः कुड्मलपङ्कजम् ॥ १७ ॥
वानराणां महत्सैन्यं सुग्रीवे प्रीतिमानभूत्।
पादयोः पतितं मूर्ध्ना तमुत्थाप्य हरीश्वरम् ॥ १८ ॥
प्रेम्णा च बहुमानाच्च राघवः परिषस्वजे।
परिष्वज्य च धर्मात्मा निषीदेति ततोऽब्रवीत् ॥ १९ ॥
निषण्णं तं ततो दृष्ट्वा क्षितौ रामोऽब्रवीत्ततः।
धर्ममर्थञ्च कामञ्च काले यस्तु निषेवते ॥ २० ॥
विभज्य सततं वीर! स राजा हरिसत्तम!।
हित्वा धर्मं तथार्थञ्च कामं यस्तु निषेवते ॥ २१ ॥
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते।
अमित्राणां बधे युक्तो मित्राणां संग्रहे रतः ॥ २२ ॥

हरिभिर्वाहकैः स लक्ष्म्या इत्यनेनैकवाहनारोहणात् सख्यातिशयः सूचितः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

वानराश्च तथा अभवन् कृताञ्जलिपुटा अभवन्नित्यर्थः। आह्ला-दकत्वात्तटाकोपमा तदुपमेयं वानराणां महत् सैन्यम् ॥ १७ ॥ १८ ॥ ॥ १९ ॥ २० ॥ २१ ॥

त्रिवर्गफलभोक्ता च राजा धर्म्मेण युज्यते ।
उद्योगसमयस्त्वेष प्राप्तः शत्रुनिषूदन ! ॥ २३ ॥
सञ्चिन्त्यतां हि पिङ्गेश ! हरिभिः सह मन्त्रिभिः ।
एवमुक्तस्तु सुग्रीवो रामं वचनमब्रवीत् ॥ २४ ॥
प्रनष्टा श्रीश्च कीर्त्तिश्च कपिराज्यञ्च शाश्वतम् ।
त्वत्प्रसादान् महाबाहो पुनः प्राप्तमिदं मया ॥ २५ ॥
तव देव ! प्रसादाच्च भ्रातुश्च जयतां वर ! ।
कृतं न प्रतिकुर्य्याद्यः पुरुषाणां हि दूषकः ॥ २६ ॥
एते वानरमुख्याश्च शतशः शत्रुसूदन ! ।
प्राप्ताश्चादाय बलिनः पृथिव्यां सर्व्ववानरान् ॥ २७ ॥
ऋक्षाश्च वानराः शूरा गोलाङ्गूलाश्च राघव ! ।
कान्तारवनदुर्गाणामभिज्ञा घोरदर्शनाः ॥ २८ ॥

वृक्षाग्रे सुप्तः पतितः सन्यथा प्रतिबुध्यते तथा कामपरो राज्यभ्रष्टः सन् प्रतिबुध्यत इत्यर्थः ॥ २२ ॥

त्रिवर्गो धर्मार्थकामलक्षणस्तस्य तत् फलस्य च यथाकालं भोक्ता ॥ २३ ॥

सञ्चिन्त्यतां सीतान्वेषणादिप्रतिज्ञापरिपूर्त्त्युपायश्चिन्त्यतामित्यर्थः ॥ २४ ॥ २५ ॥

हे देव ! तव प्रसादात्तव भ्रातुः प्रसादाच्चेत्यर्थः । पुरुषाणां मध्ये स एव दूषको धर्मनाशक इत्यर्थः ॥ २६ ॥

देवगन्धर्व्वपुत्राश्च वानरा: कामरूपिण: ।
स्वै: स्वै: परिवृता: सैन्यैर्वर्त्तन्ते पथि राघव ! ॥ २९ ॥
शतै: शतसहस्रैश्च वर्त्तन्ते कोटिभिस्तथा ।
अयुतैश्चावृता वीर ! शङ्कुभिश्च परन्तप ! ॥ ३० ॥
अर्बुदैरर्बुदशतैर्मध्यैश्चान्त्यैश्च वानरा: ।
समुद्राश्चापरार्धाश्च हरयो हरियूथपा: ॥ ३१ ॥
आगमिष्यन्ति ते राजन् ! महेन्द्रसमविक्रमा: ।
मेघपर्व्वतसङ्काशा मेरुविन्ध्यकृतालया: ॥ ३२ ॥
ते त्वामभिगमिष्यन्ति राक्षसं योद्धुमाहवे ।
निहत्य रावणं युद्धे ह्यानयिष्यन्ति मैथिलीम् ॥ ३३ ॥
ततः समुद्योगमवेक्ष्य वीर्य्यवान्
हरिप्रवीरस्य निदेशवर्त्तिन: ।

आदाय आहूय ॥ २७ ॥ २८ ॥ २९ ॥

शतैरित्यादौ केचिदित्यध्याहार: परिवृता इत्यर्थकमावृता इति च सर्वत्र योज्यम्। शतसहस्रं लक्षं लक्षशतं कोटिः दशसहस्रमयुतं कोटिलक्षं शङ्कुः ॥ ३० ॥

शङ्कुसहस्रमर्बुदम् अर्बुदाद्दशगुणं मध्यं तस्माद्दशगुणोऽन्त्य: ततो विंशतिगुण: समुद्र: ततस्त्रिंशद्गुण: परार्धस्तेनासंख्यत्वमुक्तम् ॥ ३१ ॥ ३२ ॥

ये आनयिष्यन्ति ते त्वामभिगमिष्यन्तीत्यन्वयः ॥ ३३ ॥

बभूव हर्षाद्वसुधाधिपात्मजः
　प्रबुद्धनीलोत्पलतुल्यदर्शनः ॥ ४४ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
अष्टत्रिंशः सर्गः ॥ ३८ ॥

प्रबुद्धनीलोत्पलतुल्यदर्शनः विकसितनीलोत्पलसदृशनेत्रः ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे अष्टत्रिंशः सर्गः ॥ ३८ ॥

---

## एकोनचत्वारिंशः सर्गः।

इति ब्रुवाणं सुग्रीवं रामो धर्म्मभृतां वरः।
बाहुभ्यां सम्परिष्वज्य प्रत्युवाच कृताञ्जलिम्॥ १॥
यदिन्द्रो वर्षते वर्षं न तच्चित्रं भविष्यति।
आदित्योऽसौ सहस्रांशुः कुर्य्याद्वितिमिरं नभः॥ २॥
चन्द्रमा रजनीं कुर्य्यात्प्रभया सौम्य! निर्म्मलाम्।
त्वद्विधो वापि मित्राणां प्रीतिं कुर्य्यात् परन्तप!॥ ३॥
एवं त्वयि न तच्चित्रं भवेद्यत् सौम्य! शोभनम्।
जानाम्यहं त्वां सुग्रीव! सततं प्रियवादिनम्॥ ४॥
त्वत् सनाथः सखे! संख्ये जेतास्मि सकलानरीन्।

इतीति॥ १॥

उपकर्तृत्वं तव सहजधर्म एवेति भगवान् सुग्रीवं स्तौति यदीति। वर्षत इति यत्तन्न चित्रं स्वाभाविकत्वादिति शेषः॥ २॥

निर्मलां रविकिरणजतापरहिताम्। त्वद्विधः सात्विको मित्राणां प्रत्युपकारेण प्रीतिं कुर्य्यात् इति यत्तदपि न चित्रम्॥ ३॥

एवं त्वयि मित्रप्रत्युपकारार्थं सेनामेलनं यत् तन्न चित्रं हे सौम्य! शोभनं भद्रं जातम्॥ ४॥

त्वमेव म सुहृन्मित्रं साहाय्यं कर्त्तुमर्हसि ॥ ५ ॥
जहारात्मविनाशाय मैथिलीं राक्षसाधमः ।
वञ्चयित्वा तु पौलोमीमनुह्लादो यथा शचीम् ॥ ६ ॥
न चिरात्तं बधिष्यामि रावणं निशितैः शरः ।
पौलोम्याः पितरं दृप्तं शतक्रतुरिवारिहा ॥ ७ ॥
एतस्मिन्नन्तरे चैव रजः समभिवर्त्तत ।
उष्णतीव्रां सहस्रांशोश्छादयद्गगने प्रभाम् ॥ ८ ॥
दिशः पर्य्याकुलाश्चासन् तमसा तन दूषिताः ।
चचाल च मही सर्व्वा सशैलवनकानना ॥ ९ ॥
ततो नरेन्द्रसङ्काशैस्तीक्ष्णदंष्ट्रैर्महाबलैः ।
कृत्स्ना संछादिता भूमिरसंख्येयैः प्लवङ्गमैः ॥ १० ॥
निमेषान्तरमात्रेण ततस्तैर्हरियूथपैः ।

संख्ये युद्धे ॥ ५ ॥

यथा पैलोमी पितरं वञ्चयित्वा कृतानुमतिकं कृत्वा शचीं चोऽनुह्लादो जहारात्मविनाशाय इन्द्रस्तत्पितरम् अनुमन्तारं हर्त्तारञ्चानुह्लादं हत्वा शचीं प्रत्यानीतवानिति पुराणगाथा। एवं य आत्मविनाशाय मैथिलीं जहार मारीचेन मां वञ्चयित्वा तं न चिराच्छीघ्रम् अरिहा इन्द्र इव बधिष्यामि। पैलोम्याः पितरमिवेत्यनेन रावणकृतो ज्ञानव्यतिक्रमाभावः सूचितः ॥ ६ ॥ ७ ॥

अभिवर्त्तत अभ्यवर्त्तत ॥ ८ ॥ ९ ॥ १० ॥

कोटीशतपरीवारैर्वानरैर्हरियूथपैः ॥ ११ ॥
नादेयैः पार्व्वतेयैश्च सामुद्रैश्च महाबलैः ।
हरिभिर्मेघनिर्ह्रादैरन्यैश्च वनवासिभिः ॥ १२ ॥
तरुणादित्यवर्णैश्च शशिगौरैश्च वानरैः ।
पद्मकेसरवर्णैश्च श्वेतैर्हेमकृतालयैः ॥ १३ ॥
कोटीसहस्रैर्दशभिः श्रीमान् परिवृतस्तदा ।
वीरः शतबलिर्नाम वानरः प्रत्यदृश्यत ॥ १४ ॥
ततः काञ्चनशैलाभस्ताराया वीर्य्यवान् पिता ।
अनेकैर्बहुसाहस्रैः कोटिभिः प्रत्यदृश्यत ॥ १५ ॥
तथापरेण कोटीनां सहस्रेण समन्वितः ।
पिता रुमायाः सम्प्राप्तः सुग्रीवश्वशुरो विभुः ॥ १६ ॥
पद्मकेसरसङ्काशस्तरुणार्कनिभाननः ।
बुद्धिमान् वानरश्रेष्ठः सर्व्ववानरसत्तमः ॥ १७ ॥
अनेकैर्बहुसाहस्रैर्वानराणां समन्वितः ।
पिता हनुमतः श्रीमान् केसरी प्रत्यदृश्यत ॥ १८ ॥

उक्तमेव प्रपञ्चयति । निमेषेति ॥ ११ ॥
वनवासिभिः उक्ततालादिवनवासिभिः ॥ १२ ॥
हेमो हेमाचलः ॥ १३ ॥ १४ ॥
तारापिता सुषेणः ॥ १५ ॥
रुमापिता तारः ॥ १६ ॥ १७ ॥ १८ ॥

गोलाङ्गूलमहाराजो गवाक्षो भीमविक्रमः ।
वृतः कोटिसहस्रेण वानराणामदृश्यत ॥ १९ ॥
ऋक्षाणां भीमवेगानां धूम्रः शत्रुनिबर्हणः ।
वृतः कोटिसहस्राभ्यां द्वाभ्यां समभिवर्त्तत ॥ २० ॥
महाबलनिभैर्घोरैः पनसो नाम यूथपः ।
आजगाम महावीर्य्यैस्तिसृभिः कोटिभिर्वृतः ॥ २१ ॥
नीलाञ्जनचयाकारो नीलो नामैष यूथपः ।
अदृश्यत महाकायः कोटिभिर्दशभिर्वृतः ॥ २२ ॥
ततः काञ्चनशैलाभो गवयो नाम यूथपः ।
आजगाम महावीर्य्यः कोटिभिः पञ्चभिर्वृतः ॥ २३ ॥
दरीमुखश्च बलवान् यूथपोऽभ्याययौ तदा ।
वृतः कोटिसहस्रेण सुग्रीवं समवस्थितः ॥ २४ ॥
मन्दश्च द्विविदश्चोभावश्विपुत्रौ महाबलौ ।
कोटिकोटिसहस्रेण वानराणामदृश्यताम् ॥ २५ ॥
गजश्च बलवान् वीरस्तिसृभिः कोटिभिर्वृतः ।
ऋक्षराजो महातेजा जाम्बवान्नाम नामतः ॥ २६ ॥
कोटिभिर्दशभिर्व्याप्तः सुग्रीवस्य वशे स्थितः ।
रुमणो नाम तेजस्वी विक्रान्तैर्वानरैर्वृतः ॥ २७ ॥
आगतो बलवांस्तूर्णं कोटीशतसमावृतः ।
ततः कोटिसहास्राणां सहस्रेण शतेन च ॥ २८ ॥

पृष्ठतोऽनुगतः प्राप्तो हरिभिर्गन्धमादनः।
ततः पद्मसहस्रेण वृतः शङ्कुशतेन च ॥ २९ ॥
युवराजोऽङ्गदः प्राप्तः पितुस्तुल्यपराक्रमः।
ततस्तारा द्युतिस्तारो हरिभिर्भीमविक्रमैः ॥ ३० ॥
पञ्चभिर्हरिकोटीभिर्दूरतः पर्य्यदृश्यत।
इन्द्रजानुः कपिर्वीरो यूथपः प्रत्यदृश्यत ॥ ३१ ॥
एकादशानां कोटीनामीश्वरस्तैश्च संवृतः।
ततो रम्भस्त्वनुप्राप्तस्तरुणादित्यसन्निभः ॥ ३२ ॥
अयुतेन वृतश्चैव सहस्रेण शतेन च।
ततो यूथपतिर्वीरो दुर्मुखो नाम वानरः ॥ ३३ ॥
प्रत्यदृश्यत कोटीभ्यां द्वाभ्यां परिवृतो बली।
कैलासशिखराकारैर्वानरैर्भीमविक्रमैः ॥ ३४ ॥
वृतः कोटिसहस्रेण हनुमान् प्रत्यदृश्यत।
नलश्चापि महावीर्य्यः संवृतो द्रुमवासिभिः ॥ ३५ ॥
कोटीशतेन सम्प्राप्तः सहस्रेण शतेन च।
ततो दरीमुखः श्रीमान् कोटिभिर्दशभिर्वृतः ॥ ३६ ॥
सम्प्राप्तोऽभिनदंस्तस्य सुग्रीवस्य महात्मनः।
शरभः कुमुदो वह्निर्वानरो रम्भ एव च ॥ ३७ ॥

गोलाङ्गूलो वानरावान्तरजातिः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

एते चान्ये च बहवो वानराः कामरूपिणः ।
आवृत्य पृथिवीं सर्व्वां पर्व्वतांश्च वनानि च ॥ ३८ ॥
यूथपाः समनुप्राप्ता येषां संख्या न विद्यते ।
आगताश्च निविष्टाश्च पृथिव्यां सर्व्ववानराः ॥ ३९ ॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
अभ्यवर्त्तन्त सुग्रीवं सूर्य्यमभ्रगणा इव ॥ ४० ॥
कुर्व्वाणा बहुशब्दांश्च प्रकृष्टा बाहुशालिनः ।
शिरोभिर्वानरेन्द्राय सुग्रीवाय न्यवेदयन् ॥ ४१ ॥
अपरे वानरश्रेष्ठाः सङ्गम्य च यथोचितम् ।
सुग्रीवेण समागम्य स्थिताः प्राञ्जलयस्तदा ॥ ४२ ॥
सुग्रीवस्त्वरितो रामे सर्व्वांस्तांस्त्वरितांस्तदा ।
निवेदयित्वा धर्म्मज्ञः स्थितः प्राञ्जलिरब्रवीत् ॥ ४३ ॥

ताराद्युतिर्नक्षत्रप्रभः । अयं रुमापितुरन्यस्तारः ॥ ३० ॥ ३१ ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

शिरोभिर्न्यवेदयन् बहुसम्मर्दात् । दूरे स्थित्वा नमस्कारेणैवात्मानं न्यवेदयन्नित्यर्थः ॥ ४१ ॥

अपरे सङ्गम्य समीपदेशं प्राप्य यथोचितं निवेद्य जग्मुः । अपरे हनूमदङ्गदादयः समागम्य निकटमागत्य स्थिताः ॥ ४२ ॥

धर्मज्ञो राजधर्मज्ञः रामाभिमुखं प्राञ्जलिः स्थितो भूत्वा सर्वान् यूथपतीन् निवेदयित्वा यूथपानब्रवीत् ॥ ४३ ॥

यथासुखं पर्व्वतनिर्झरेषु
वनेषु सर्व्वेषु च वानरेन्द्राः।
निवेशयित्वा विधिवद् बलानि
बलं बलज्ञः प्रतिपत्तुमीष्टे ॥ ४४ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

भो वानरेन्द्राः पर्वतादिषु यथासुखं स्वानि बलानि निवेशयित्वा। तेषु यो बलज्ञः बलतत्त्वज्ञः प्रतिपत्तुं क आगतः को नागत इति ज्ञातुमीष्टे ईशो भवेत्। लिङर्थे लट् ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धा-
काण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

# चत्वारिंशः सर्गः।



अथ राजा समृद्धार्थः सुग्रीवः प्लवगेश्वरः।
उवाच नरशार्दूलं रामं परबलार्द्दनम्॥ १॥
आगता विनिविष्टाश्च बलिनः कामचारिणः।
वानरेन्द्रा महेन्द्राभा ये मद्विषयवासिनः॥ २॥
त इमे बहुविक्रान्तैर्बलिभिर्भीमविक्रमैः।
आगता वानरा घोरा दैत्यदानवसन्निभाः॥ ३॥
ख्यातकर्म्मापदानाश्च बलवन्तो जितक्लमाः।
पराक्रमेषु विख्याता व्यवसायेषु चोत्तमाः॥ ४॥
पृथिव्यम्बुचरा राम! नानानगनिवासिनः।
कोट्योघाश्च इमे प्राप्ता वानरास्तव किंकराः॥ ५॥

अथेति॥ १॥

विनिविष्टाश्चेति स्व स्व सेनानिवेशे इति शेषः। निवेशिता इत्यर्थः। मद्विषयवासिनः मम विषये वानरराज्ये वासिनः॥ २॥

बहुविक्रान्तैर्बहुषु स्थलेषु कृतपराक्रमैः अतएव भीमविक्रमैः स्वयूथैः सहेति शेषः॥ ३॥

ख्यातं कर्मणि युद्धे अपदानं शौर्य्यं येषाम्॥ ४॥

निदेशवर्त्तिनः सर्व्वे सर्व्वे गुरुहिते स्थिताः ।
अभिप्रेतमनुष्ठातुं तव शक्ष्यन्त्यरिन्दम ! ॥ ६ ॥
त इमे बहुसाहस्रैः रनेकैर्बहुविक्रमैः ।
आगता वानरा घोरा दैत्यदानवसन्निभाः ॥ ७ ॥
यन्मन्यसे नरव्याघ्र ! प्राप्तकालं तदुच्यताम् ।
त्वत्सैन्यं त्वद्वशे युक्तमाज्ञापयितुमर्हसि ॥ ८ ॥
काममेवमिदं कार्य्यं विदितं मम तत्त्वतः ।
तथापि तु यथायुक्तमाज्ञापयितुमर्हसि ॥ ९ ॥
तथा ब्रुवाणं सुग्रीवं रामो दशरथात्मजः ।
बाहुभ्यां सम्परिष्वज्य इदं वचनमब्रवीत् ॥ १० ॥
ज्ञायतां सौम्य ! वैदेही यदि जीवति वा न वा ।
स च देशो महाप्राज्ञ ! यस्मिन् वसति रावणः ॥ ११ ॥

अम्बुचराः समुद्रमध्यद्वीपचराः कोट्योघा इति असंख्यत्वोपलक्षणम् ॥ ५ ॥

गुरुहिते स्वामिहिते तत्राभिप्रेतमनुष्ठातुं शक्ष्यन्ति समर्था इत्यर्थः ॥ ६ ॥

अनेकैः सहेति शेषः ॥ ७ ॥

प्राप्तकालं कालोचितं तदुच्यतां मन्नियोगः कार्य्य इत्यर्थः । नन्विदं तत्सैन्यं न मन्नियोज्यतामर्हति तत्राह,—त्वत्सैन्यमिति ॥ ८ ॥

इदं कार्य्यं सीतान्वेषणरूपम् ॥ ९ ॥ १० ॥ ११ ॥

अभिगम्य तु वैदेहीं निलयं रावणस्य च।
प्राप्तकालं विधास्यामि तस्मिन् काले सह त्वया ॥ १२ ॥
नाहमस्मिन् प्रभुः कार्य्ये वानरेन्द्र! न लक्ष्मणः।
त्वमस्य हेतुः कार्य्यस्य प्रभुश्च प्लवगेश्वर! ॥ १३ ॥
त्वमेवाज्ञापय विभो! मम कार्य्यविनिश्चयम्।
त्वं हि जानासि मे कार्य्यं मम वीर! न संशयः ॥ १४ ॥
सुहृद्द्वितीयो विक्रान्तः प्राज्ञः कालविशेषवित्।
भवानस्मद्धिते युक्तः सुहृदाप्तोऽर्थवित्तमः ॥ १५ ॥
एवमुक्तस्तु सुग्रीवो विनतं नाम यूथपम्।
अब्रवीद्रामसान्निध्ये लक्ष्मणस्य च धीमतः ॥ १६ ॥
शैलाभं मेघनिर्घोषमूर्जितं प्लवगेश्वरम्।
सोमसूर्य्यनिभैः सार्द्धं वानरैर्वानरोत्तम! ॥ १७ ॥
देशकालनयैर्युक्तो विज्ञः कार्य्यविनिश्चये।

तस्मिन् काले वृत्तान्तावगत्यनन्तरकाले ॥ १२ ॥

अस्मिन् कार्य्ये वानरप्रेषणरूपे अस्य कार्य्यस्येति सिद्धेरिति शेषः ॥ १३ ॥

मम कार्य्यविनिश्चयं ज्ञात्वेति शेषः। हे वीर! त्वं मम सुहृदित्यन्वयः ॥ १४ ॥

द्वितीयः सुहृल्लक्षणापेक्षया ॥ १५ ॥ १६ ॥

सोमसूर्य्यनिभैस्तत्सदृशकान्तिभिः ॥ १७ ॥

वृत: शतसहस्रेण वानराणां तरस्विनाम् ॥ १८ ॥
अधिगच्छ दिशं पूर्व्वां सशैलवनकाननाम् ।
तत्र सीताञ्च वैदेहीं निलयं रावणस्य च ॥ १९ ॥
मार्गध्वं गिरिदुर्गेषु वनेषु च नदीषु च ।
नदीं भागीरथीं रम्यां सरयूं कौशिकीं तथा ॥ २० ॥
कालिन्दीं यमुनां रम्यां यामुनञ्च महागिरिम् ।
सरस्वतीञ्च सिन्धुञ्च शोणं मणिनिभोदकम् ॥ २१ ॥
महीं कालमहीञ्चापि शलकाननशोभिताम् ।
ब्रह्ममालान् विदेहांश्च मालवान् काशिकोसलान् ॥ २२ ॥
मागधांश्च महाग्रामान् पुण्ड्रांस्त्वङ्गांस्तथैव च ।

नयो नीतिः विज्ञः तज्ज्ञस्त्वमिति शेषः ॥ १८ ॥

निलयं रावणस्य निलयस्थानम्। यद्वा चतुर्दिक्षु रावणावासस्थान-मनेन सूचितम् ॥ १९ ॥

मार्गध्वमिति सामान्यतो नियोगः। विशेषेणाह,—नदीमित्यादि द्वितीयान्तानां प्राप्येति शेषः ॥ २० ॥

कालिन्दीं यमुनां यामुनोगिरिः यमुनोत्पत्तिस्थानभूतः कलिन्द-गिरिः ॥ २१ ॥

महीकालमह्यौ नद्यौ। अथ प्राच्यदेशानाह,—ब्रह्ममालानिति। हिमवद्विन्ध्यमध्यवर्त्ति आर्य्यावर्त्तापेक्षया प्राच्यादिविभागोऽत्र विवक्षित इत्याहुः ॥ २२ ॥

भूमिञ्च कोशकाराणां भूमिञ्च रजताकराम् ॥ २३ ॥
सर्व्वञ्च तद्विचेतव्यं मृगयद्भिस्ततस्ततः।
रामस्य दयितां भार्य्यां सीतां दशरथस्नुषाम् ॥ २४ ॥
समुद्रमवगाढ़ांश्च पर्व्वतान् पत्तनानि च।
मन्दरस्य च ये कोटिं संश्रिताः केचिदालयाः ॥ २५ ॥
कर्णप्रावरणांश्चैव तथा चाप्योष्ठकर्णकाः।
घोरलोलमुखाश्चैव जवनाश्चैकपादकाः ॥ २६ ॥
अक्षया बलवन्तश्च तथैव पुरुषादकाः।
किरातास्तीक्ष्णचूड़ाश्च हेमाभाः प्रियदर्शनाः ॥ २७ ॥

कोशकाराणां भूमिम्। कौशेयकतन्तूत्पादकजन्तूत्पत्तिस्थानभूतां भूमिम्। रजताकरां रजतखनिम् ॥ २३ ॥

एतानि प्राप्य एतत्पूर्व्वोक्तं सर्व्वं सर्व्वावयवं विचेतव्यम्। तत्र किं विचेतव्यं तत्राह,—रामस्य दयितामिति ॥ २४ ॥

समुद्रमवगाढ़ान् समुद्रान्तर्गताम्। पत्तनानि समुद्रद्वीपवर्त्तीनि। आलया ग्रामाः ॥ २५ ॥

कर्णप्रावरणाः प्रावरणं वस्त्रं तद्वद्विशालश्रवणपुटाः। ओष्ठकर्णकाः ओष्ठपर्य्यन्तकर्णाः। लोहमुखाः लोहवत्कठिनकृष्णमुखाः एकपादकाः एकपादकाः सन्तो जवनाः क्षिप्रगतयः ॥ २६ ॥

अक्षयाः अक्षयसन्तानाः एते उक्ता पुरुषाः तथैव पुरुषादका रक्षभेदाः। तीक्ष्णसूच्यग्रसदृशतैक्ष्ण्यवती चूड़ा केशपाशो येषाम् ॥ २७ ॥

आममीनाशनाश्चापि किराता द्वीपवासिनः।
अन्तर्जलचरा घोरा नरव्याघ्रा इति स्मृताः॥ २८॥
एतेषामाश्रयाः सर्व्वे विचेयाः काननौकसः।
गिरिभिर्ये च गम्यन्ते प्लवनेन प्लवेन च॥ २९॥
यत्नवन्तो यवद्वीपं सप्तराज्योपशोभितम्।
सुवर्णरूप्यकद्वीपं सुवर्णाकरमण्डितम्॥ ३०॥
यवद्वीपमतिक्रम्य शिशिरो नाम पर्व्वतः।
दिवं स्पृशति शृङ्गेण देवदानवसेवितः॥ ३१॥
एतेषां गिरिदुर्गेषु प्रपातेषु वनेषु च।
मार्गध्वं सहिताः सर्वे रामपत्नीं यशस्विनीम्॥ ३२॥
ततो रक्तजलं प्राप्य शोणाख्यं शीघ्रवाहिनम्।

आममीनाशनाः अपक्कमत्स्यभुजः नरव्याघ्राः अधःप्रदेशे नराकारा एव सन्त उपरिभागे व्याघ्राकारा अतएव घोराः॥ २८॥

काननौकस इति सम्बोधनम्। गिरिभिर्ये च गम्यन्ते गिरीनाक्रम्य ये देशा द्वीपाश्च गम्यन्ते ये च प्लवनेन कूर्दनेन गम्यन्ते ये च प्लवेनोडुपेन गम्यन्ते ते च विचेया इत्यन्वयः॥ २९॥

ततःपरं यत्नवन्तो भूत्वा सप्तराज्योपशोभितं यवद्वीपं तथा सुवर्णद्वीपं रूप्यकद्वीपं विचेतव्यमिति शेषः। सुवर्णाकरमण्डितमिति सुवर्णां कुर्व्वन्ति ये तैः शोभितम्॥ ३०॥

ततःपरं यवाख्यद्वीपमतिक्रम्य शिशिरनामा पर्व्वतोऽस्ति॥ ३१॥

एतेषां उक्तद्वीपानाम्॥ ३२॥

गत्वा पारं समुद्रस्य सिद्धचारणसेवितम् ॥ ३३ ॥
तस्य तीर्थेषु रम्येषु विचित्रेषु वनेषु च।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३४ ॥
पर्व्वतप्रभवा नद्यः सुभीमबहुनिष्कुटाः।
मार्गितव्या दरीमन्तः पर्व्वताश्च वनानि च ॥ ३५ ॥
ततः समुद्रद्वीपांश्च सुभीमान् द्रष्टुमर्हथ।
ऊर्म्मिमन्तं महारौद्रं क्रोशन्तमनिलोद्धतम् ॥ ३६ ॥
तत्रासुरा महाकायाश्छायां गृह्णन्ति नित्यशः।
ब्रह्मणा समनुज्ञाता दीर्घकालं बुभुक्षिताः ॥ ३७ ॥
तं कालमेघप्रतिमं महोरगनिषेवितम्।
अभिगम्य महानादं तीर्थेनैव महोदधिम् ॥ ३८ ॥

ततः समुद्रस्य पारं गत्वा रक्तवर्णजलम् अतएव शोणाख्यं नदं प्राप्य ॥ ३३ ॥

तस्य तीर्थेष्ववतारभेदेषु ॥ ३४ ॥

बहुनिष्कुटाः बहूपवनप्रदेशाः दरीमन्तः दरीयुक्ताः ॥ ३५ ॥

समुद्रद्वीपानुक्तदेशात् परिवर्त्तीन्समुद्रद्वीपान् ऊर्म्मिमन्तमतएव क्रोशन्तं महाघोषम् ॥ ३६ ॥

तत्र इक्षुसमुद्रे। समनुज्ञाताः समनुज्ञातछायादारकग्रहणसामर्थ्यादिमन्तः छायागृहीतप्राणिभक्षणामुमतिकाश्च ॥ ३७ ॥

इक्षुरसस्यापि श्यामत्वात्तदुदधेः कालमेघप्रतिमत्वम्। तीर्थेन उपायेनाभिगम्य प्राप्य ॥ ३८ ॥

ततो रक्तजलं भीमं लोहितं नाम सागरम्।
गत्वा प्रेच्यथ ताञ्चैव बृहतीं कूटशाल्मलीम् ॥ ३९ ॥
गृहञ्च वैनतेयस्य नानारत्नविभूषितम्।
तत्र कैलाससङ्काशं विहितं विश्वकर्म्मणा ॥ ४० ॥
तत्र शैलनिभा भीमा मन्देहा नाम राक्षसाः।
शैलशृङ्गेषु लम्बन्ते नानारूपा भयावहाः ॥ ४१ ॥
ते पतन्ति जले नित्यं सूर्य्यस्योदयनं प्रति।
अभितप्ता स्म सूर्य्येण लम्बन्ते स्म पुनः पुनः ॥ ४२ ॥
निहता ब्रह्मतेजोभिरहन्यहनि राक्षसाः।
ततः पाण्डुरमेघाभं क्षीरोदं नाम सागरम् ॥ ४३ ॥

तत इक्षुसागरात् परतः रक्तजलं रक्तवर्णजलम्। अतएव लोहिताख्यं कूटशाल्मलीं शाल्मलीद्वीपत्वप्रयोजकवृक्षं जम्बूद्वीपे जम्बुवत् ॥ ३९ ॥

तत्र कूटशाल्मलीसमीपे ॥ ४० ॥

शैलशृङ्गेषु सुरासमुद्रान्तर्वर्त्तिशैलशृङ्गेषु लम्बन्ते अधोमुखा इति शेषः ॥ ४१ ॥

सूर्य्यस्योदयनम्प्रति। सूर्य्योदयं प्राप्यार्द्रमुखाः सूर्य्येण युध्यमानाः सूर्य्येणाभितप्ताः तन्मण्डलब्रह्मतेजोभितप्ताः ब्रह्मतेजोभिरहन्यहनि वैवर्णिकप्रवर्त्तितैः ब्रह्मविद्यातेजोभिर्निहताः सन्तः सुरोदजले पतन्ति। ततः पुनरुज्जीविताः लम्बन्ते स्म शैलशृङ्गेष्विति शेषः। अत्र कतकवृत्तः शैलशृङ्गेषु लम्बन्त इत्यादिश्लोकद्वयं प्रक्षिप्तम्। तानि रक्षांसि मन्दे

गत्वा द्रक्ष्यथ दुर्द्धर्षा ! मुक्ताहारमिवोर्म्मिभिः ।
तस्य मध्ये महान् श्वेतो ऋषभो नाम पर्व्वतः ॥ ४४ ॥
दिव्यगन्धैः कुसुमितैराचितैश्च नगैर्वृतः ।
सरश्च राजतैः पद्मैर्ज्वलितैर्हेमकेसरैः ॥ ४५ ॥
नाम्ना सुदर्शनं नाम राजहंसैः समाकुलम् ।
विबुधाश्चारणा यक्षाः किन्नराश्चाप्सरोगणाः ॥ ४६ ॥
हृष्टा समधिगच्छन्ति नलिनीं तां रिरंसवः ।
क्षीरोदं समतिक्रम्य तदा द्रक्ष्यथ वानराः ॥ ४७ ॥
जलोदं सागरं शीघ्रं सर्व्वभूतभयावहम् ।
तत्र तत्कोपजं तेजः कृतं हयमुखं महत् ॥ ४८ ॥

शाकद्वीपे द्वीपे प्रक्षिपन्तीति श्रुतौ शाकद्वीपे तत्प्रक्षेपोक्तेरन्यशाकद्वीप-प्रसङ्गाभावात्प्राचीनपुस्तकेष्वदर्शनाच्चेत्याहुः । ततः पापहरेति । अत्र सुराक्षीरोदयोर्मध्ये सर्पिर्दधिसमुद्रयोर्विवेचनानुक्तिस्तत्र विचेतव्य-दुर्गस्थलाभावादिति कतकः । अनुक्तमपि तदुभयविवेचनमर्थतोऽवग-न्तव्यमिति तीर्थः ॥ ४२ ॥ ४३ ॥

मुक्ताहारमिव ऊर्मिभिस्तदन्तामिवेत्यर्थः ॥ ४४ ॥

सरश्च नाम्ना सुदर्शनमित्यन्वयः ॥ ४५ ॥

नामशब्दः प्रसिद्ध्यर्थः ॥ ४६ ॥

नलिनीयुक्तं सुदर्शनं सर इत्यर्थः ॥ ४७ ॥

जलोदं शुद्धजलरूपोदकम् । तत्र जलसमुद्रे तत्कोपजम् और्व-ब्रह्मर्षिकोपजम् । हयमुखं वडवामुखं तेजोब्रह्मणा कृतमस्ति ॥ ४८ ॥

अस्याद्भुतं महावेगमोदनं सचराचरम्।
तत्र विक्रोशतां नादो भूतानां सागरौकसाम्।
श्रूयते चासमर्थानां दृष्ट्वा भूद्वड़वामुखम् ॥ ४९ ॥
स्वादूदस्योत्तरे तीरे योजनानि त्रयोदश।
जातरूपशिलो नाम सुमहान् कनकप्रभः ॥ ५० ॥
तत्र चन्द्रप्रतीकाशं पन्नगं धरणीधरम्।
पद्मपत्रविशालाक्षं ततो द्रक्ष्यथ वानराः ॥ ५१ ॥
आसीनं पर्व्वतस्याग्रे सर्व्वदेवनमस्कृतम्।
सहस्रशिरसं देवमनन्तं नीलवाससम् ॥ ५२ ॥
त्रिशिराः काञ्चनः केतुस्तालस्तस्य महात्मनः।
स्थापितः पर्व्वतस्याग्रे विराजति सवेदिकः ॥ ५३ ॥
पूर्व्वस्यां दिशि निर्म्माणं कृतं तत्त्रिदशेश्वरैः।

अस्याद्भुतं महावेगं सचराचरं सर्व्वं जगद्युगान्ते ओदनं वदन्ति। अनेन तस्य ब्रह्मरूपता सूचिता। तद्वड़वामुखं दृष्ट्वा तत्र पतनभीत्या विक्रोशताम् असमर्थानां चासमर्थानामपि सागरौकसां भूतानां यो नादोभूत् स श्रूयते। स्वादूदस्य शुद्धोदकस्य समुद्रस्य उत्तरे तीरे इति प्राञ्चः पाठः ॥ ४९ ॥ ५० ॥

चन्द्रप्रतीकाशं श्वेतवर्णम् ॥ ५१ ॥ ५२ ॥

त्रिशिराः शिरःप्रदेशवर्त्तित्रिस्कन्धवान्। सवेदिकः आधारवेदिबन्धसहितः ॥ ५३ ॥

ततःपरं हेममयः श्रीमानुदयपर्व्वतः ॥ ५४ ॥
तस्य कोटिर्दिवं स्पृष्ट्वा शतयोजनमायता ।
जातरूपमयी दिव्या विराजति सवेदिका ॥ ५५ ॥
सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ।
जातरूपमयैर्दिव्यैः शोभते सूर्य्यसन्निभैः ॥ ५६ ॥
तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् ।
शृङ्गं सौमनसं नाम जातरूपमयं ध्रुवम् ॥ ५७ ॥
तत्र पूर्व्वं पदं कृत्वा पुरा विष्णुस्त्रिविक्रमे ।
द्वितीयं शिखरे मेरोश्चकार पुरुषोत्तमः ॥ ५८ ॥
उत्तरेण परिक्रम्य जम्बूद्वीपं दिवाकरः ।
दृश्यो भवति भूयिष्ठं शिखरं तन्महोच्छ्रयम् ॥ ५९ ॥
तत्र वैखानसा नाम वालखिल्या महर्षयः ।

अयमेव तालः पूर्वस्यां दिशि पूर्वदिग्व्यवस्थाया निर्म्माणं कृतम् अभिज्ञाशङ्कुवत् प्रमाणनिर्म्माणं कृतमित्यर्थः ॥ ५४ ॥

कोटिः शिखरं सवेदिका साधारपर्व्वता ॥ ५५ ॥ ५६ ॥

तत्र शतयोजनदीर्घे उदयगिरिशिखरे ॥ ५७ ॥

तत्र सौमनसे शृङ्गे त्रिविक्रमे त्रिभिः पदैस्त्रिलोक्या आक्रमणप्रस्तावे प्रथमं पदं तत्र कृत्वा द्वितीयं पदं मेरोः शिखरे चकार ॥ ५८ ॥

अस्तानन्तरमुत्तरेण जम्बूद्वीपं परिक्रम्य तन्महोच्छ्रयं शिखरं सौमनसाख्यं प्राप्य स्थितो दिवाकरः जम्बूद्वीपवर्त्तिनां भूयिष्ठं दृश्यो

प्रकाशमाना दृश्यन्ते सूर्य्यवर्णास्तपस्विनः ॥ ६० ॥
अयं सुदर्शनो द्वीपः पुरो यस्य प्रकाशते।
तस्मिंस्तेजश्च चक्षुश्च सर्व्वप्राणभृतामपि ॥ ६१ ॥
शैलस्य तस्य पृष्ठेषु कन्दरेषु वनेषु च।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६२ ॥
काञ्चनस्य च शैलस्य सूर्य्यस्य च महात्मनः।
आविष्टा तेजसा सन्ध्या पूर्व्वा रक्ता प्रकाशते ॥ ६३ ॥
पूर्व्वमेतत् कृतं द्वारं पृथिव्या भुवनस्य च।
सूर्य्यस्योदयनञ्चैव पूर्व्वा ह्येषा दिगुच्यते ॥ ६४ ॥

भवति। सौमनसे शिखरे इत्यर्थः। इदं सत्ययुगाभिप्रायम्। त्रेतायां क्षीरसागरमध्यगस्य द्वापरे सुरोदमध्यगस्य कलौ लङ्कामध्यगस्य जम्बूद्वीपस्थमनुष्यदृश्यताया अन्यत्रोक्तत्वात् ॥ ५९ ॥ ६० ॥

यस्य पुरः पुरस्तात् समीपे एव। अयं प्रागुक्तसुदर्शनसरश्चिह्नो द्वीपः प्रकाशते तस्मिन् सौमनसशिखरे भगवत्युदिते सर्वप्राणभृतां प्राणिनां तेजःसम्बन्धो भवति चक्षुश्च प्रकाशते ॥ ६१ ॥ ६२ ॥

काञ्चनशैलस्य सूर्यस्य तेजसाविष्टा समाक्रान्ता पूर्वा सन्ध्या उदयावच्छिन्ना पूर्वादिक् रक्ता सती प्रकाशते ॥ ६३ ॥

तदेवाह,—पूर्वमिति। चोहेतौ यतो भुवनस्य प्रकाशनहेतोः सूर्य्यस्योदयनमवेक्ष्य पूर्वं प्रथमं पृथिव्या तद्द्वारम् ऊर्द्धस्थानां पृथिवीप्रवेशस्य द्वारं पृथ्वीस्थानां भुवनस्य ब्रह्मभुवनस्य प्रवेशद्वारमेतदुदय-

तस्य शैलस्य पृष्ठेषु निर्झरेषु गुहासु च।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः॥ ६५॥
ततः परमगम्या स्याद्दिक् पूर्व्वा त्रिदशावृता।
रहिता चन्द्रसूर्य्याभ्यामदृश्या तमसावृता॥ ६६॥
शैलेषु तेषु सर्व्वेषु कन्दरेषु नदीषु च।
ये च नोक्ता मयोद्देशा विचेया तेषु जानकी॥ ६७॥
एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः।
अभास्करममर्य्यादं न जानीमस्ततःपरम्॥ ६८॥
अभिगम्य तु वैदेहीं निलयं रावणस्य च।
मासे पूर्णे निवर्त्तध्वम् उदयं प्राप्य पर्व्वतम्॥ ६९॥
ऊर्द्धं मासान्न वस्तव्यं वसन् वध्यो भवेन्मम।
सिद्धार्थाः सन्निवर्त्तध्वमधिगम्य च मैथिलीम्॥ ७०॥
महेन्द्रकान्तां वनखण्डमण्डितां
दिशं चरित्वा निपुणेन वानराः।

गिरिरूपं कृतमत एषा पूर्वा दिगुच्यते। अन्ये तु एतद्द्वारमेतद्दिग्वर्त्ति महत् भूविवरं सृष्टं ब्रह्मणा तस्मादेषा पूर्व्वा दिगुच्यते॥ ६४॥

तस्य शैलस्य उदयशैलस्य॥ ६५॥

ततःपरं उदयाद्रेः पुरस्तात् त्रिदशावृता तद्दिगधिष्ठात्रिन्द्रादि-त्रिदशाधिष्ठिता। उदयाचलात् परमगम्यत्वे हेतुमाह,—रहितेति॥६६॥

उक्तार्थोपसंहारः शैलेष्वित्यादि॥ ६७॥ ६८॥ ६९॥

अवाप्य सीतां रघुवंशजप्रियां
ततो निवृत्ताः सुखिनो भविष्यथ ॥ ७१ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
चत्वारिंशः सर्गः ॥ ४० ॥

सिद्धार्थाः कृतान्वेषणकृत्याः ॥ ७० ॥ ७१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

---

# एकचत्वारिंशः सर्गः ।



ततः प्रस्थाप्य सुग्रीवस्तन्महद्वानरं बलम् ।
दक्षिणां प्रेषयामास वानरानभिलक्षितान् ॥ १ ॥
नीलमग्निसुतञ्चैव हनूमन्तञ्च वानरम् ।
पितामहसुतञ्चैव जाम्बवन्तं महौजसम् ॥ २ ॥
सुहोत्रञ्च शरारिञ्च शरगुल्मं तथैव च ।
गजं गवाक्षं गवयं सुषेणं वृषभं तथा ॥ ३ ॥
मैन्दञ्च द्विविदञ्चैव सुषेणं गन्धमादनम् ।
उल्कामुखमनङ्गञ्च हुताशनसुतावुभौ ॥ ४ ॥
अङ्गदप्रमुखान् वीरान् वीरः कपिगणेश्वरः ।
वेगविक्रमसम्पन्नान् सन्दिदेश विशेषवित् ॥ ५ ॥
तेषामग्रेसरञ्चैव वृहद्बलमथाङ्गदम् ।
विधाय हरिवीराणामादिशद्दक्षिणां दिशम् ॥ ६ ॥

तत इति । अभिलक्षितान् कार्य्यसमर्थत्वेन निर्णीतान् ॥ १ ॥ २ ॥ ३ ॥

अयं सुषेणस्तारापितुरन्यः । हुताशनसुतानिति । अग्नित्वव्याप्यं हुताशनत्वमित्यग्निहुताशनयोर्भेदः ॥ ४ ॥

विशेषवित् अन्वेष्टव्यदेशविशेषवित् ॥ ५ ॥

ये केचन समुद्देशा तस्यां दिशि सुदुर्गमाः ।
कपोशः कपिमुख्यानां स तेषां समुदाहरत् ॥ ७ ॥
सहस्रशिरसं विन्ध्यं नानाद्रुमलतायुतम् ।
नर्म्मदाञ्च नदीं रम्यां महोरगनिषेविताम् ॥ ८ ॥
ततो गोदावरीं रम्यां कृष्णवेणीं महानदीम् ।
मेखलानुत्कलांश्चैव दशार्णनगराण्यपि ॥ ९ ॥
आब्रवन्तीमवन्तीञ्च सर्वमेवानुपश्यत ।
विदर्भानृष्टिकांश्चैव रम्यान् माहिषकानपि ॥ १० ॥
तथा मत्स्यकलिङ्गांश्च कौशिकांश्च समन्ततः ।
अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहम् ॥ ११ ॥
नदीं गोदावरीञ्चैव सर्वमेवानुपश्यत ।
तथैवान्ध्रांश्च पुण्ड्रांश्च चोलान् पाण्ड्यांश्च केरलान् ॥ १२ ॥

अग्रेसरं मुख्यम्। असंग्रहमिति पाठेऽसङ्कोचप्रभुमित्यर्थः। दक्षिणां दिशमादिशत् अन्वेष्टव्यत्वेनेति शेषः ॥ ६ ॥

तस्यां दिशि ये सुदुर्गमास्तान् समुदाहरन्नुवाच ॥ ७ ॥

अथाप्यार्य्यावर्त्तापेक्षया दक्षिणत्वं तदाह,—सहस्रशिरसं सहस्रशिखरम् ॥ ८ ॥

गोदावरीं विन्ध्यपूर्वप्रदेशवर्त्तिगोदावरीं नदीम्। मेखलादयो देशभेदाः ॥ ९ ॥

ऋष्टिकानिति पाठः ॥ १० ॥

मत्स्याश्च कलिङ्गाश्च तान् ॥ ११ ॥

अयोमुखश्च गन्तव्यः पर्व्वतो धातुमण्डितः ।
विचित्रशिखरः श्रीमांश्चित्रपुष्पितकाननः ॥ १३ ॥
सुचन्दनवनोद्देशो मार्गितव्यो महागिरिः ।
ततस्तामापगां दिव्यां प्रसन्नसलिलाशयाम् ॥ १४ ॥
तत्र द्रक्ष्यथ कावेरीं विहृतामप्सरोगणैः ।
तस्यासीनं नगस्याग्रे मलयस्य महौजसः ॥ १५ ॥
द्रक्ष्यथादित्यसङ्काशमगस्त्यमृषिसत्तमम् ।
ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना ॥ १६ ॥
ताम्रपर्णीं ग्राहजुष्टां तरिष्यथ महानदीम् ।
सा चन्दनवनैश्चित्रैः प्रच्छन्नद्वीपवारिणी ॥ १७ ॥
कान्तेव युवती कान्तं समुद्रमवगाहते ।
ततो हेममयं दिव्यं मुक्तामणिविभूषितम् ॥ १८ ॥

नदीं गोदावरीं दण्डकारण्यवर्त्तिगोदावरीपदेशम् ॥ १२ ॥

अयोमुख इति मलयस्य नामान्तरं सुचन्दनवनत्वलिङ्गात् ॥ १३ ॥ १४ ॥

तस्यायोमुखपर्य्यायस्य ॥ १५ ॥

अगस्त्यमिति । यद्यपि पञ्चवटीतउदग्भागेऽगस्त्याश्रमः पूर्व्वमुक्तस्तथाप्यत्रापि बोध्यः वाल्मीकेरनेकदेशस्थाश्रमवत् । समाननामान्य एवायमित्यन्ये ॥ १६ ॥

ग्राहजुष्टामित्यादि ताम्रपर्णीविशेषणम् । चन्दनैः प्रच्छन्नानि द्वीपानि वारि च यस्याः सा प्रच्छन्नद्वीपवारिणी प्रच्छन्नशरीरेति यावत् । १७ ॥

युक्तं कवाटं पाण्ड्यानां गता द्रक्ष्यथ वानराः।
ततः समुद्रमासाद्य सम्प्रधार्य्यार्थनिश्चयम्॥ १९॥
अगस्त्येनान्तरे तत्र सागरे विनिवेशितः।
चित्रसानुनगः श्रीमान् महेन्द्रः पर्व्वतोत्तमः॥ २०॥
जातरूपमयः श्रीमानवगाढ़ो महार्णवम्।
नानाविधैर्नगैः फुल्लैर्लताभिश्चोपशोभितम्॥ २१॥
देवर्षियक्षप्रवरैरप्सरोभिश्च शोभितम्।
सिद्धचारणसङ्घैश्च प्रकीर्णं सुमनोरमम्॥ २२॥
तमुपैति सहस्राक्षः सदा पर्व्वसु पर्व्वसु।
द्वीपस्तस्यापरे पारे शतयोजनविस्तृतः॥ २३॥

अतएव युवती कान्तेव॥ १८॥

युक्तं पुरप्राकारघटितम्। अर्थे समुद्रतरणरूपे निश्चयं शक्याशक्य-निश्चयं सम्प्रधार्य्य कृत्वा तत्र प्लवनसाधनभूतः पर्वत उपदिश्यते। अगस्त्येनेति सागरेऽन्तरे सागरखातसम्बन्धिन्यन्तरे अवकाशे अगस्त्येन विनिवेशितः प्रतिष्ठापितो महेन्द्रः पर्वतोत्तमोऽस्ति श्रीमान् सुन्दरः॥ १९॥ २०॥

अवगाढ़ः प्रविष्टैकपार्श्वः॥ २१॥ २२॥

तम् उक्तविशेषणं विशिष्टम्। सहस्राक्ष उपैतीत्यनेन महेन्द्राधिष्ठितत्वात् अन्वर्थनामकत्वं महेन्द्रस्य सूचितम्। अपरे पारे अपारे परतीरे। अपरशब्दो विशेषवाची परतीरविशेषे। प्रतिष्ठित इति

अगम्यो मानुषैर्दीप्तस्तं मार्गध्वं समन्ततः।
तत्र सर्व्वात्मना सीता मार्गितव्या विशेषतः॥ २४॥
सहि देशस्तु वध्यस्य रावणस्य दुरात्मनः।
राक्षसाधिपतेर्वासः सहस्राक्षसमद्युतेः॥ २५॥
दक्षिणस्य समुद्रस्य मध्ये तस्य तु राक्षसी।
अङ्गारकेति विख्याता छायामाक्षिप्य भोजनी॥ २६॥
एवं निःसंशयान् कृत्वा संशयान्नष्टसंशयाः।
मृगयध्वं नरेन्द्रस्य पत्नीममिततेजसः॥ २७॥
तमतिक्रम्य लक्ष्मीवान् समुद्रे शतयोजने।
गिरिः पुष्पितको नाम सिद्धचारणसेवितः॥ २८॥
चन्द्रसूर्य्यांशुसङ्काशः सागराम्बुसमाश्रयः।

शेषः। द्वीप इति। उत्तरभागे दक्षिणे लवणसमुद्र इति तस्य द्वीपत्वम्। सगरखातोऽप्येकदेशेनोदग्भागे च समुद्रसम्बद्धः॥ २३॥

दीप्तः स्वर्णभूयिष्ठत्वात्। तत्र द्वीपे। सर्वात्मना सर्वप्रकारेण। विशेषतः एकदेशमप्यनुपेक्ष्यः॥ २४॥ २५॥

समुद्रसम्बद्धत्वात् सागरोऽपि समुद्रत्वेन समुद्रस्य सागरत्वेन व्यवह्रियत इत्यविरोधः। तस्य तु रावणस्य तु। भोजनी भोक्तुं शीला॥ २६॥

संशयान् संशयविषयान् देशान्निःसंशयान् सम्यगन्वेषणेन कृत्वा ततो नष्टसंशयाः आप्तसत्वासत्वनिश्चयास्तत्रासत्वे सति तं लङ्काद्वीपमाक्रम्य मृगयध्वम्॥ २७॥

भ्राजते विपुलैः शृङ्गैरम्बरं विलिखन्निव ॥ २८ ॥
तस्यैकं काञ्चनं शृङ्गं सेवते यं दिवाकरः।
न तत् कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः ॥ ३० ॥
प्रणम्य शिरसा शैलं तं विमार्गेथ वानराः।
तमतिक्रम्य दुर्द्धर्षं सूर्य्यवान्नाम पर्व्वतः ॥ ३१ ॥
अध्वना दुर्विगाह्येन योजनानि चतुर्दश।
ततस्तमप्यतिक्रम्य वैद्युतो नाम पर्व्वतः ॥ ३२ ॥
सर्व्वकामफलैर्वृक्षैः सर्व्वकालमनोहरैः।
तत्र भुक्त्वा वरार्हाणि मूलानि च फलानि च ॥ ३३ ॥
मधूनि पीत्वा जुष्टानि परं गच्छत वानराः।
तत्र नेत्रमनःकान्तः कुञ्जरो नाम पर्व्वतः ॥ ३४ ॥
अगस्त्यभवनं यत्र निर्म्मितं विश्वकर्म्मणा।
तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् ॥ ३५ ॥

क्व मार्गणीया तत्राह,—सग्रीवानिति ॥ २८ ॥ २९ ॥

तस्य काञ्चनं शृङ्गमस्ति यं भगवान् सूर्य्यः सेवते नित्यं सन्निहितो भवति। शृङ्गशब्दोऽर्द्धर्चादिः। अतश्चन्द्रसूर्य्याधिष्ठितत्वात्तं कृतघ्ना न पश्यन्ति ॥ ३० ॥ ३१ ॥

चतुर्दशेति। तैरुपलक्षित इत्यर्थः ॥ ३२ ॥ ३३ ॥ ३४ ॥

तत्र कुञ्जरपर्वते। अगस्त्यभुवनवर्णनं योजनेत्यादि। इदं तृतीयमागस्त्यस्थानम् ॥ ३५ ॥

शरणं काञ्चनं दिव्यं नानारत्नविभूषितम् ।
तत्र भोगवती नाम सर्पाणामालयः पुरी ॥ ३६ ॥
विशालरथ्या दुर्द्धर्षा सर्व्वतः परिरक्षिता ।
रक्षिता पन्नगैर्घोरैस्तीक्ष्णदंष्ट्रैर्महाविषैः ॥ ३७ ॥
सर्पराजो महाघोरो यस्यां वसति वासुकिः ।
निर्य्याय मार्गितव्या च सा च भोगवती पुरी ॥ ३८ ॥
तत्र चानन्तरोद्देशा ये केचन समावृताः ।
तञ्च देशमतिक्रम्य महानृषभसंस्थितिः ॥ ३९ ॥
सर्व्वरत्नमयः श्रीमानृषभो नाम पर्व्वतः ।
गोशीर्षकं पद्मकञ्च हरिश्यामञ्च चन्दनम् ॥ ४० ॥
दिव्यमुत्पद्यते यत्र तच्चैवाग्निसमप्रभम् ।

शरणं गृहमगस्त्यस्येति शेषः । तत्र कुञ्जरपर्वत एव । आलय-शब्दो नित्यं पुल्लिङ्गः । यद्यपि भोगवती रसातले प्रसिद्धा तथापि रावणस्य जनस्थानवत् सर्पाणामपि भोगवत्याख्यपुरं भूमावप्यस्तीति वासुकेर्भुत्र उभयत्रापि योगवैभवात् स्थितिरिति चेत एवावगन्तव्यं यथा-गस्त्यस्य कुञ्जरपर्वतावच्छिन्ने विश्वकर्मनिर्मितभवने नक्षत्रपदे मलये पञ्चवटीदक्षिणभागे च वासस्तथेति ध्येयम् । निर्य्याय विशेषतो गत्वा ॥ ३६ ॥ ३७ ॥ ३८ ॥

समावृताः गुप्तास्ते च मार्गितव्याः ऋषभसंस्थितिः ऋषभाकार-संस्थानवान् ॥ ३९ ॥

न तु तच्चन्दनं दृष्ट्वा प्रष्टव्यन्तु कदाचन ॥ ४१ ॥
रोहिता नाम गन्धर्व्वा घोरं रचन्ति तद्वनम्।
तत्र गन्धर्वपतयः पञ्चसूर्य्यसमप्रभाः ॥ ४२ ॥
शैलूषो ग्रामणीः शिचः शुको बभ्रुस्तथैव च।
रविसोमाग्निवपुषां निवासः पुण्यकर्म्मणाम् ॥ ४३ ॥
अन्ते पृथिव्या दुर्द्धर्षास्ततः स्वर्गजितः स्थिताः।
ततः परं न वः सेव्यः पितृलोकः सुदारुणः ॥ ४४ ॥
राजधानी यमस्यैषा कष्टेन तमसावृता।
एतावदेव युष्माभिर्वीरवानरपुङ्गवाः।
शक्यं विचेतुं गन्तुं वा नातो गतिमतां गतिः ॥ ४५ ॥
सर्वमेतत् समालोक्य यच्चान्यदपि दृश्यते।
गतिं विदित्वा वैदेह्याः सन्निवर्त्तितुमर्हथ ॥ ४६ ॥
यश्च मासान्निवृत्तोऽग्रे दृष्टा सीतेति वक्ष्यति।
मत्तुल्यविभवो भोगैः सुखं स विहरिष्यति ॥ ४७ ॥
ततः प्रियतरो नास्ति मम प्राणाद्विशेषतः।

गोशीर्षकादयश्चन्दनभेदाः ॥ ४० ॥ ४१ ॥

तच्चन्दनास्पृष्टत्वे हेतुः रोहिता इति ॥ ४२ ॥

तत ऋषभात्परतः पृथिव्या अन्ते पुण्यकर्मणां निवासः। तत्र स्वर्गजित एव स्थिता भवन्ति। अतोहेतोस्ततः परं पितृलोको न सेव्यः अगम्यः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

कृतापराधो बहुशो मम बन्धुर्भविष्यति ॥ ४८ ॥

अमितबलपराक्रमा भवन्तो
विपुलगुणेषु कुलेषु च प्रसूताः ।
मनुजपतिसुतां यथा लभध्वं
तदधिगुणं पुरुषार्थमारभध्वम् ॥ ४९ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
एकचत्वारिंशः सर्गः ॥ ४१ ॥

बहुशः कृतापराधोऽपीत्यर्थः ॥ ४८ ॥

लभध्वं लप्स्यध्वम् । तथा तत्कार्यमुद्दिश्याधिगुणमधिकगुणोपेतं पुरुषार्थं पुरुषयत्नमारभध्वम् ॥ ४९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

## द्विचत्वारिंशः सर्गः ।

अथ प्रस्थाप्य स हरीन् सुग्रीवो दक्षिणां दिशम् ।
अब्रवीन् मेघसङ्काशं सुषेणं नाम वानरम् ॥ १ ॥
तारायाः पितरं राजा श्वशुरं भीमविक्रमम् ।
अब्रवीत् प्राञ्जलिर्वाक्यमभिगम्य प्रणम्य च ॥ २ ॥
महर्षिपुत्रं मारीचमर्चिष्मन्तं महाकपिम् ।
वृतं कपिवरैः शूरैर्महेन्द्रसदृशद्युतिम् ॥ ३ ॥
बुद्धिविक्रमसम्पन्नं वैनतेयसमद्युतिम् ।
मरीचिपुत्रान् मारीचानर्चिर्माल्यान् महाबलान् ॥ ४ ॥
ऋषिपुत्रांश्च तान् सर्व्वान् प्रतीचीमादिशद्दिशम् ।
द्वाभ्यां शतसहस्राभ्यां कपीनां कपिसत्तमाः ॥ ५ ॥

अथेति ॥ १ ॥

श्वशुरत्वात् प्राञ्जलिः प्रणम्याब्रवीत् । एतद्विशेषकथनायैव पुनरब्रवीदित्युक्तिः ॥ २ ॥

महर्षिपुत्रं मारीचं महर्षेर्मरीचेः पुत्रं अर्चिष्मन्तम् अर्चिष्मदाख्यम् । अयं तेषु प्रधानः अर्चिर्माल्याख्या अन्येऽपि मरीचिपुत्राः ॥ ३ ॥

मारीचशब्दस्य उत्पत्त्यन्तरसम्भवान् मरीचिपुत्रानित्युक्तम् ॥ ४ ॥५ ॥

सुषेणप्रमुखा यूयं वैदेहीं परिमार्गथ ।
सौराष्ट्रान् सह बाह्लीकान् चन्द्रचित्रांस्तथैव च ॥ ६ ॥
स्फीतान् जनपदान् रम्यान् विपुलानि पुराणि च ।
पुन्नागगहनं कुक्षिं बकुलोद्दालकाकुलम् ॥ ७ ॥
तथा केतकखण्डांश्च मार्गध्वं हरिपुङ्गवाः ! ।
प्रत्यक्स्रोतोवहाश्चैव नद्यः शीतजलाः शिवाः ॥ ८ ॥
तापसानामरण्यानि कान्तारगिरयश्च ये ।
तत्र स्थलीर्मरुप्राया अत्युच्चशिशिराः शिलाः ॥ ९ ॥
गिरिजालावृतां दुर्गां मार्गित्वा पश्चिमां दिशम् ।
ततः पश्चिममागम्य समुद्रं द्रष्टुमर्हथ ॥ १० ॥
तिमिनक्राकुलजलं गत्वा द्रक्ष्यथ वानराः ! ।
ततः केतकखण्डेषु तमालगहनेषु च ॥ ११ ॥

परिमार्गथ मार्गध्वम् । चन्द्रचित्रानिति । शूरान् भीमानिति पाठान्तरम् । देशविशेषा इमे ॥ ६ ॥

विपुलानि विशालानि । कुक्षिर्देशविशेषः ॥ ७ ॥

प्रत्यक्स्रोतोवहाः पश्चिमाभिमुखप्रवाहाः ॥ ८ ॥

कान्तारगिरयः कान्तारयुक्ता गिरयः । स्थली अकृत्रिमा भूः शिशिराः शीतलाः ॥ ९ ॥

तत्रादर्शने ततः किञ्चित्पश्चिमं गत्वा समुद्रं द्रष्टुमर्हथ तत्र समुद्रं द्रक्ष्यथेति निश्चय एव ॥ १० ॥

कपयो विहरिष्यन्ति नारिकेलवनेषु च।
तत्र सीताञ्च मार्गध्वं निलयं रावणस्य च ॥ १२ ॥
वेलातलनिविष्टेषु पर्व्वतेषु वनेषु च।
मुरचीपत्तनञ्चैव रम्यञ्चैव जटापुरम् ॥ १३ ॥
अवन्तीमङ्गलपाञ्च तथा चालक्षितं वनम्।
राष्ट्राणि च विशालानि पत्तनानि ततस्ततः ॥ १४ ॥
सिन्धुसागरयोश्चैव सङ्गमे तत्र पर्व्वतः।
महान् सोमगिरिर्नाम शतशृङ्गो महाद्रुमः ॥ १५ ॥
तत्र प्रस्थेषु रम्येषु सिंहाः पक्षगमाः स्थिताः।
तिमिमत्स्यगजांश्चैव नीड़ान्यारोपयन्ति ते ॥ १६ ॥
तानि नीड़ानि सिंहानां गिरिशृङ्गगताश्च ये।
दृप्तास्तृप्ताश्च मातङ्गास्तोयदस्वननिस्वनाः ॥ १७ ॥
विचरन्ति विशालेऽस्मिन् तोयपूर्णे समन्ततः।
तस्य शृङ्गं दिवस्पर्शं काञ्चनं चित्रपादपम् ॥ १८ ॥

कपयो भवत्सैनिकाः ॥ ११ ॥ १२ ॥ १३ ॥

अवन्त्यङ्गलेपे पुर्य्यौ। आलक्षिताख्यं वनम् ॥ १४ ॥

महाद्रुमः महान्तो द्रुमा यस्मिन् सः ॥ १५ ॥

सिंहास्तदाख्याः पक्षगमाः पक्षिणः स्थिताः ते पक्षिणः तिमिमत्स्यगजान् नीड़ानि स्ववासस्थानान्यारोपयन्ति प्रापयन्ति ॥ १६ ॥ १७ ॥

तोयपूर्णे प्रस्थे ॥ १८ ॥

सर्व्वमाशु विचेतव्यं कपिभिः कामरूपिभिः ।
कोटिं तत्र समुद्रस्य काञ्चनीं शतयोजनाम् ॥ १९ ॥
दुर्दर्शां पारियात्रस्य गत्वा द्रक्ष्यथ वानराः ।
कोव्यस्तत्र चतुर्विंशत् गन्धर्व्वाणां तपस्विनाम् ॥ २० ॥
वसन्त्यग्निनिकाशानां घोराणां पापकर्म्मणाम् ।
पावकार्च्चिःप्रतीकाशाः समवेताः समन्ततः ॥ २१ ॥
नात्यासादयितव्यास्ते वानरैर्भीमविक्रमैः ।
नादेयञ्च फलं तस्मात् देशात् किञ्चित् प्लवङ्गमैः ॥ २२ ॥
दुरासदा हि ते वीराः सत्ववन्तो महाबलाः ।
फलमूलानि ते तत्र रचन्ते भीमविक्रमाः ॥ २३ ॥
तत्र यत्नश्च कर्त्तव्यो मार्गितव्या च जानकी ।
न हि तेभ्यो भयं किञ्चित् कपित्वमनुवर्त्तताम् ॥ २४ ॥

कोटिं शृङ्गं समुद्रस्य मध्ये इति शेषः ॥ १९ ॥ २० ॥

घोराणामतएव पापकर्म्मणां संहर्तृणाम् । पावकार्च्चिःप्रतीकाशाः कोव्यः समवेता इत्यन्वयः ॥ २१ ॥

नात्यासादयितव्याः न द्रष्टव्या नापराद्धव्या वा नादेयं न ग्राह्यम् ॥ २२ ॥ २३ ॥

यत्नः कर्त्तव्यो मार्गणे इति शेषः । ननु पापकारित्वात्तदनासादने कथं तत्र मार्गणसम्भवोऽत आह,—नहि तेभ्य इति । तद्देशो मृग-पच्यादिवत् प्राकृतमृगस्वभावे तिष्ठतामित्यर्थः । अतएव नापराद्धव्या इति पूर्व्वं व्याख्यानम् ॥ २४ ॥

तत्र वैदूर्य्यवर्णाभो वज्रसंस्थानसंस्थितः।
नानाद्रुमलताकीर्णो वज्रो नाम महागिरिः॥ २५॥
श्रीमान् समुदितस्तत्र योजनानां शतं समम्।
गुहास्तत्र विचेतव्याः प्रयत्नेन प्लवङ्गमाः!॥ २६॥
चतुर्भागे समुद्रस्य चक्रवान् नाम पर्व्वतः।
तत्र चक्रं सहस्रारं निर्म्मितं विश्वकर्म्मणा॥ २७॥
तत्र पञ्चजनं हत्वा हयग्रीवञ्च दानवम्।
आजहार ततश्चक्रं शङ्खञ्च पुरुषोत्तमः॥ २८॥
तत्र सानुषु रम्येषु विशालासु गुहासु च।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः॥ २९॥
योजनानि चतुःषष्टिर्वराहो नाम पर्व्वतः।
सुवर्णशृङ्गः सुमहानगाधे वरुणालये॥ ३०॥
तत्र प्राग्ज्योतिषं नाम जातरूपमयं पुरम्।

वैदूर्य्यवर्णा आभा च यस्य सः। वज्रवत् कठिनसंस्थानेन संस्थितः॥ २५॥

समुदितः प्रतिष्ठितः। समम् आयामतो विस्तारतश्च शतयोजन इत्यर्थः॥ २६॥

चतुर्भागे चतुर्थभागे गत इति शेषः॥ २७॥

तत्र चक्रवत्पर्वते पञ्चजनं तदाख्यम्। हयस्येव ग्रीवा यस्य तञ्च॥ २८॥ २९॥ ३०॥

तस्मिन् वसति दुष्टात्मा नरको नाम दानवः ॥ ३१ ॥
तत्र सानुषु रम्येषु विशालासु गुहासु च।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३२ ॥
तमतिक्रम्य शैलेन्द्रं काञ्चनान्तरदर्शनम्।
पर्व्वतः सर्व्वसौवर्णो धाराप्रस्रवणायुतः ॥ ३३ ॥
तं गजाश्च वराहाश्च सिंहा व्याघ्राश्च सर्व्वतः।
अभिगर्जन्ति सततं तेन शब्देन दर्पिताः ॥ ३४ ॥
यस्मिन् हरिहयः श्रीमान् महेन्द्रः पाकशासनः।
अभिषिक्तः सुरै राजा मेघो नाम स पर्व्वतः ॥ ३५ ॥
तमतिक्रम्य शैलेन्द्रं महेन्द्रपरिपालितम्।
षष्टिं गिरिसहस्राणि काञ्चनानि गमिष्यथ ॥ ३६ ॥
तरुणादित्यवर्णानि भ्राजमानानि सर्व्वशः।
जातरूपमयैर्वृक्षैः शोभितानि सुपुष्पितैः ॥ ३७ ॥
तेषां मध्ये स्थितो राजा मेरुरुत्तमपर्व्वतः।

तत्र वराहपर्वते। जातरूपं स्वर्णम् ॥ ३१ ३२ ॥

काञ्चनान्तरदर्शनं काञ्चनगर्भा अन्तरा निर्दरा यस्मिन् तस्य दर्शनं भविष्यतीति शेषः ॥ ३३ ॥

तं प्राप्य स्थिता गजादयस्तेन शब्देन स्वध्वनिजप्रतिध्वनितशब्देन दर्पिताः सर्वतोऽभिगर्जन्ति ॥ ३४ ॥

सः सौवर्ण इति उक्तः ॥ ३५ ॥ ३६ ॥ ३७ ॥

आदित्येन प्रसन्नेन शैलो दत्तवरः पुरा ॥ ३८ ॥
तेनैवमुक्तः शैलेन्द्रः सर्व्वे एव त्वदाश्रयाः ।
मत्प्रसादाद्भविष्यन्ति दिवारात्रौ च काञ्चनाः ॥ ३९ ॥
त्वयि ये चापि वत्स्यन्ति देवगन्धर्व्वदानवाः ।
ते भविष्यन्ति भक्ताश्च प्रभया काञ्चनप्रभाः ॥ ४० ॥
विश्वेदेवाश्च वसवो मरुतश्च दिवौकसः ।
आगत्य पश्चिमां सन्ध्यां मेरुमुत्तमपर्व्वतम् ॥ ४१ ॥
आदित्यमुपतिष्ठन्ति तैश्च सूर्य्योऽभिपूजितः ।
अदृश्यः सर्व्वभूतानामस्तं गच्छति पर्वतम् ॥ ४२ ॥
योजनानां सहस्राणि दश तानि दिवाकरः ।
मुहूर्त्तार्द्धेन तं शीघ्रम् अभियाति शिलोच्चयम् ॥ ४३ ॥

तेषां षष्टिसहस्रपर्वतानां मध्ये राजेव मेरुवत् काञ्चनः पर्वतोऽस्ति एनं सावर्णिमेरुरिति वदन्ति ॥ ३८ ॥

कीदृशो वरस्तत्राह,—तेनैवमिति । आदित्येन एवमुक्त इत्येवं शब्दार्थः । सर्वं एवेति ॥ ३९ ॥

ते भक्ता मयीति शेषः काञ्चनप्रभाश्च भविष्यन्ति ॥ ४० ॥

विश्वेदेवादयस्तमुत्तमपर्वतं मेरुं सावर्णिमेरुमागत्य तत्र स्थित्वा पश्चिमां सन्ध्यां प्राप्य आदित्यमुपतिष्ठन्ति इत्यग्रिमेणान्वयः ॥ ४१ ॥

इतः पूर्वभागस्था अनुक्ता अपि द्वीपा विचेतव्या इत्यर्थतः सिद्धम् ॥ ४२ ॥

पृष्ठे तस्य महद्दिव्यं भवनं सूर्य्यसन्निभम् ।
प्रासादगणसम्बाधं विहितं विश्वकर्म्मणा ॥ ४४ ॥
शोभितं तरुभिश्चित्रैर्नानापक्षिसमाकुलैः ।
निकेतं पाशहस्तस्य वरुणस्य महात्मनः ॥ ४५ ॥
अन्तरा मेरुमस्तञ्च तालो दशशिरा महान् ।
जातरूपमयः श्रीमान् भ्राजते चित्रवेदिकः ॥ ४६ ॥
तेषु सर्वेषु दुर्गेषु सरःसु च सरित्सु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ४७ ॥
यत्र तिष्ठति धर्म्मज्ञस्तपसा स्वेन भावितः ।
मेरुसावर्णिरित्येष ख्यातो वै ब्रह्मणा समः ॥ ४८ ॥
प्रष्टव्यो मेरुसावर्णिर्महर्षिः सूर्य्यसन्निभः ।
प्रणम्य शिरसा भूमौ प्रवृत्तिं मैथिलीं प्रति ॥ ४९ ॥
एतावज्जीवलोकस्य भास्करो रजनीक्षये ।

ततःपरं दशयोजनसहस्रेऽस्ताचल इत्याह,—योजनानामिति । तान्यु क्तसंख्यायोजनानि अतीत्येति शेषः । मुहूर्त्तार्द्धमेकाघटीतया तं शिलोच्चयमस्तमभियाति ॥ ४३ ॥

अथ वरुणपुरवर्णनम् । पृष्ठेति ॥ ४४ ॥ ४५ ॥

दशशिराः दशस्कन्धः ॥ ४६ ॥ ४७ ॥

यत्र मेरौ ब्रह्मणासमः महामेरुवर्त्तिप्रजापतिसमः ॥ ४८ ॥

मैथिलीं प्रति प्रवृत्तिं मैथिलीसम्बन्धि प्रवृत्तिं प्रष्टव्य इत्यन्वयः ॥ ४९ ॥

हत्वा वितिमिरं सर्वमस्तं गच्छति पर्वतम् ॥ ५० ॥
एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ।
अभास्करममर्य्यादं न जानीमस्ततःपरम् ॥ ५१ ॥
अवगम्य तु वैदेहीं निलयं रावणस्य च ।
अस्तं पर्वतमासाद्य पूर्णे मासे निवर्त्तत ॥ ५२ ॥
ऊर्द्ध्वं मासान्न वस्तव्यं वसन् बध्यो भवेन्मम ।
सहैव शूरो युष्माभिः श्वशुरो मे गमिष्यति ॥ ५३ ॥
श्रोतव्यं सर्वमेतस्य भवद्भिर्दिष्टकारिभिः ।
गुरुरेष महाबाहुः श्वशुरो मे महाबलः ॥ ५४ ॥
भवन्तश्चापि विक्रान्ताः प्रमाणं सर्व एव हि ।
प्रमाणमेनं संस्थाप्य पश्यद्ध्वं पश्चिमां दिशम् ॥ ५५ ॥
कृतकृत्या भविष्यामः कृतस्य प्रतिकर्म्मणा ।
अतोऽन्यदपि यत्कार्य्यं कार्य्यस्यास्य प्रियं भवेत् ।
सम्प्रधार्य्य भवद्भिश्च देशकालार्थसंहितम् ॥ ५६ ॥

एतावत् उदयाचलमारभ्य मेरुसावर्णिपर्य्यन्तम् ॥ ५० ॥ ५१ ॥
निवर्त्तत निवर्त्तद्ध्वम् ॥ ५२ ॥ ५३ ॥
दिष्टं सन्दिष्टम् ॥ ५४ ॥
प्रमाणं कर्त्तव्याकर्त्तव्यनिश्चायकाः । अथापि एनं सुषेणं विशिष्य-
प्रमाणं संस्थाप्य ॥ ५५ ॥

ततः सुषेणप्रमुखाः प्लवङ्गमाः
सुग्रीववाक्यं निपुणं निशम्य ।
आमन्त्र्य सर्वं प्लवगाधिपास्ते
जग्मुर्दिशं तां वरुणाभिगुप्ताम् ॥ ५७ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
द्विचत्वारिंशः सर्गः ॥ ४२ ॥

कृतस्य प्रतिकर्मणा उपकारप्रत्युपकारेण । अस्य कार्य्यस्येति रावणवधान्तरामकार्य्यस्येत्यर्थः ॥ ५६ ॥ ५७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धा-
काण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

# त्रिचत्वारिंशः सर्गः ।

ततः सन्दिश्य सुग्रीवः श्वशुरं पश्चिमां दिशम् ।
वीरं शतबलं नाम वानरं वानरेश्वरः ॥ १ ॥
उवाच राजा सर्व्वज्ञः सर्व्ववानरसत्तमः ।
वाक्यमात्महितञ्चैव रामस्य च हितं तदा ॥ २ ॥
वृतः शतसहस्रेण त्वद्विधानां वनौकसाम् ।
वैवस्वतसुतैः सार्द्धं प्रविष्टः सर्व्वमन्त्रिभिः ॥ ३ ॥
दिशं ह्युदीचीं विक्रान्त ! हिमशैलावतंसिकाम् ।
सर्व्वतः परिमार्गध्वं रामपत्नीं यशस्विनीम् ॥ ४ ॥
अस्मिन् कार्य्ये विनिर्वृत्ते कृते दाशरथेः प्रिये ।
ऋणान् मुक्ता भविष्यामः कृतार्थार्थविदां वर ! ॥ ५ ॥

तत इति ॥ १ ॥

सर्वज्ञः देशवृत्ताभिज्ञः ॥ २ ॥

वैवस्वतसुतैर्यमसुतैः ॥ ३ ॥

विक्रान्तेति शतबलस्य सम्बुद्धिः । सर्वत इति सामान्यतो नियोगः ॥ ४ ॥

विनिर्वृत्ते विशेषेणानुष्ठिते । कृतार्थाः कृतकृत्याः । अर्थविदां लब्धाभीष्टानां सन्निधरार्थः ॥ ५ ॥

कृतं हि प्रियमस्माकं राघवेण महात्मना।
तस्य चेत् प्रतिकारोऽस्ति सफलं जीवितं भवेत्॥ ६॥
अर्थिनः कार्य्यनिर्वृत्तिमकर्त्तुरपि यश्चरेत्।
तस्य स्यात् सफलं जन्म किं पुनः पूर्व्वकारिणः॥ ७॥
एतां बुद्धिं समास्थाय दृश्यते जानकी यथा।
तथा भवद्भिः कर्त्तव्यमस्मत् प्रियहितैषिभिः॥ ८॥
अयं हि सर्व्वभूतानां मान्यस्तु नरसत्तमः।
अस्मासु च गतः प्रीतिं रामः परपुरञ्जयः॥ ९॥
इमानि बहुदुर्गाणि नद्यः शैलान्तराणि च।
भवन्तः परिमार्गन्तु बुद्धिविक्रमसम्पदा॥ १०॥
तत्र म्लेच्छान् पुलिन्दांश्च शूरसेनांस्तथैव च।
प्रस्थलान् भरतांश्चैव कुरूंश्च सह मद्रकैः॥ ११॥
काम्बोजयवनांश्चैव शकानां पत्तनानि च।
अन्वीक्ष्य वरदांश्चैव हिमवन्तं विचिन्वथ॥ १२॥
लोध्रपद्मकखण्डेषु देवदारुवनेषु च।

अस्ति क्रियेत॥ ६॥

अर्थिनः स्वस्मात्प्रयोजनार्थिनः कार्य्यनिर्वृत्तिं तत्प्रयोजनानुष्ठानम्। अकर्त्तुः पूर्वमुपकाराकर्त्तुरपि यश्चरेत् कुर्य्यात्॥ ७॥ ८॥ ९॥

इमानि वक्ष्यमाणानि॥ १०॥

प्रस्थला भरताश्च देशविशेषाः। कुरून् दक्षिणकुरून्॥ ११॥ १२॥

रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १३ ॥
ततः सोमाश्रमं गत्वा देवगन्धर्व्वसेवितम् ।
कालं नाम महासानुं पर्व्वतन्तं गमिष्यथ ॥ १४ ॥
महत्सु तस्य शैलेषु पर्व्वतेषु गुहासु च ।
विचिन्वत महाभागां रामपत्नीमनिन्दिताम् ॥ १५ ॥
तमतिक्रम्य शैलेन्द्रं हेमगर्भं महागिरिम् ।
ततः सुदर्शनं नाम पर्व्वतं गन्तुमर्हथ ॥ १६ ॥
ततो देवसखा नाम पर्व्वतः पतगालयः ।
नानापक्षिसमाकीर्णो विविधद्रुमभूषितः ॥ १७ ॥
तस्य काञ्चनखण्डेषु निर्दरेषु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १८ ॥
तमतिक्रम्य चाकाशं सर्व्वतः शतयोजनम् ।
अपर्वतनदीवृचं सर्वसत्वविवर्जितम् ॥ १९ ॥

सोमाश्रमकखण्डेषु हैमवतेष्विति शेषः ॥ १३ ॥
तं कालाख्यं पर्वतम् ॥ १४ ॥
तस्य शैलेषु गण्डपर्वतेषु पर्वतेषु ततो महत्सु तेषु ॥ १५ ॥
तं कालपर्वतम् ॥ १६ ॥
ततः सुदर्शनात् परतः पतगाः पक्षिणः ॥ १७ ॥ १८ ॥
तं देवसखपर्वतमतिक्रम्य आकाशं शून्यदेशम्। शून्यत्वोपपादक-मपर्वतेत्यादि ॥ १९ ॥

तत्तु शीघ्रमतिक्रम्य कान्तारं रोमहर्षणम् ।
कैलासं पाण्डुरं प्राप्य हृष्टा यूयं भविष्यथ ॥ २० ॥
तत्र पाण्डुरमेघाभं जाम्बूनदपरिष्कृतम् ।
कुवेरभवनं रम्यं निर्म्मितं विश्वकर्म्मणा ॥ २१ ॥
विशाला नलिनी यत्र प्रभूतकमलोत्पला ।
हंसकारण्डवाकीर्णा अप्सरोगणसेविता ॥ २२ ॥
तत्र वैश्रवणो राजा सर्वलोकनमस्कृतः ।
धनदो रमते श्रीमान् गुह्यकैः सह यक्षराट् ॥ २३ ॥
तस्य चन्द्रनिकाशेषु पर्वतेषु गुहासु च ।
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २४ ॥
क्रौञ्चन्तु गिरिमासाद्य बिलं तस्य सुदुर्गमम् ।
अप्रमत्तैः प्रवेष्टव्यं दुष्प्रवेशं हि तत् स्मृतम् ॥ २५ ॥
वसन्ति हि महात्मानस्तत्र सूर्य्यसमप्रभाः ।
देवैरभ्यर्थिताः सम्यग्देवरूपा महर्षयः ॥ २६ ॥
क्रौञ्चस्य तु गुहा चान्याः सानूनि शिखराणि च ।

कान्तारम् अपर्वतवनत्वादिना रोमहर्षणं भयङ्करत्वात् ॥ २० ॥ २१ ॥
नलिनी सरसी ॥ २२ ॥ २३ ॥
तस्य कैलासस्य पर्वतेषु गण्डपर्वतेषु ॥ २४ ॥
तस्य क्रौञ्चस्य बिलं स्कन्दशक्तिकृतं विवरम् ॥ २५ ॥

दर्दराश्च नितम्बाश्च विचेतव्यास्ततस्ततः ॥ २७ ॥
अवृत्तं कामशैलञ्च मानसं विहगालयम् ।
न गतिस्तत्र भूतानां देवानां न च रक्षसाम् ॥ २८ ॥
स च सर्वैर्विचेतव्यः ससानुप्रस्थभूधरः ।
क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम पर्वतः ॥ २९ ॥
मयस्य भवनं तत्र दानवस्य स्वयं कृतम् ।
मैनाकस्तु विचेतव्यः ससानुप्रस्थकन्दरः ॥ ३० ॥
स्त्रीणामश्वमुखीनान्तु निकेतस्तत्र तत्र तु ।
तं देशं समतिक्रम्य आश्रमं सिद्धसेवितम् ॥ ३१ ॥
सिद्धा वैखानसा यत्र वालखिल्याश्च तापसाः ।
वन्दितव्यास्ततः सिद्धास्तपसा वीतकल्मषाः ॥ ३२ ॥
प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैः ।
हिमपुष्करसंछन्नं तत्र वैखानसं सरः ॥ ३३ ॥

तत्र क्रौञ्चगुहायाम् ॥ २६ ॥ २७ ॥

कामशैलं कामतपस्थानशैलं तद्विशेषणमवृत्तं मानसं तदाख्यं तत्र मानसपर्वते ॥ २८ ॥

स चेति क्रौञ्चपर्वत इत्यर्थः । सानूनि प्रस्थाश्च भूधराः पर्य्यन्तपर्वतास्तैः सहितः । मैनाक इति । मैनाकोऽयं समुद्रमग्नादन्यः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

वैखानसं वैखानसानामिदम् ॥ ३३ ॥



तरुणादित्यसङ्काशैर्हंसैर्विचरितं शुभैः ।
औपवाह्यः कुबेरस्य सार्वभौम इति स्मृतः ॥ ३४ ॥
गजः पर्य्येति तं देशं सदा सह करेणुभिः ।
तत्सरः समतिक्रम्य नष्टचन्द्रदिवाकरम् ।
अनक्षत्रगणं व्योम निष्पयोदमनादितम् ॥ ३५ ॥
गभस्तिभिरिवार्कस्य स तु देशः प्रकाश्यते ।
विश्राम्यद्भिस्तपःसिद्धैर्देवकल्पैः स्वयंप्रभैः ॥ ३६ ॥
तन्तु देशमतिक्रम्य शैलोदा नाम निम्नगा ।
उभयोस्तीरयोस्तस्याः कीचका नाम वेणवः ॥ ३७ ॥
ते नयन्ति परं तीरं सिद्धान् प्रत्यानयन्ति च ।

विचरितं सेवितम् औपवाह्यः वाहनम् ॥ ३४ ॥

तत्सरोऽतिक्रम्य वर्त्तमानं व्योम कियानवकाशः चन्द्रादिसर्वज्योतिर्गणप्रकाशरहितः ॥ ३५ ॥

नापि सान्धकार इत्याह,—गभस्तिभिरिवेति । चन्द्रादिज्योतींष्यभिभूय अर्कगभस्तिसदृशैः स्वीयगभस्तिभिः प्रकाश्यते । के ते यैः स्वगभस्तिभिः प्रकाश्यते तत्राह,—विश्राम्यद्भिरिति । सुखोपविष्टैः स्वतपःसिद्धैरतएव देवकल्पैः सूर्य्यादिदेवतुल्यैः स्वयंप्रभैश्च सूर्य्यादिवत्सदेशः प्रकाश्यते । यत्तु तत्र चन्द्रादीनां सञ्चाराभाव एवेति तन्न । अग्रे सुप्रसिद्धचन्द्रादिसञ्चारवदुत्तरकुरूणां तदूर्द्ध्वमुपदेशानुपपत्तेः ॥ ३६ ॥

निम्नगा अस्तीति शेषः । अन्तःसुषिरा वेणुः कीचकः ॥ ३७ ॥

उत्तरा: कुरवस्तत्र कृतपुण्यप्रतिश्रया: ॥ ३८ ॥

तत: काञ्चनपद्माभि: पद्मिनीभि: कृतोदका: ॥ ३९ ॥

नीलवैदूर्य्यपत्राढ्या नद्यस्तत्र सहस्रश: ।

रक्तोत्पलवनैश्चात्र मण्डिताश्च हिरण्मयै: ॥ ४० ॥

तरुणादित्यसङ्काशा भान्ति तत्र जलाशया: ।

महार्हमणिरत्नैश्च काञ्चनप्रभकेसरै: ॥ ४१ ॥

नीलोत्पलवनैश्चित्रै: स देश: सर्व्वतो वृत: ।

निस्तुलाभिश्च मुक्ताभिर्मणिभिश्च महाधनै: ॥ ४२ ॥

उद्भूतपुलिनास्तत्र जातरूपैश्च निम्नगा: ।

सर्व्वरत्नमयैश्चित्रैरवगाढ़ा नगोत्तमै: ॥ ४३ ॥

जातरूपमयैश्चापि हुताशनसमप्रभै: ।

नित्यपुष्पफलास्तत्र नगा: पत्ररथाकुला: ॥ ४४ ॥

परं तीरं शैलोदाया इति शेषः। कृतपुण्यानां प्रतिश्रयाः निवासभूताः ॥ ३८ ॥

पद्मिनीभिः सरसीभिः कृतोदकाः कृतोदककार्य्याः ॥ ३९ ॥

इत आरभ्योत्तरकुरुदेशस्य भोगभूमित्वकथनम्। दिव्यनद्योऽपि तत्र सन्तीत्याह,—नीलेत्यादि ॥ ४० ॥

जलाशयास्तडागादयः ॥ ४१ ॥

निस्तुलाभिर्वर्तुलाभिः। निस्तुलं वृत्तमित्यमरः ॥ ४२ ॥

जातरूपैः स्वर्णैरुद्भूतपुलिनादुन्नतपुलिनाः। नगोत्तमैः पर्व्वतैः अवगाढ़ा व्याप्ताः ॥ ४३ ॥

दिव्यगन्धरसस्पर्शाः सर्व्वकामान् स्रवन्ति च ।
नानाकाराणि वासांसि फलन्त्यन्ये नगोत्तमाः ॥ ४५ ॥
मुक्तावैदूर्य्यचित्राणि भूषणानि तथैव च ।
स्त्रीणां यान्यनुरूपाणि पुरुषाणां तथैव च ॥ ४६ ॥
सर्व्वर्त्तुसुखसेव्यानि फलन्त्यन्ये नगोत्तमाः ।
महार्हमणिचित्राणि फलन्त्यन्ये नगोत्तमाः ॥ ४७ ॥
शयनानि प्रसूयन्ते चित्रास्तरणवन्ति च ।
मनःकान्तानि माल्यानि फलन्त्यत्रापरे द्रुमाः ॥ ४८ ॥
पानानि च महार्हाणि भक्ष्याणि विविधानि च ।
स्त्रियश्च गुणसम्पन्ना रूपयौवनलक्षिताः ॥ ४९ ॥
गन्धर्व्वाः किन्नराः सिद्धा नागा विद्याधरास्तथा ।
रमन्ते सततं तत्र नारीभिर्भास्वरप्रभाः ॥ ५० ॥
सर्व्वे सुकृतकर्म्माणः सर्व्वे रतिपरायणाः ।
सर्व्वे कामार्थसहिता वसन्ति सहयोषितः ॥ ५१ ॥
गीतवादित्रनिर्घोषः सोत्कृष्टहसितस्वरैः ।
श्रूयते सततं तत्र सर्व्वभूतमनोरमः ॥ ५२ ॥

नगाः वृक्षाः पत्ररथैः पक्षिभिराकुला व्याप्ताः ॥ ४४ ॥ ४५ ॥

इत उत्तरं केचित् श्लोका रमन्ते सततं तत्र नारीभिर्भास्वरप्रभा इत्यन्ताः प्रक्षिप्ताः प्राचीनपुस्तकेष्वनुपलम्भादिति कतकः ॥ ४६ ॥ ४७ ॥ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

तत्र नासुदितः कश्चिन्नात्र कश्चिदसत्प्रियः।
अहन्यहनि वर्द्धन्ते गुणास्तत्र मनोरमाः ॥ ५३ ॥
तमतिक्रम्य शैलेन्द्रमुत्तरः पयसां निधिः।
तत्र सोमगिरिर्नाम मध्ये हेममयो महान् ॥ ५४ ॥
स तु देशो विसूर्य्योऽपि तस्य भासा प्रकाशते।
सूर्य्यलक्ष्म्याभिविज्ञेयस्तपतेव विवस्वता ॥ ५५ ॥
भगवांस्तत्र विश्वात्मा शम्भुरेकादशात्मकः।
ब्रह्मा वसति देवेशो ब्रह्मर्षिपरिवारितः ॥ ५६ ॥
न कथञ्चन गन्तव्यं कुरूणामुत्तरेण वः।

असदविद्यमानं प्रियं यस्य तादृशः ॥ ५३ ॥

अत्र सुमेर्वन्वेषणं नोक्तम्। तत्र रक्षसां वासासम्भवादित्याङ्कः। मध्ये उत्तरसमुद्रमध्ये ॥ ५४ ॥

स तु देशः विसूर्य्योऽपि सूर्य्यसञ्चाररहितोऽपि। तस्य भासा सोमगिरिप्रभया। तपता विवस्वता युक्त देश इव सूर्य्यलक्ष्म्या सूर्य्योपेतदेशश्रिया युक्तः प्रकाशते ॥ ५५ ॥

विश्वमतति व्याप्नोतीति विश्वात्मा व्यापकः तेन विष्णुरूपः विष्णुव्याप्तावित्यनुसारात्। स एव शम्भुः शम्भवत्यस्मात्स एवैकादशात्मकः एकादशानुवाकार्थैकादशरुद्रात्मकः स एव ब्रह्मा बृंहयत्वाज्जगत् स्रष्टृत्वात्। एवं रूपत्रयात्मा भगवान् तत्र सोमगिरौ कार्य्यब्रह्मलोकत्वाद्वसतीत्यर्थः ॥ ५६ ॥

अन्येषामपि भूतानां नानुक्रामति वै गतिः ॥ ५७ ॥
स हि सोमगिरिर्नाम देवानामपि दुर्गमः ।
तमालोक्य ततः क्षिप्रमुपावर्त्तितुमर्हथ ॥ ५८ ॥
एतावद्वानरैः शक्यं गन्तुं वानरपुङ्गवाः ! ।
अभास्करममर्य्यादं न जानीमस्ततःपरम् ॥ ५९ ॥
सर्व्वमेतद्विचेतव्यं यन्मया परिकीर्त्तितम् ।
यदन्यदपि नोक्तञ्च तत्रापि क्रियतां मतिः ॥ ६० ॥

ततः कृतं दाशरथेर्महत्प्रियं
महत्प्रियञ्चापि ततो मम प्रियम् ।
कृतं भविष्यत्यनिलानलोपमा !
विदेहजादर्शनजेन कर्म्मणा ॥ ६१ ॥
ततः कृतार्थाः सहिताः सबान्धवा
मयार्चिताः सर्व्वगुणैर्मनोरमैः ।

नानुक्रामति वै गतिः तस्य कार्य्यब्रह्मलोकत्वेन ब्रह्मर्षिव्यतिरिक्तस्य तत्रागतेर्ब्रह्मर्षिपदेन दहरादिमार्गेण ब्रह्मोपासका ऋषय उच्यन्ते ॥ ५७ ॥

तदाह,—देवानामपि दुर्गम इति ॥ ५८ ॥ ५९ ॥

तत्रापि मतिः क्रियतामिति अन्वेषणायेति भावः ॥ ६० ॥

प्रियमित्यस्य स्मर्त्येत्यादिः । विदेहजादर्शनजेन कर्मणा विदेहजादर्शनमुद्दिश्य जातेन कर्मणा अन्वेषणकर्मणेति यावत् ॥ ६१ ॥

चरिष्यथोर्व्वीं प्रतिशान्तशात्रवाः
सह प्रिया भूतधराः प्लवङ्गमाः ॥ ६२ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

भूतधराः भूतैः प्राणिभिर्ध्रियन्ते ते भूतधराः प्राणिभिरुपजीव्या इत्यर्थः ॥ ६२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

# चतुश्चत्वारिंशः सर्गः ।



विशेषेण तु सुग्रीवो हनूमत्यर्थमुक्तवान् ।
स हि तस्मिन् हरिश्रेष्ठे निश्चितार्थोऽर्थसाधने ॥ १ ॥
अब्रवीच्च हनूमन्तं विक्रान्तमनिलात्मजम् ।
सुग्रीवः परमप्रीतः प्रभुः सर्व्ववनौकसाम् ॥ २ ॥
न भूमौ नान्तरिक्षे वा नाम्बरे नामरालये ।
नाप्सु वा गतिसङ्गं ते पश्यामि हरिपुङ्गव ! ॥ ३ ॥
सासुराः सहगन्धर्व्वाः सनागनरदेवताः ।
विदिताः सर्व्वलोकास्ते ससागरधराधराः ॥ ४ ॥
गतिर्वेगश्च तेजश्च लाघवञ्च महाकपे ! ।

हनूमत्यर्थस्य सविशेषमुक्तौ हेतुः सहीति । अर्थसाधने तद्विषये निश्चितार्थः तादृशार्थतद्विषयकनिश्चयवान् ॥ १ ॥

उक्तिप्रकारं दर्शयति । अब्रवीच्चेति । सर्ववनौकसां मध्ये इति शेषः ॥ २ ॥

अन्तरिक्षं पृथिव्यासन्नपक्षिमार्गः । अम्बरं मेघमार्गः । अमरालयः स्वर्गः । गतिसङ्गं गतिप्रतिबन्धम् ॥ ३ ॥

सर्वलोकविशेषणं सासुरा इत्यादि ॥ ४ ॥

पितुस्ते सदृशं वीर! मारुतस्य महौजसः ॥ ५ ॥
तेजसा वापि ते भूतं न समं भुवि विद्यते।
तद्यथा लभ्यते सीता तत्त्वमेवानुचिन्तय ॥ ६ ॥
त्वय्येव हनुमन्नस्ति बलं बुद्धिः पराक्रमः।
देशकालानुवृत्तिश्च नयश्च नयपण्डित! ॥ ७ ॥
ततः कार्य्यसमासङ्गमवगम्य हनूमति।
विदित्वा हनुमन्तञ्च चिन्तयामास राघवः ॥ ८ ॥
सर्व्वथा निश्चितार्थोऽयं हनूमति हरीश्वरः।
निश्चितार्थतरश्चापि हनूमान् कार्य्यसाधने ॥ ९ ॥
तदेव प्रस्थितस्यास्य परिज्ञातस्य कर्म्मभिः।

लाघवं क्षिप्रकारित्वम् ॥ ५ ॥

भूतं प्राणी तत्तस्माद्यथा सीता लभ्यते तत् अर्थजातं त्वमेवानुचिन्तय ॥ ६ ॥

बलं शारीरं पराक्रम उत्साहः देशकालानुवृत्तिस्तदुचितकर्मानुष्ठानम्। नये नीतिशास्त्रे। पण्डितेति सम्बुद्धिः ॥ ७ ॥

तत एवं सुग्रीववचनात् कार्य्यसमासङ्गं कार्य्यसिद्धिसम्बन्धम् अवगम्य स्वयञ्च तत्सामर्थ्याद्यनुभवेन तस्मिन् कार्य्यसाधकत्वं विदित्वा चात्तदूरस्थदेश एव सीतां विदित्वा चिन्तयामास। अस्मिन् स्वकर्त्तव्यसमर्पणं युक्तमिति विचारयामास ॥ ८ ॥

चिन्ताप्रकारमाह,—सर्व्वथेति। निश्चितार्थः एतदर्थविषयकनिश्चयवान्। स्वतोऽप्ययमतिशयेन कार्य्यसाधने निश्चितार्थः ॥ ९ ॥

भर्त्रा परिगृहीतस्य ध्रुवः कार्य्यफलोदयः ॥ १० ॥
तं समीच्य महातेजा व्यवसायोत्तरं हरिम् ।
कृतार्थ इव संहृष्टः प्रहृष्टेन्द्रियमानसः ॥ ११ ॥
ददौ तस्य ततः प्रीतः स्वनामाङ्कोपशोभितम् ।
अङ्गुलीयमभिज्ञानं राजपुत्र्याः परन्तपः ॥ १२ ॥
अनेन त्वां हरिश्रेष्ठ ! चिह्नेन जनकात्मजा ।
मत्सकाशादनुप्राप्तमनुद्विग्नाऽनुपश्यति ॥ १३ ॥
व्यवसायश्च ते वीर ! सत्वयुक्तश्च विक्रमः ।
सुग्रीवस्य च सन्देशः सिद्धं कथयतीव मे ॥ १४ ॥
स तद्गृह्य हरिश्रेष्ठः कृत्वा मूर्ध्नि कृताञ्जलिः ।
वन्दित्वा चरणौ चैव प्रस्थितः प्लवगर्षभः ॥ १५ ॥

प्रस्थितस्य भर्त्रा प्रस्थापितस्य परिज्ञातस्य परीक्षितस्य परिगृहीतस्य श्रेष्ठतयेति शेषः । कार्य्यस्य फलोदयः सीतादर्शनप्राप्तिरूपः स ध्रुवो निश्चितार्थः ॥ १० ॥

व्यवसायोत्तरं कार्य्यसाधने श्रेष्ठं तं हरिं हनूमन्तं समीच्य प्रहृष्टेन्द्रियमानसो बभूव ॥ ११ ॥

ततो निश्चितकार्य्यसाधकत्वादेव हेतो राजपुत्र्याः अभिज्ञानं प्रत्यभिज्ञासाधनं ददौ ॥ १२ ॥ १३ ॥

तावत्पर्य्यन्तं मद्गमननिश्चयः कथमत आह,—व्यवसायश्चेति ॥ १४ ॥

तदभिज्ञानपदार्थम् ॥ १५ ॥

स तत्प्रकर्षन् हरीणां महद्बलं
बभूव वीरः पवनात्मजः कपिः।
गताम्बुदे व्योम्नि विशुद्धमण्डलः
शशीव नक्षत्रगणोपशोभितः ॥ १६ ॥
अतिबल ! बलमाश्रितस्तवाहं
हरिवरविक्रम ! विक्रमैरनल्पैः।
पवनसुत ! यथाऽधिगम्यते सा
जनकसुता हनुमंस्तथा कुरुष्व ॥ १७ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

स तत् हरीणां दीर्घाभाव आर्षः। महद्बलं प्रकर्षन् ॥ १६ ॥

हरिवरविक्रम श्रेष्ठसिंहविक्रम अतिबल पवनसुत हनूमन्। तवैव बलमाश्रितोऽहमस्मि अतोऽनल्पैर्विक्रमैर्जनकसुता यथाऽधिगम्यते तथा कुरुष्व इत्यब्रवीदिति शेषः। रामसुग्रीवयोः साधारणमिदं वचः ॥ १७ ॥
[ कतकेन तु चतुस्त्रिंशत्संख्यश्लोकः सर्गोऽयमुक्तः। ]

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

# पञ्चचत्वारिंशः सर्गः ।



सर्व्वांश्चाहूय सुग्रीवः प्लवगान् प्लवगर्षभः ।
समस्तांश्चाब्रवीद्राजा रामकार्य्यार्थसिद्धये ॥ १ ॥
एवमेतद्विचेतव्यं भवद्भिर्वानरोत्तमैः ।
तदुग्रशासनं भर्त्तुर्विज्ञाय हरिपुङ्गवाः ॥ २ ॥
शलभा इव संछाद्य मेदिनीं संप्रतस्थिरे ।
रामः प्रस्रवणे तस्मिन् न्यवसत्सहलक्ष्मणः ॥ ३ ॥
प्रतीक्षमाणस्तं मासं सीताधिगमने कृतः ।
उत्तरां तु दिशं रम्यां गिरिराजसमावृताम् ॥ ४ ॥
प्रतस्थे सहसा वीरो हरिः शतबलिस्तदा ।
पूर्व्वां दिशं प्रति ययौ विनतो हरियूथपः ॥ ५ ॥
ताराङ्गदादिसहितः प्लवगः पवनात्मजः ।
अगस्त्याचरितामाशां दक्षिणां हरियूथपः ॥ ६ ॥
पश्चिमाञ्च दिशं घोरां सुषेणः प्लवगेश्वरः ।

सर्वानिति ॥ १ ॥
उक्तप्रकार एवमिति ॥ २ ॥
प्राप्तनियोगानामुद्योगः । शलभा इवेति ॥ ३ ॥

प्रतस्थे हरिशार्दूलो दिशं वरुणपालिताम् ॥ ७ ॥
ततः सर्व्वा दिशो राजा चोदयित्वा यथातथम्।
कपिसेनापतिर्वीरो मुमोद सुखितः सुखम् ॥ ८ ॥
एवं सञ्चोदिताः सर्व्वे राज्ञा वानरयूथपाः।
स्वां स्वां दिशमभिप्रेत्य त्वरिताः संप्रतस्थिरे ॥ ९ ॥
नदन्तश्चोन्नदन्तश्च गर्जन्तश्च प्लवङ्गमाः।
च्वेडन्तो धावमानाश्च विनदन्तो महाबलाः ॥ १० ॥
एवं सञ्चोदिताः सर्व्वे राज्ञा वानरयूथपाः।
आनयिष्यामहे सीतां हनिष्यामश्च रावणम् ॥ ११ ॥
अहमेको वधिष्यामि प्राप्तं रावणमाहवे।
ततश्चोन्मथ्य सहसा हरिष्ये जनकात्मजाम् ॥ १२ ॥
वेपमानां श्रमेणाद्य भवद्भिः स्थीयतामिति।
एकएवाहरिष्यामि पातालादपि जानकीम् ॥ १३ ॥
विधमिष्याम्यहं वृक्षान् दारयिष्याम्यहं गिरीन्।
धरणीं दारयिष्यामि चोभयिष्यामि सागरान् ॥ १४ ॥

यः सीताभ्यधिगमे तद्वृत्तान्तज्ञानेऽवधिभूतः कृतस्तं मासमित्यन्वयः। गिरिराजो हिमालयः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥
यथातथं यथायोग्यमित्यर्थः। मुमोद चिक्रीड़ ॥ ८ ॥
अभिप्रेत्य उद्दिश्य। नादादयः शब्दावान्तरभेदाः ॥ ९ ॥ १० ॥
आनयिष्यामहे इत्यादेरूचुरित्यनेनान्वयः ॥ ११ ॥ १२ ॥

अहं योजनसंख्यायाः प्लवेयं नात्र संशयः ।
शतयोजनसंख्यायाः शतं समधिकं ह्यहम् ॥ १५ ॥
भूतले सागरे वापि शैलेषु च वनेषु च ।
पातालस्यापि वा मध्ये न ममाच्छिद्यते गतिः ॥ १६ ॥
इत्येकैकस्तदा तत्र वानरा बलदर्पिताः ।
ऊचुश्च वचनं तस्य हरिराजस्य सन्निधौ ॥ १७ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

अमेण वेपमानामिति । जनकजाविशेषणम् ॥ १३ ॥ १४ ॥
अहं योजनेत्येकस्य वाक्यम् । शतयोजनेत्यन्यस्य ॥ १५ ॥ १६ ॥
एकैकः एकश इत्यर्थः ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धा-
काण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

———— ————

# षट्चत्वारिंशः सर्गः ।

गतेषु वानरेन्द्रेषु रामः सुग्रीवमब्रवीत् ।
कथं भवान् विजानीते सर्व्वं वै मण्डलं भुवः ॥ १ ॥
सुग्रीवश्च ततो रामम् उवाच प्रणतात्मवान् ।
श्रूयतां सर्व्वमाख्यास्ये विस्तरेण वचो मम ॥ २ ॥
यदा तु दुन्दुभिर्नाम दानवं महिषाकृतिम् ।
प्रतिकालयते वाली मलयं प्रति पर्व्वतम् ॥ ३ ॥
तदा विवेश महिषो मलयस्य गुहां प्रति ।
विवेश वाली तत्रापि मलयं तज्जिघांसया ॥ ४ ॥
ततोऽहं तत्र निक्षिप्तो गुहाद्वारि विनीतवत् ।
न च निष्क्रमते वाली तदा संवत्सरे गते ॥ ५ ॥

गतेष्विति ॥ १ ॥

प्रणत आत्मा देहो यस्यास्तीति ॥ २ ॥

दुन्दुभिर्नामेति । अत्र दुन्दुभिशब्देन महिषशब्देन च तत्पुत्रो मायावि नामा दानव उच्यते तद्वृत्तान्तस्यैवाग्रे वक्ष्यमाणत्वात् । मायावी नाम तेजस्वी दुन्दुभेः पूर्वजः सुत इति प्रागुक्तेस्तस्य तत्पुत्रत्वं पितुर्माहिषाकारत्वात्तत्पुत्रस्य च तदाकारत्वमिति च बोध्यम् ॥ ३ ॥

मलयं मलयगुहाम् ॥ ४ ॥ ५ ॥

ततः क्षतजवेगेन आपुपूरे तदा बिलम्।
तदहं विस्मितो दृष्ट्वा भ्रातुः शोकविषादितः॥ ६ ॥
अथाहं गतबुद्धिस्तु सुव्यक्तं निहतो गुरुः।
शिला पर्व्वतसङ्काशा बिलद्वारि मया कृता॥ ७॥
अशक्नुवन्निष्क्रमितुं महिषो विनशिष्यति।
ततोऽहमागां किष्किन्धां निराशस्तस्य जीविते॥ ८॥
राज्यञ्च सुमहत्प्राप्य ताराञ्च रुमया सह।
मित्रैश्च सहितस्तस्य वसामि विगतज्वरः॥ ९॥
आजगाम ततो वाली हत्वा तं वानरर्षभः।
ततोऽहमददां राज्यं गौरवाद्भययन्त्रितः॥ १०॥
स मां जिघांसुर्दुष्टात्मा वाली प्रव्यथितेन्द्रियः।
परिकालयते वाली धावन्तं सचिवैः सह॥ ११॥
ततोऽहं वालिना तेन सोऽनुबद्धः प्रधावितः।
नदीश्च विविधाः पश्यन् वनानि नगराणि च॥ १२॥

आपुपूरे पूर्णम्॥ ६॥

निहत इति। गतबुद्धिः प्राप्तबुद्धिः जात इति शेषः। ततो मयेत्यादि॥ ७॥

विनशिष्यतीत्यस्येति बुद्ध्येति शेषः। तस्य वालिनः॥ ८॥

ताराञ्च प्राप्येति सम्बन्धः। वसामि अवसम्॥ ९॥ १०॥

परिकालयते सचिवैः सह धावन्तमनुधावति स्म। ११॥

आदर्शतलसङ्काशा ततो वै पृथिवी मया।
अलातचक्रप्रतिमा दृष्टा गोष्पदवत् कृता॥ १३॥
पूर्व्वां दिशं ततो गत्वा पश्यामि विविधान् द्रुमान्।
पर्व्वतान् सदरीन् रम्यान्, सरांसि विविधानि च॥ १४॥
उदयं तत्र पश्यामि पर्व्वतं धातुमण्डितम्।
क्षीरोदं सागरञ्चैव नित्यमप्सरसालयम्॥ १५॥
परिकाल्यमानस्तु तदा वालिनाभिद्रुतो ह्यहम्।
पुनरावृत्य सहसा प्रस्थितोऽहं तदा विभो!॥ १६॥
दिशस्तस्यास्ततो भूयः प्रस्थितो दक्षिणां दिशम्।
विन्ध्यपादपसङ्कीर्णां चन्दनद्रुमशोभिताम्॥ १७॥
द्रुमशैलान्तरे पश्यन् भूयो दक्षिणतोऽपराम्।

ततस्तेन वालिना सोऽहमनुबद्धोऽनुद्रुतः प्रधावितः॥ १२॥

ततो वै तदनुधावनहेतोर्मया गोष्पदवत्परिभ्राम्यमाणेयं पृथिवी अलातचक्रप्रतिमा आदर्शतलसङ्काशा च दृष्टा। गोष्पदवदित्यनेन लङ्घनेऽप्रयास उक्तः। अलातचक्रेत्यनेन स्वीयो भ्रमणवेगः। आदर्शतलेत्यनेन भूचक्रवर्त्तिपदार्थस्य स्पष्टमनुभव उक्तः॥ १३॥

उक्तमेव विवृणोति। पूर्वां दिशमिति॥ १४॥

अप्सरसशब्दोऽकारान्तोऽप्यार्षः॥ १५॥

परिकाल्यमानः परिकालयमानः पलायमान इत्यर्थः। अकारलोप आर्षः। पुनरावृत्य उदयगिरिभुवः॥ १६॥

अपराञ्च दिशं प्राप्तो वालिना समभिद्रुतः ॥ १८ ॥
स पश्यन् विविधान् देशानस्तञ्च गिरिसत्तमम्।
प्राप्य चास्तं गिरिश्रेष्ठम् उत्तरं सम्प्रधावितः ॥ १९ ॥
हिमवन्तञ्च मेरुञ्च समुद्रञ्च तथोत्तरम्।
यदा न विन्दे शरणं वालिना समभिद्रुतः ॥ २० ॥
ततो मां बुद्धिसम्पन्नो हनुमान् वाक्यमब्रवीत्।
इदानीं मे स्मृतं राजन्यथा वाली हरीश्वरः ॥ २१ ॥
मतङ्गेन तदा शप्तो ह्यस्मिन्नाश्रममण्डले।
प्रविशेद्यदि वा वाली मूर्द्धास्य शतधा भवेत् ॥ २२ ॥
तत्र वासः सुखोऽस्माकं निरुद्विग्नो भविष्यति।
तत्र पर्व्वतमासाद्य ऋष्यमूकं नृपात्मज! ॥ २३ ॥

तस्या दिशः तां दिशं त्यक्त्वा द्रुमान्तरे शैलान्तरे च तद्व्यवहितं वालिनं पश्यन्। अपरां पश्चिमां दिशं समभिद्रुत इति शेषः ॥ १७ ॥ १८ ॥

गिरिसत्तमम् अभिधावित इति शेषः ॥ १९ ॥

मेरुं महामेरुं न विन्दे न लभे ॥ २० ॥

किमब्रवीत्तदाह,—इदानीमिति। मे मया स्मृतम्। किं स्मृतं तदाह,—यथेति ॥ २१ ॥

तदा पूर्व्वकाले अस्मिन्नाश्रममण्डले वाली यदा प्रविशेत्तदास्य मूर्द्धा शतधा भवेदिति हरीश्वरो मतङ्गेन शप्तः ॥ २२ ॥

तत्र मतङ्गाश्रमे निरुद्विग्नः निर्भयः आसाद्य स्थितस्य मम समीपमिति शेषः। न विविशेत्यन्वयः ॥ २३ ॥

न विवेश तदा वाली मतङ्गस्य भयात्तदा।
एवं मया तदा राजन्! प्रत्यक्षमुपलक्षितम्।
पृथिवीमण्डलं सर्व्वं गुहामस्याग तस्ततः॥ २४॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
षट्चत्वारिंशः सर्गः॥ ४६॥

तदा जातशापजनतादिति शेषः। गुहां ऋष्यमूकस्येति शेषः॥ २४॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धा-
काण्डे षट्चत्वारिंशः सर्गः॥ ४६॥

# सप्तचत्वारिंशः सर्गः ।

दर्शनार्थन्तु वैदेह्याः सर्वतः कपिकुञ्जराः ।
व्यादिष्टाः कपिराजेन यथोक्तं जग्मुरञ्जसा ॥ १ ॥
ते सरांसि सरित्कच्चानाकाशं नगराणि च ।
नदीदुर्गांस्तथा देशान् विचिन्वन्ति समन्ततः ॥ २ ॥
सुग्रीवेण समाख्याताः सर्वे वानरयूथपाः ।
तत्र देशान् विचिन्वन्ति सशैलवनकाननान् ॥ ३ ॥
विचित्य दिवसं सर्वे सीताधिगमने धृताः ।
समायान्ति स्म मेदिन्यां निशाकालेषु वानराः ॥ ४ ॥
सर्वर्त्तुकांश्च देशेषु वानराः सफलद्रुमान् ।
आसाद्य रजनीं शय्याञ्चक्रुः सर्वेष्वहःसु ते ॥ ५ ॥

यथोक्तं स्वस्वान्वेषणीयतयोक्तं देशमनतिक्रम्येत्यर्थः ॥ १ ॥

आकाशं वनगिर्य्यनावृतप्रदेशमित्यर्थः । नदीदुर्गानिति नदीप्रवाहै-र्गन्तुमशक्या देशा नदीदुर्गास्तान् ॥ २ ॥ ३ ॥

दिवसमित्यत्यन्तसंयोगे द्वितीया । धृताः उद्युक्ताः मेदिन्यां सर्वा-धारभूतायां निद्रासौकर्य्यार्थमिति भावः ॥ ४ ॥

तेषु देशेषु सर्वर्तुकान्नित्यसन्निहितसर्वर्तुयुक्तानतएव सदा सफल-

तदहः प्रथमं कृत्वा मासे प्रस्रवणं गताः ।
कपिराजेन सङ्गम्य निराशाः कपिकुञ्जराः ॥ ६ ॥
विचित्य तु दिशं पूर्वां यथोक्तां सचिवैः सह ।
अदृष्ट्वा विनतः सीतामाजगाम महाबलः ॥ ७ ॥
दिशमप्युत्तरां सर्वां विविच्य स महाकपिः ।
आगतः सह सैन्येन भीतः शतबलिस्तदा ॥ ८ ॥
सुषेणः पश्चिमामाशां विविच्य सह वानरैः ।
समेत्य मासे पूर्णे तु सुग्रीवमुपचक्रमे ॥ ९ ॥
तं प्रस्रवणपृष्ठस्थं समासाद्याभिवाद्य च ।
आसीनं सह रामेण सुग्रीवमिदमब्रुवन् ॥ १० ॥
विचिताः पर्वताः सर्वे वनानि गहनानि च ।
निम्नगाः सागरान्ताश्च सर्वे जनपदाश्च ये ॥ ११ ॥
गुहाश्च विचिताः सर्व्वा यास्च ते परिकीर्त्तिताः ।

द्रुमान् सर्वेष्वहस्सु विचयनसमये समासाद्य कामं प्राप्य रजनीं रजन्यां शय्यां चक्रुः । तादृशवृक्षसत्त्वञ्च देशस्य रामप्रसादात् ॥ ५ ॥

तदहः प्रस्थानदिवसं प्रथमं कृत्वा । गताः पुनर्मासे गते निराशाः सीताऽलाभे प्रस्रवणं गताः । आगताः कपिराजेन सङ्गम्य स्थिता इत्यन्वयः ॥ ६ ॥ ७ ॥ ८ ॥

उपचक्रमे प्राप्तः ॥ ९ ॥ १० ॥

सागरान्ताः सागरमध्यवर्त्तिद्वीपाः ॥ ११ ॥

विचिताश्च महागुल्मा लताविततसन्तताः ॥ १२ ॥
गहनेषु च देशेषु दुर्गेषु विषमेषु च ।
सत्वान्यतिप्रमाणानि विचितानि हतानि च ।
ये चैव गहना देशा विचितास्ते पुनः पुनः ॥ १३ ॥

उदारसत्वाभिजनो हनूमान्
स मैथिलीं ज्ञास्यति वानरेन्द्र ! ।
दिशन्तु यामेव गता तु सीता
तामास्थितो वायुसुतो हनूमान् ॥ १४ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

लताविततैर्लताप्रतानैः सन्तताः समन्ताद्व्याप्तास्ताद्दशा महा गुल्मा लतागृहविशेषाः ॥ १२ ॥ १३ ॥

दिक्चयासत्त्वसिद्धनिश्चयमर्थमनुवदति । उदारेति ॥ १४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धा-
काण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

## अष्टचत्वारिंशः सर्गः ।

सह ताराङ्गदाभ्यान्तु सहसा हनुमान् कपिः ।
सुग्रीवेण यथोद्दिष्टं गन्तुं देशं प्रचक्रमे ॥ १ ॥
स तु दूरमुपागम्य सर्वैस्तैः कपिसत्तमैः ।
ततो विचित्य विन्ध्यस्य गुहाश्च गहनानि च ॥ २ ॥
पर्वताग्रनदीदुर्गान् सरांसि विपुलद्रुमान् ।
वृक्षखण्डांश्च विविधान् पर्वतान् वनपादपान् ॥ ३ ॥
अन्वेषमाणास्ते सर्वे वानराः सर्वतो दिशम् ।
न सीतां ददृशुर्वीरा मैथिलीं जनकात्मजाम् ॥ ४ ॥
ते भक्षयन्तो मूलानि फलानि विविधान्यपि ।
निर्जलं निर्जनं शून्यं गहनं घोरदर्शनम् ॥ ५ ॥
तादृशान्यप्यरण्यानि विचित्य भृशपीड़िताः ।
स देशश्च दुरन्वेष्यो गुहागहनवान् महान् ॥ ६ ॥

प्रचक्रमे अन्वेष्टुमिति शेषः ॥ १ ॥ २ ॥ ३ ॥

अन्वेषमाणास्ते विविधानि फलान्यपि भक्षयन्तः सीतां न ददृशुः ॥ ४ ॥ ५ ॥

यत्र निर्जलत्वादिवद्गहनं तादृशान्यपि दुरन्वेष्याणि विचित्येत्यन्वयः । भृशपीड़िताः निर्जलारण्यान्वेषणेन क्षुत्पिपासाभ्यां पीड़िताः

त्यक्त्वा तु तं ततो देशं सर्वे वै हरियूथपाः ।
देशमन्यं दुराधर्षं विविशुश्चाकुतोभयाः ॥ ७ ॥
यत्र वन्ध्यफला वृक्षा विपुष्पाः पर्णवर्जिताः ।
निस्तोयाः सरितो यत्र मूलं यत्र सुदुर्लभम् ॥ ८ ॥
न सन्ति महिषा यत्र न मृगा न च हस्तिनः ।
शार्दूलाः पक्षिणो वापि ये चान्ये वनगोचराः ॥ ९ ॥
न चात्र वृक्षा नौषध्यो न वल्यो नापि वीरुधः ।
स्निग्धपत्राः स्थले यत्र पद्मिन्यः फुल्लपङ्कजाः ॥ १० ॥
प्रेक्षणीयाः सुगन्धाश्च भ्रमरैश्च विवर्जिताः ।
कण्डुर्नाम महाभागः सत्यवादी तपोधनः ॥ ११ ॥
महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः ।
तस्य तस्मिन् वने पुत्रो बालको दशवार्षिकः ॥ १२ ॥

स देशो निर्जलादिदेशो यद्यपि दुरन्वेष्योऽथापि तं विचित्य ततस्तं देशं त्यक्त्वाऽन्यदेशं विविशुरित्यग्रिमेणान्वयः ॥ ६ ॥ ७ ॥

वन्ध्यफलाः अनुत्पन्नफलाः ॥ ८ ॥ ९ ॥

वल्योवृक्षाद्याश्रिताः वीरुधो भूम्याधाराः । स्थले यत्र स्थले नेत्यनुकर्षः ॥ १० ॥

भ्रमरैर्विवर्जिताः विगतं वर्जितं यासु ताः संयुक्ता इत्यर्थः । तादृशाः फुल्लपङ्कजाश्च यत्र न सन्ति यत्र वने कण्डुर्नाम महर्षिरासीत् ॥ ११ ॥

वने पूर्वमिति शेषः । इदानीमुक्तलक्षणः ॥ १२ ॥

प्रनष्टो जीवितान्ताय क्रुद्धस्तेन महामुनिः।
तेन धर्मात्मना शप्तं कृत्स्नं तत्र महद्वनम् ॥ १३ ॥
अशरण्यं दुराधर्षं मृगपक्षिविवर्जितम्।
तस्य ते काननान्तांस्तु गिरीणां कन्दराणि च ॥ १४ ॥
प्रभवाणि नदीनाञ्च विचिन्वन्ति समाहिताः।
तत्र चापि महात्मानो नापश्यन् जनकात्मजाम् ॥ १५ ॥
हर्त्तारं रावणं वापि सुग्रीवप्रियकारिणः।
ते प्रविश्य तु तं भीमं लतागुल्मसमावृतम् ॥ १६ ॥
ददृशुर्भीमकर्म्माणमसुरं सुरनिर्भयम्।
तं दृष्ट्वा वानरा घोरं स्थितं शैलमिवासुरम् ॥ १७ ॥
गाढं परिहिताः सर्व्वे दृष्ट्वा तं पर्व्वतोपमम्।
सोऽपि तान् वानरान् सर्व्वान्नष्टास्स्थेत्यब्रवीद्बली ॥ १८ ॥

जीवितान्ताय जीवितान्तं गत्वा प्रनष्टस्तेन बालदुर्मरणेन क्रुद्धो मुनिरभूत्। ततस्तेन धर्मात्मना शापानुग्रहसमर्थप्रबलधर्मवता तत्र काले शप्तमभूत् ॥ १३ ॥

शापस्वरूपमाह,—अशरण्यम् अगावासम्। ते वानरास्तस्य काननान्तान् विचिन्वन्तीत्यन्वयः ॥ १४ ॥

नदीनां प्रभवानि उत्पत्तिस्थानानि ॥ १५ ॥

ते प्रविश्य वनान्तरमिति शेषः। तमसुरं ददृशुरित्यन्वयः ॥ १६ ॥

सुरेभ्यो निर्भयः सुरनिर्भयः तथा वरदानादिति भावः ॥ १७ ॥

अभ्यधावत संक्रुद्धो मुष्टिमुद्यम्य सङ्गतम् ।
तमापतन्तं सहसा वालिपुत्रोऽङ्गदस्तदा ॥ १९ ॥
रावणोऽयमिति ज्ञात्वा तलेनाभिजघान ह ।
स वालिपुत्राभिहतो वक्त्राच्छोणितमुद्वमन् ॥ २० ॥
असुरोऽन्यपतद्भूमौ पर्य्यस्त इव पर्व्वतः ।
ते तु तस्मिन् निरुच्छ्वासे वानरा जितकाशिनः ॥ २१ ॥
विचिन्वन् प्रायशस्तत्र सर्व्वं ते गिरिगह्वरम् ।
विचितन्तु ततः सर्व्वं सर्व्वे ते काननौकसः ॥ २२ ॥
अन्यदेवापरं घोरं विविशुर्गिरिगह्वरम् ।
ते विचित्य पुनः खिन्ना विनिष्पत्य समागताः ।
एकान्ते वृक्षमूले तु निषेदुर्दीनमानसाः ॥ २३ ॥

## इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

गाढं परिहिताः दृढं परिबद्धवस्त्राः सन्नद्धा इति यावत् ॥ १८ ॥
॥ १९ ॥ २० ॥ २१ ॥

सर्वं विचितं ज्ञात्वेति शेषः ॥ २२ ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धा-काण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

## एकोनपञ्चाशः सर्गः ।



अथाङ्गदस्तदा सर्व्वान् वानरानिदमब्रवीत् ।
परिश्रान्तो महाप्राज्ञः समाश्वास्य शनैर्वचः ॥ १ ॥
वनानि गिरयो नद्यो दुर्गाणि गहनानि च ।
दरीगिरिगुहाश्चैव विचिताः सर्व्वमन्ततः ॥ २ ॥
तत्र तत्र सहास्माभिर्जानकी न च दृश्यते ।
तथा रक्षोपहर्त्ता च सीतायाश्चैव दुष्कृती ॥ ३ ॥
कालश्च नो महान् जातः सुग्रीवश्चोग्रशासनः ।
तस्माद्भवन्तः सहिता विचिन्वन्तु समन्ततः ॥ ४ ॥
विहाय तन्द्रीं शोकञ्च निद्राञ्चैव समुत्थिताम् ।
विचिनुध्वं तथा सीतां पश्यामो जनकात्मजाम् ॥ ५ ॥
अनिर्व्वेदञ्च दाक्ष्यञ्च मनसश्चापराजयम् ।

समाश्वास्य वानरानिति शेषः ॥ १ ॥ २ ॥

रक्षः तद्रूपोपहर्त्तेत्याद्यर्थः ॥ ३ ॥

नो महान् जातः मासमध्ये इति शेषः । तन्मध्येऽल्पोऽवशिष्ट इति भावः । परावृत्यगमने महदनिष्टमित्याह,—सुग्रीवश्चेति ॥ ४ ॥

तथा विचिनुध्वं यथा सीतां पश्याम इत्यन्वयः ॥ ५ ॥

कार्य्यसिद्धिकराण्याऊस्तस्मादेतद्ब्रवीम्यहम् ॥ ६ ॥
अद्यापीदं वनं दुर्गं विचिन्वन्तु वनौकसः ! ।
खेदं त्यक्त्वा पुनः सर्व्वं वनमेव विचिन्वताम् ॥ ७ ॥
अवश्यं कुर्व्वतां तस्य दृश्यते कर्म्मणः फलम् ।
परं निर्व्वेदमागम्य न हि नोन्मीलनं क्षमम् ॥ ८ ॥
सुग्रीवः क्रोधनो राजा तीक्ष्णदण्डश्च वानराः ! ।
भेतव्यं तस्य सततं रामस्य च महात्मनः ॥ ९ ॥
हितार्थमेतदुक्तं वः क्रियतां यदि रोचते ।
उच्यतां हि क्षमं यत्तत् सर्व्वेषामेव वानराः ! ॥ १० ॥
अङ्गदस्य वचः श्रुत्वा वचनं गन्धमादनः ।
उवाच व्यक्तया वाचा पिपासाश्रमखिन्नया ॥ ११ ॥
सदृशं खलु वो वाक्यमङ्गदो यदुवाच ह ।

अनिर्वेदमखेदम् । दाक्ष्यं सामर्थ्यम् । अपराजयं कार्य्यापराङ्मुखत्वम् एतत् वक्ष्यमाणम् ॥ ६ ॥

हे वनौकसः इदं दुर्गवनमद्यापि विचिन्वन्तु भवन्तः । आदरात् पुनराह,—खेदं त्यक्त्वा पुनः विचिन्वताम् ॥ ७ ॥

निर्वेदं खेदम् । नोन्मीलनमनुन्मीलनम् अनुद्योग इति यावत् । न क्षमं न युक्तम् ॥ ८ ॥

तत्र हेतुः । सुग्रीव इति ॥ ९ ॥

यदि मदुक्तमेतन्न रोचते तर्हि यदन्यत् क्षमं तदुच्यताम् ॥ १० ॥ ११ ॥

हितश्चैवानुकूलश्च क्रियतामस्य भाषितम् ॥ १२ ॥
पुनर्मार्गामहे शैलान कन्दरांश्च शिलास्तथा।
काननानि च शून्यानि गिरिप्रस्रवणानि च ॥ १३ ॥
यथोद्दिष्टानि सर्वाणि सुग्रीवेण महात्मना।
विचिन्वन्तु वनं सर्व्वं गिरिदुर्गाणि सङ्गताः ॥ १४ ॥
ततः समुत्थाय पुनर्वानरास्ते महाबलाः।
विन्ध्यकाननसङ्कीर्णां विचेरुर्दक्षिणां दिशम् ॥ १५ ॥
ते शारदाभ्रप्रतिमं श्रीमद्रजतपर्वतम्।
शृङ्गवन्तं दरीवन्तमधिरुह्य च वानराः ॥ १६ ॥
तत्र लोध्रवनं रम्यं सप्तपर्णवनानि च।
विचिन्वन्तो हरिवराः सीतादर्शनकाङ्क्षिणः ॥ १७ ॥
तस्याग्रमधिरूढास्ते श्रान्ता विपुलविक्रमाः।
न पश्यन्ति स्म वैदेहीं रामस्य महिषीं प्रियाम् ॥ १८ ॥
ते तु दृष्टिगतं दृष्ट्वा तं शैलं बहुकन्दरम्।
अध्यारोहन्त हरयो वीक्ष्यमाणाः समन्ततः ॥ १९ ॥
अवरुह्य ततो भूमिं श्रान्ता विगतचेतसः।
स्थिता मुहूर्त्तं तत्राथ वृक्षमूलमुपाश्रिताः ॥ २० ॥

वो युष्माकं यदङ्गद उवाच तत्सदृशं तस्यैवेति शेषः ॥ १२ ॥ १३ ॥
॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥
तस्य रजतपर्वतस्य ॥ १८ ॥

ते मुहूर्त्तं समाश्वस्ताः किञ्चिद्भग्नपरिश्रमाः ।
पुनरेवोद्यताः कृत्स्नां मार्गितुं दक्षिणां दिशम् ॥ २१ ॥
हनुमत्प्रमुखास्तावत्प्रस्थिताः प्लवगर्षभाः ।
विन्ध्यमेवादितः कृत्वा विचेरुश्च समन्ततः ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
एकोनपञ्चाशः सर्गः ॥ ४९ ॥

दृष्टिगतं दृष्टिगोचरम् । अध्यारोहन्त । अवारोहन्तेत्यर्थः ॥ १९ ॥ ॥ २० ॥ २१ ॥

आदितस्तावद्विन्ध्यं विचेरुरन्वेषणायेति शेषः । तावच्छब्दो वाक्यालङ्कारे ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## पञ्चाशः सर्गः ।



सह ताराङ्गदाभ्यान्तु सङ्गम्य हनुमान् कपिः ।
विचिनोति च विन्ध्यस्य गुहाश्च गहनानि च ॥ १ ॥
सिंहशार्दूलजुष्टाश्च गुहाश्च परितस्तदा ।
विषमेषु नगेन्द्रस्य महाप्रस्रवणेषु च ॥ २ ॥
आसेदुस्तस्य शैलस्य कोटिं दक्षिणपश्चिमाम् ।
तेषां तत्रैव वसतां स कालोव्यत्यवर्त्तत ॥ ३ ॥
स हि देशो दुरन्वेष्यो गुहागहनवान् महान् ।
तत्र वायुसुतः सर्व्वं विचिनोति स्म पर्व्वतम् ॥ ४ ॥
परस्परेण रहिता अन्योऽन्यस्याविदूरतः ।
गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ ५ ॥
मैन्दश्च द्विविदश्चैव हनूमान् जाम्बवानपि ।

सहेति ॥ १ ॥

विषमेषु क्लेशजनकेषु ॥ २ ॥

दक्षिणपश्चिमां कोटिं नैर्ऋत्यभागीयशृङ्गम् । स कालः सुग्रीव-कल्पितः कालः व्यत्यवर्त्तत व्यतिक्रान्तः ॥ ३ ॥

स देशः नैर्ऋत्यविन्ध्यकोटिप्रदेशः ॥ ४ ॥

अङ्गदो युवराजश्च तारश्च वनगोचरः ॥ ६ ॥
गिरिजालावृतान् देशान् मार्गित्वा दक्षिणां दिशम् ।
विचिन्वन्तस्ततस्तत्र ददृशुर्विवृतं बिलम् ॥ ७ ॥
दुर्गमृक्षबिलं नाम दानवेनाभिरक्षितम् ।
क्षुत्पिपासापरीतास्तु श्रान्तास्तु सलिलार्थिनः ॥ ८ ॥
अवकीर्णं लतावृक्षैर्ददृशुस्ते महाबिलम् ।
तत्र क्रौञ्चाश्च हंसाश्च सारसाश्चापि निष्क्रमन् ॥ ९ ॥
जलार्द्राश्चक्रवाकाश्च रक्ताङ्गाः पद्मरेणुभिः ।
ततस्तद्बिलमासाद्य सुगन्धिदुरतिक्रमम् ॥ १० ॥
विस्मयव्यग्रमनसो बभूवुर्वानरर्षभाः ।
सञ्जातपरिशङ्कास्ते तद्बिलं प्लवगोत्तमाः ॥ ११ ॥
अभ्यपद्यन्त संहृष्टास्तेजोवन्तो महाबलाः ।
नानासत्त्वसमाकीर्णं दैत्येन्द्रनिलयोपमम् ॥ १२ ॥

परस्परेण रहिताः प्रत्येकमन्योऽन्यस्याविदूरतो भूत्वा । हनूमान् गजादयश्च विचिन्वन्ति स्म ॥ ५ ॥ ६ ॥

विवृतमनावृतद्वारम् ॥ ७ ॥

दुर्गं दुर्गमम् दानवेन मयेन ॥ ८ ॥

तत्र ततः निष्क्रमन् निराक्रमन् ॥ ९ ॥

सुगन्धि बिलान्तर्वर्त्त्यमाणदिव्यगन्धपुष्पसम्बद्धवातसङ्गात् ॥ १० ॥

सञ्जातपरिशङ्काः सञ्जातजलसम्भावनाः ॥ ११ ॥

दुर्दर्शमिव घोरञ्च दुर्व्विगाह्यञ्च सर्व्वशः।
ततः पर्व्वतकूटाभो हनुमान मारुतात्मजः॥ १३॥
अब्रवीद्वानरान् घोरान् कान्तारवनकोविदः।
गिरिजालावृतान् देशान् मार्गित्वा दक्षिणां दिशम्॥ १४॥
वयं सर्व्वे परिश्रान्ता न च पश्याम मैथिलीम्।
अस्माच्चापि विलाद्धंसाः क्रौञ्चाश्च सह सारसैः॥ १५॥
जलार्द्राश्चक्रवाकाश्च निष्पतन्ति स्म सर्व्वशः।
नूनं सलिलवानत्र कूपो वा यदि वा ह्रदः॥ १६॥
तथा चेमे बिलद्वारे स्निग्धास्तिष्ठन्ति पादपाः।
इत्युक्तास्तद्बिलं सर्व्वे विविशुस्तिमिरावृतम्॥ १७॥
अचन्द्रसूर्य्यं हरयो ददृशू रोमहर्षणम्।
निशाम्य तस्मात् सिंहांश्च तांस्तांश्च मृगपक्षिणः॥ १८॥
प्रविष्टा हरिशार्दूला बिलं तिमिरसंवृतम्।
न तेषां सज्यते दृष्टिर्न तेजो न पराक्रमः॥ १९॥

दैत्येन्द्रनिलयः पातालम्॥ १२॥ १३॥
कान्तारवनकोविदः तत्प्रवेशादौ समर्थः॥ १४॥ १५॥ १६॥
इत्युक्ताः हनूमतेति शेषः॥ १७॥
निशाम्य अवलोक्य॥ १८॥
न सज्जते न प्रतिबध्यते। तेजः प्रभावः। अन्ये तु तेषां दृष्टिर्न सज्जते तत्रत्यपदार्थेष्विति शेषः तिमिरावृतत्वात्। अतएव तेजःपरा-

वायोरिव गतिस्तेषां दृष्टिस्तमसि वर्त्तते ।
ते प्रविष्टास्तु वेगेन तद्विलं कपिकुञ्जराः ॥ २० ॥
प्रकाशञ्चाभिरामञ्च दद्दृशुर्देशमुत्तमम् ।
ततस्तस्मिन् बिले भीमे नानापादपसङ्कुले ॥ २१ ॥
अन्योऽन्यं सम्परिष्वज्य जग्मुर्योजनमन्तरम् ।
ते नष्टसंज्ञास्तृषिताः सम्भ्रान्ताः सलिलार्थिनः ॥ २२ ॥
परिपेतुर्बिले तस्मिन् कञ्चित्कालमतन्द्रिताः ।
ते कृशा दीनवदनाः परिश्रान्ताः प्लवङ्गमाः ॥ २३ ॥
आलोकं दद्दृशुर्वीरा निराशा जीविते यदा ।
ततस्तं देशमागम्य सौम्या वितिमिरं वनम् ॥ २४ ॥
दद्दृशुः काञ्चनान् वृक्षान् दीप्तवैश्वानरप्रभान् ।

क्रमयोरपि कुण्ठितगमनम् । यद्यपि वायोरिव गतिस्तथापि यतो दृष्टिस्तमसि प्रतिबद्धा वर्त्ततेऽतो वेगेन परस्परहस्तग्रहणपूर्वकं प्रविष्टा इत्यर्थः । अतएव गृह्य हस्तैः परस्परमित्यग्रे हनुमदुक्तिरित्याहुः ॥ १९ ॥ ॥ २० ॥ २१ ॥

अन्योऽन्यं सम्परिष्वज्य तिमिरदेशविनिर्गमजसन्तोषवशादिति केचित् । यद्वान्योऽन्यं हस्तावलम्बनं कृत्वा हस्तेन परस्परस्योरआदि-सम्यक् धृत्वेति यावत् । पूर्वोक्तस्यैव विस्तरः । नष्टसंज्ञास्तृषावशात्त-दाह,—तृषिता इति ॥ २२ ॥

परिपेतुरिति । अधोमार्गावलम्बनान्धकारे गताः ॥ २३ ॥

आलोकमेव दद्दृशुः न तु जलं जीविते निराशा यदा बभूवुस्तदा-

सालांस्तालांस्तमालांश्च पुन्नागान् वञ्जुलान् धवान् ॥ २५ ॥
चम्पकान्नागवृक्षांश्च कर्णिकारांश्च पुष्पितान् ।
स्तबकैः काञ्चनैश्चित्रैरक्तैः किसलयैस्तथा ॥ २६ ॥
आपीडैश्च लताभिश्च हेमाभरणभूषितान् ।
तरुणादित्यसङ्काशान् वैदूर्य्यमयवेदिकान् ॥ २७ ॥
विभ्राजमानान् वपुषा पादपांश्च हिरण्मयान् ।
नीलवैदूर्य्यवर्णांश्च पद्मिनीः पतगैर्वृताः ॥ २८ ॥
महद्भिः काञ्चनैर्वृक्षैर्वृतं बालार्कसन्निभैः ।
जातरूपमयैर्मत्स्यैर्महद्भिश्चाथ पङ्कजैः ॥ २९ ॥
नलिनीस्तत्र ददृशुः प्रसन्नसलिलायुताः ।
काञ्चनानि विमानानि राजतानि तथैव च ॥ ३० ॥
तपनीयगवाक्षाणि मुक्ताजालावृतानि च ।
हैमराजतभौमानि वैदूर्य्यमणिमन्ति च ॥ ३१ ॥
ददृशुस्तत्र हरयो गृहमुख्यानि सर्व्वशः ।

धमामलक्ष्यं देशमागम्य काञ्चनान् वृक्षांश्च ददृशुः । यदा जीविते निराशा बभूवुस्तदा भगवत्कृपया आलोकं ददृशुरुच्यमानविशेषणो देशे काञ्चनान् वृक्षान् ददृशुः ॥ २४ ॥ २५ ॥ २६ ॥

आपीडैस्तबकशेखरैः लताभिश्च संयुक्तान् पादपान् ददृशुः ॥ २७ ॥

पद्मिनीः पद्मलताः ॥ २८ ॥

पद्मादियुता नलिनीः सरांसि च ददृशुः ॥ २९ ॥ ३० ॥

पुष्पितान् फलिनो वृक्षान् प्रवालमणिसन्निभान् ॥ ३२ ॥
काञ्चनभ्रमरांश्चैव मधूनि च समन्ततः ।
मणिकाञ्चनचित्राणि शयनान्यासनानि च ॥ ३३ ॥
विविधानि विशालानि ददृशुस्ते समन्ततः ।
हैमराजतकांस्यानां भाजनानाञ्च राशयः ॥ ३४ ॥
अगुरूणाञ्च दिव्यानां चन्दनानाञ्च सञ्चयान् ।
शुचीन्यभ्यवहाराणि मूलानि च फलानि च ॥ ३५ ॥
महार्हाणि च यानानि मधूनि रसवन्ति च ।
दिव्यानामम्बराणाञ्च महार्हाणाञ्च सञ्चयान् ॥ ३६ ॥
कम्बलानाञ्च चित्राणामजिनानाञ्च सञ्चयान् ।
तत्र तत्र विचिन्वन्तो बिले तत्र महाप्रभाः ॥ ३७ ॥
ददृशुर्वानराः शूराः स्त्रियं काञ्चिददूरतः ।
ताञ्च ते ददृशुस्तत्र चीरकृष्णाजिनाम्बराम् ॥ ३८ ॥
तापसीं नियताहारां ज्वलन्तीमिव तेजसा ।
विस्मिता हरयस्तत्र व्यवतिष्ठन्त सर्व्वशः ॥ ३९ ॥
पप्रच्छ हनुमांस्तत्र कासि त्वं कस्य वा बिलम् ॥ ४० ॥

मुक्ताजालैर्मुक्ताखचितजालैरावृतानि　हैमेत्यादि गृहमुख्यानीत्यस्य विशेषणम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

यानानि शिबिकादीनि ॥ ३६ ॥ ३७ ॥ ३८ ॥

व्यवतिष्ठन्त तुष्णीमवस्थिता बभूवुः ॥ ३९ ॥

ततो हनूमान् गिरिसन्निकाशः
कृताञ्जलिस्तामभिवाद्य वृद्धाम् ।
पप्रच्छ का त्वं भवनं विलञ्च
रत्नानि चेमानि वदस्व कस्य ॥ ४१ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
पञ्चाशः सर्गः ॥ ५० ॥

पप्रच्छ हनूमानित्यर्थस्यैव सविशेषप्रतिपादनं ततो हनूमानिति ॥ ४० ॥ ४१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धाकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

---

## एकपञ्चाशः सर्गः ।



इत्युक्का हनूमांस्तत्र चीरकृष्णाजिनाम्बराम् ।
अब्रवीत्तां महाभागां तापसीं धर्म्मचारिणीम् ॥ १ ॥
इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम् ।
क्षुत्पिपासापरिश्रान्ताः परिखिन्नाश्च सर्व्वशः ॥ २ ॥
महद्धरण्या विवरं प्रविष्टा स्म पिपासिताः ।
इमांस्त्वेवंविधान् भावान् विविधानद्भुतोपमान् ॥ ३ ॥
दृष्ट्वा वयं प्रव्यथिताः सम्भ्रान्ता नष्टचेतसः ।
कस्यैते काञ्चना वृक्षास्तरुणादित्यसन्निभाः ॥ ४ ॥
शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ।
काञ्चनानि विमानानि राजतानि गृहाणि च ॥ ५ ॥
तपनीयगवाक्षाणि मणिजालावृतानि च ।
पुष्पिताः फलवन्तश्च पुण्याः सुरभिगन्धयः ॥ ६ ॥

इत्युक्का का त्वं भवनमित्यादि पृष्ट्वा ॥ १ ॥
किमब्रवीत्तदाह,—इदमिति । सहसा हठात् ॥ २ ॥
उक्तमेवार्थं प्रपञ्चयति । महदिति । भावान् पदार्थान् ॥ ३ ॥ ४ ॥
॥ ५ ॥ ६ ॥

इमे जाम्बूनदमयाः पादपाः कस्य तेजसा।
काञ्चनानि च पद्मानि जातानि विमले जले ॥ ७ ॥
कथं मत्स्याश्च सौवर्णा दृश्यन्ते सह कच्छपैः।
आत्मनस्त्वनुभावाद्वा कस्य वैतत्तपोबलम् ॥ ८ ॥
अजानतां नः सर्व्वेषां सर्व्वमाख्यातुमर्हसि।
एवमुक्ता हनुमता तापसी धर्म्मचारिणी ॥ ९ ॥
प्रत्युवाच हनूमन्तं सर्वभूतहिते रता।
मयो नाम महातेजा मायावी वानरर्षभ ! ॥ १० ॥
तेनेदं निर्म्मितं सर्वं मायया काञ्चनं वनम्।
पुरा दानवमुख्यानां विश्वकर्म्मा बभूव ह ॥ ११ ॥
येनेदं काञ्चनं दिव्यं निर्म्मितं भवनोत्तमम्।
स तु वर्षसहस्राणि तपस्तप्त्वा महद्वने ॥ १२ ॥
पितामहाद्वरं लेभे सर्वमौशनसन्धनम्।

कस्य तेजसा सम्भूता इति शेषः ॥ ७ ॥

आत्मनस्तवेत्यर्थः। कस्यवान्यस्य वेत्यर्थः ॥ ८ ॥

अजानताम् एतत्स्वरूपमजानताम् ॥ ९ ॥ १० ॥

मायया विचित्रनिर्माणशक्त्या। को मय इत्याशङ्क्य तत्प्रसिद्धमाह,—पुरेति। विश्वकर्मा शिल्पीह प्रसिद्धम् ॥ ११ ॥

येनेदं निर्मितम्। स दानवानां विश्वकर्मेत्यन्वयः। निर्माणशक्ति बीजमाह,—सत्विति ॥ १२ ॥

विधाय सर्वं बलवान् सर्वकामेश्वरस्तदा ॥ १३ ॥
उवास सुखितः कालं कञ्चिदस्मिन् महावने ।
तमप्सरसि हेमायां सक्तं दानवपुङ्गवम् ॥ १४ ॥
विक्रम्यैवाशनिं गृह्य जघानेशः पुरन्दरः ।
इदञ्च ब्रह्मणा दत्तं हेमायै वनमुत्तमम् ॥ १५ ॥
शाश्वतः कामभोगश्च गृहञ्चेदं हिरण्मयम् ।
दुहिता मेरुसावर्णेरहं तस्याः स्वयम्प्रभा ॥ १६ ॥

वरं विचित्रसृष्टिसामर्थ्यरूपम् । अपिच सर्वमौशनसन्धनं निर्माणसाधनपदार्थजातं निर्माणसाधनशिल्पं शास्त्रञ्चानञ्च लेभे । शिल्पशास्त्रस्योशनःप्रणीतत्वात्तद्धनत्वव्यपदेशः । बलवान् उक्तरूपबलवान् । सर्वकामेश्वरः स्वसृष्टिभोग्यविशेषाणामीश्वरो भोक्ता ॥ १३ ॥

सुखितोऽचोवास । हेमायां तदाख्याप्सरसि सक्तम् ॥ १४ ॥

दानवपुङ्गवमशनिं गृह्य गृहीत्वा विक्रम्यैव युद्धं कृत्वैव पुरन्दरो जघान । यद्यप्यसुरशिल्पी मयो नित्य इति कथं हननं तस्य । तथापि य एवासुरशिल्पिपदस्थः सर्वोऽपि मयाख्य इति प्रवाहनित्यतैव तस्येन्द्रवदिति न दोषः । तस्मिंश्च हते इदं वनं शाश्वतः कामभोग इदं गृहञ्च । मयभुक्तायै हेमायै न्यायप्राप्तत्वात् भगवता ब्रह्मणा दत्तमित्यर्थ एतेन विचित्रनिर्माणसामर्थ्यगुणयोगादत्र ब्रह्मशब्दो मयदानवपर इत्यपास्तं हतेन दानासम्भवात् ॥ १५ ॥

स्वयंप्रभेति । अन्वर्थं नाम तस्याः तेन सूर्य्यावलोकाभावेऽपि प्रकाशवत्त्वमुपपादितम् । तस्या हेमायाः भवनमित्यन्वयः ॥ १६ ॥

इदं रक्षामि भवनं हेमाया वानरोत्तम ! ।
मम प्रियसखी हेमा नृत्यगीतविशारदा ॥ १७ ॥
तया दत्तवरा चास्मि रक्षामि भवनं महत् ।
किं कार्य्यं कस्य वा हेतोः कान्ताराणि प्रपद्यथ ॥ १८ ॥
कथञ्चेदं वनं दुर्गं युष्माभिरुपलक्षितम् ।
शुचीन्यभ्यवहाराणि मूलानि च फलानि च ।
भुक्त्वा पीत्वा च पानीयं सर्वं मे वक्तुमर्हसि ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
एकपञ्चाशः सर्गः ॥ ५१ ॥

ननु त्वं किमर्थं रक्षसि तत्राह,—मम प्रियसखीति ॥ १७ ॥

दत्तवरा रक्षणसामर्थ्यवत्वात् सखित्वेन प्रार्थितरक्षणा च । एवं स्ववृत्तान्तमुक्त्वा हनूमदादिवृत्तान्तं पृच्छति किमिति ॥ १८ ॥

अभ्यवहाराणि अभ्यवहार्य्याणि ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धाकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

# द्विपञ्चाशः सर्गः ।



अथ तानब्रवीत् सर्व्वान् विश्रान्तान् हरियूथपान् ।
इदं वचनमेकाग्रा तापसी धर्म्मचारिणी ॥ १ ॥
वानरा ! यदि वः खेदः प्रनष्टः फलभक्षणात् ।
यदि चैतन्मया श्राव्यं श्रोतुमिच्छामि तां कथाम् ॥ २ ॥
तस्यास्तद्वचनं श्रुत्वा हनूमान् मारुतात्मजः ।
आर्जवेन यथातत्त्वमाख्यातुमुपचक्रमे ॥ ३ ॥
राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ॥ ४ ॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या सह भार्य्यया ।
तस्य भार्य्या जनस्थानाद्रावणेन हृता बलात् ॥ ५ ॥
वीरस्तस्य सखा राज्ञः सुग्रीवो नाम वानरः ।
राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥ ६ ॥

इदं वचनं वक्ष्यमाणम् ॥ १ ॥
यदि चैतत् किं कार्य्यमित्यादि प्राक्पृष्टार्थतत्त्वम् ॥ २ ॥ ३ ॥
सर्वलोकराजत्वेन तस्यैश्वर्य्यं सूचितम् ॥ ४ ॥
बलात् बलात्कारेण ॥ ५ ॥ ६ ॥

अगस्त्यचरितामाशां दक्षिणां यमरक्षिताम्।
सहैभिर्वानरैर्मुख्यैरङ्गदप्रमुखैर्वयम् ॥ ७ ॥
रावणं सहिताः सर्वे राक्षसं कामरूपिणम्।
सीतया सह वैदेह्या मार्गद्धमिति चोदिताः ॥ ८ ॥
विचित्य तु वनं सर्वं समुद्रं दक्षिणाम् दिशम्।
वयं बुभुक्षिताः सर्वे वृक्षमूलमुपाश्रिताः ॥ ९ ॥
विवर्णवदनाः सर्वे सर्वे ध्यानपरायणाः।
नाधिगच्छाम हे पारं मग्नाश्चिन्तामहार्णवे ॥ १० ॥
चारयन्तस्ततश्चक्षुर्दृष्टवन्तो महद्बिलम्।
लतापादपसम्पन्नं तिमिरेण समावृतम् ॥ ११ ॥
अस्माद्धंसा जलक्लिन्नाः पक्षैः सलिलरेणुभिः।
कुरराः सारसाश्चैव निष्पतन्ति पतत्त्रिणः ॥ १२ ॥

अङ्गदप्रमुखैर्वानरैः सह वयं प्रस्थापिताः ॥ ७ ॥

सहिता मिलिताः सन्तो रावणं सीतया सह मार्गद्धमिति वयं चोदितास्स्मः ॥ ८ ॥

तदाह,—विचित्यत्विति। समुद्रं विचेतुकामा इति शेषः ॥ ९ ॥

नाधिगच्छाम हे इति स्वयंप्रभासम्बोधनं नाध्यगच्छाम। पारं चिन्तामहार्णवस्येति शेषः ॥ १० ॥ ११ ॥

सलिलरेणुभिः सलिलपद्मरेणुयुक्तपक्षैरुपलक्षिता इत्यर्थः। निष्पतन्ति निष्पतिताः ॥ १२ ॥

साध्वत्र प्रविशामेति मया तूक्ताः प्लवङ्गमाः।
तेषामपि हि सर्व्वेषामनुमानमुपागतम्॥ १३॥
अस्मिन्निपतिताः सर्वेऽप्यथ कार्य्यत्वरान्विताः।
ततो गाढ़ं निपतिता गृह्य हस्तैः परस्परम्॥ १४॥
इदं प्रविष्टाः सहसा बिलं तिमिरसंवृतम्।
एतन्नः कार्य्यमेतेन कृत्येन वयमागताः॥ १५॥
त्वाञ्चैवोपगताः सर्वे परिद्यूना बुभुक्षिताः।
आतिथ्यधर्म्मदत्तानि मूलानि च फलानि च॥ १६॥
अस्माभिरुपयुक्तानि बुभुक्षापरिपीड़ितैः।
यत्त्वया रक्षिताः सर्वे म्रियमाणा बुभुक्षया॥ १७॥
ब्रूहि प्रत्युपकारार्थं किं ते कुर्वन्तु वानराः।
एवमुक्ता तु सर्वज्ञा वानरैस्तैः स्वयम्प्रभा॥ १८॥
प्रत्युवाच ततः सर्व्वानिदं वानरयूथपान्।

अनुमानं जलानुमापको हेतुरागतं मनः प्राप्तम्॥ १३॥

अस्मिन् देशे ततो गच्छाम इत्युक्त्वा निबिड़ान्धकारत्वात् परस्परं हस्तैर्गाढ़ं गृहीत्वा। निपतिताः गुहामिति शेषः। हस्ते इति पाठेऽपि हस्तैरित्यर्थः। परिष्वज्येति। पूर्वोक्तस्वरसात्॥ १४॥

एतत् सीतान्वेषणरूपम्॥ १५॥

यतो बुभुक्षिताः अतः परिद्यूनाः क्षीणाः॥ १६॥ १७॥

किन्ते कुर्वन्तु प्रियमिति शेषः॥ १८॥

सर्वेषां परितुष्टास्मि वानराणां तरस्विनाम् ॥ १९ ॥
चरन्त्या मम धर्म्मेण न कार्य्यमिह केनचित्।
एवमुक्तः शुभं वाक्यं तापस्या धर्मसंहितम् ॥ २० ॥
उवाच हनुमान् वाक्यं तामनिन्दितलोचनाम्।
शरणन्त्वां प्रपन्नाःस्मः सर्वे वै धर्म्मचारिणीम् ॥ २१ ॥
यः कृतः समयोऽस्मासु सुग्रीवेण महात्मना।
स तु कालो व्यतिक्रान्तो बिले च परिवर्त्तताम् ॥ २२ ॥
सा त्वमस्माद्बिलादस्मानुत्तारयितुमर्हसि।
तस्मात् सुग्रीववचनादतिक्रान्तान् गतायुषः ॥ २३ ॥
त्रातुमर्हसि नः सर्व्वान् सुग्रीवभयशङ्कितान्।
महच्च कार्य्यमस्माभिः कर्त्तव्यं धर्म्मचारिणि ! ॥ २४ ॥
तच्चापि न कृतं कार्य्यमस्माभिरिहवासिभिः।
एवमुक्ता हनुमता तापसी वाक्यमब्रवीत् ॥ २५ ॥

परितुष्टा स्मि प्रत्युपचिकीर्षावचनेनैवेति भावः। धर्मेण चरन्त्याः धर्मानुष्ठानेन वर्त्तमानायाः ॥ १९ ॥

एवमुक्त इति ॥ २० ॥ २१ ॥

समयः कालावधिर्मासरूपः। बिले च निले एव ॥ २२ ॥

तस्माद्धेतोरस्मात् बिलादस्मानित्यन्वयः। गतायुषो नष्टजीवितान् तत्र हेतुः सुग्रीववचनादतिक्रान्तानिति सुग्रीवाज्ञप्तकालादतिक्रान्त-कालानित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥

जीवता दुष्करं मन्ये प्रविष्टेन निवर्त्तितुम्।
तपसः सुप्रभावेण नियमोपार्जितेन च ॥ २६ ॥
सर्व्वानेव विलादस्मात्तारयिष्यामि वानरान्।
निमीलयत चक्षूंषि सर्व्वे वानरपुङ्गवाः! ॥ २७ ॥
न हि निष्क्रमितुं शक्यमनिमीलितलोचनैः।
ततो निमीलिताः सर्व्वे सुकुमाराङ्गुलैः करैः ॥ २८ ॥
सहसा पिदधुर्दृष्टिं हृष्टा गमनकाङ्क्षया।
वानरास्तु महात्मानो हस्तरुद्धमुखास्तदा ॥ २९ ॥
निमेषान्तरमात्रेण विलादुत्तारितास्तया।
उवाच सर्व्वांस्तांस्तत्र तापसी धर्म्मचारिणी ॥ ३० ॥
निःसृतान् विषमात्तस्मात् समाश्वास्येदमब्रवीत्।
एष विन्ध्यगिरिः श्रीमान्नानाद्रुमलतायुतः ॥ ३१ ॥
एष प्रस्रवणः शैलः सागरोऽयं महोदधिः।

प्रविष्टेन इदं बिलं प्रविष्टेन प्राणिना जीवता अस्मान्निवर्त्तितुं दुष्करं मन्ये तर्हि वयं किं कुर्मस्तत्राह,—तपस इति ॥ २६ ॥ २७ ॥

निमीलिताःसन्तोऽकस्मादुन्मीलनभिया सुकुमाराङ्गुलैः करैः ॥ २८ ॥

सहसा दृष्टिं पिदधुः ॥ २९ ॥ ३० ॥

इदमब्रवीद्दिङ्मोहभ्रान्त्यर्थमिति भावः ॥ ३१ ॥

प्रस्रवणः किष्किन्धासमीपप्रस्रवणादन्योऽयमित्याहुः। अत्युचत्वा-

स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरर्षभाः !।
इत्युक्त्वा तद्बिलं श्रीमत् प्रविवेश स्वयम्प्रभा ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
द्विपञ्चाशः सर्गः ॥ ५२ ॥

स्ततोऽपि तस्य दर्शनमित्यन्ये। यत्रेच्छा तत्र गन्तव्यमिति तात्पर्यम् ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

## त्रिपञ्चाशः सर्गः ।

ततस्ते ददृशुर्घोरं सागरं वरुणालयम् ।
अपारमभिगर्जन्तं घोरैरूर्म्मिभिराकुलम् ॥ १ ॥
मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम् ।
तेषां मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः ॥ २ ॥
विन्ध्यस्य तु गिरेः पादे सम्प्रपुष्पितपादपे ।
उपविश्य महात्मानश्चिन्तामापेदिरे तदा ॥ ३ ॥
ततः पुष्पातिभाराग्रान् लताशतसमावृतान् ।
द्रुमान् वासन्तिकान् दृष्ट्वा बभूवुर्भयशङ्किताः ॥ ४ ॥
ते वसन्तमनुप्राप्तं प्रतिवेद्य परस्परम् ।
नष्टसन्देशकालार्थां निपेतुर्धरणीतले ॥ ५ ॥

तत इति ॥ १ ॥

गिरिदुर्गम् ऋक्षबिलाख्यं समयः कालावधिः ॥ २ ॥

तदा शिशिरारम्भसमये ॥ ३ ॥

पुष्पातिभारयुक्तान्यग्राणि येषाम् । वासन्तिकान् वसन्तकाले फल-
वतः आम्रादीन् ॥ ४ ॥

भयकृतशङ्कां विवृणोति । ते इति वसन्तमनुप्राप्तं प्रकृतशिशिर-

ततस्तान् कपिवृद्धांश्च शिष्टांश्चैव वनौकसः।
वाचा मधुरयाभाष्य यथावदनुमान्य च ॥ ६ ॥
स तु सिंहवृषस्कन्धः पीनायतभुजः कपिः।
युवराजो महाप्राज्ञ अङ्गदो वाक्यमब्रवीत् ॥ ७ ॥
शासनात् कपिराजस्य वयं सर्व्वे विनिर्गताः।
मासः पूर्णो बिलस्थानां हरयः ! किं न बुध्यत ॥ ८ ॥
वयमाश्वयुजे मासि कालसंख्या व्यवस्थिताः।
प्रस्थिताः सोऽपि चातीतः किमतः कार्य्यमुत्तरम् ॥ ९ ॥

कालस्योत्तरकालमासन्नतया प्राप्तप्रायम्। नष्टः सन्देशकाले राज-सन्दिष्टमासरूपे कालेऽनुष्ठेयोऽर्थो येषां ते ॥ ५ ॥

तान् भयेन भूतले पतितान्। शिष्टान् वृद्धेभ्योऽन्यान्। अनुमान्य सम्पूज्य ॥ ६ ॥

प्राज्ञ अङ्गद इत्यार्षम् ॥ ७ ॥

शासनव्यतिक्रमं दर्शयति। मास इति। अन्वेषणावधित्वेन दत्त इत्यर्थः। किं न बुध्यत कालात्ययमिति शेषः ॥ ८ ॥

कालात्ययमेवाह,—वयमिति। आश्वयुजेऽतीतप्राये इति शेषः। कार्त्तिके समनुप्राप्ते त्वं रावणवधे यतेत्युक्तेः। ततः पञ्चदशरात्रकाल-संख्यया प्रवर्त्तितदूतैर्व्यवस्थिताः मिलिता एवञ्चामान्तमानेनाश्विनस्योत्तरे दीपोत्सवामायुते पक्षे सर्वसेनागमनं किष्किन्धायाम्। रामस्य क्रोधस्तु तत्रैव पक्षे कार्त्तिकसन्निधावपि तदुद्यमाभावकृतः। ततः कार्त्तिकेऽव-धिरन्वेषणस्य ततो मार्गशुक्ले इदं वचनम्। प्रायस्तदर्धे पौषः व्यय-

भवन्तः प्रत्ययं प्राप्ता नीतिमार्गविशारदाः ।
हितेष्वभिरता भर्त्तुर्निसृष्टाः सर्व्वकर्म्मसु ॥ १० ॥
कर्म्मस्वप्रतिमाः सर्व्वे दिक्षु विश्रुतपौरुषाः ।
मां पुरस्कृत्य निर्याताः पिङ्गाक्षप्रतिचोदिताः ॥ ११ ॥
इदानीमकृतार्थानां मर्त्तव्यं नात्र संशयः ।

मासः । कार्त्तिकादित्रये नान्यत इत्युक्तेः । अतो मार्गशुक्ल एव आम्रादीनां पुष्पोद्गमः । उत्पाततो वा । तादृशरीत्या पुष्पोद्गमं दृष्ट्वापि वसन्तासन्नतानुमानेन भयोपपत्तिः । कतकादयस्तु । अन्वेषणेऽवधित्वेन दत्तः पौषो मासः । आश्वयुजे इत्यस्य तत्प्रत्यासन्नकार्त्तिकान्ते इत्यर्थः । कालसंख्येति । कार्त्तिकोत्तरं पञ्चदशरात्रसंख्याकालेनावधिना वानरानयनाय दूतप्रेषणम् । ततः पूर्णिमान्तमानेन मार्गशुक्लेन सर्ववानरागमनम् । ततः पौषाद्यदिने दिक्ष्वन्वेषणाय वानरप्रस्थानम् । तत्र पौषे माघकृष्णीय किञ्चिद्दिनसहितेऽतीते इदं वाक्यमित्याहुः । तेषां सीतानयनोत्तरं सीताम्प्रति द्वादशमासा रावणावधिरिति स्पष्टमेव । पम्पायां चैत्रे आगमनमित्यस्योक्तत्वात्ततः पूर्वं फाल्गुने सीतापहार इति च स्पष्टमेव । एवञ्च माघकृष्णे तच्छुक्लादौ वा हनूमतः सीतासमीपगमने हनूमन्तम्प्रति वर्त्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गमेति सीतोक्तिविरोधः । किञ्च हनूमतो लङ्काप्रवेशदिने प्रदोषसमये एव पूर्णकल्पचन्द्रोदयवर्णनञ्च विरोध इत्याहुः ॥ ६ ॥

उक्तमेव विस्तरेणाह,—भवन्त इति । प्रत्ययम् अन्वेषणार्थराजनियोगं प्राप्ता ज्ञातवन्तो भवन्तो मां पुरस्कृत्य निर्याता इत्यन्वयः ॥ १० ॥ ११ ॥

हरिराजस्य सन्देशमकृत्वा कः सुखी भवेत् ॥ १२ ॥
अस्मिन्नतीते काले तु सुग्रीवेण कृते स्वयम्।
प्रायोपवेशनं युक्तं सर्व्वेषाञ्च वनौकसाम् ॥ १३ ॥
तीक्ष्णः प्रकृत्या सुग्रीवः स्वामिभावे व्यवस्थितः।
न क्षमिष्यति नः सर्व्वानपराधकृतो गतान् ॥ १४ ॥
अप्रवृत्तौ च सीतायाः पापमेव करिष्यति।
तस्मात् क्षममिहाद्यैव गन्तुं प्रायोपवेशनम् ॥ १५ ॥
त्यक्त्वा पुत्रांश्च दारांश्च धनानि च गृहाणि च।
ध्रुवं नो हिंसते राजा सर्व्वान् प्रतिगतानितः ॥ १६ ॥
बधेनाप्रतिरूपेण श्रेयान् मृत्युरिहैव नः।
न चाहं यौवराज्येन सुग्रीवेणाभिषेचितः ॥ १७ ॥

तस्य कालस्य च बिले गतत्वात् इदानीमकृतार्थानामस्माकं मर्त्तव्यं मरणमेवानुष्ठेयम्। कुतस्तत्राह,—हरिराजस्येति ॥ १२ ॥

प्रायोपवेशनं युक्तम्। प्राणत्यागायेति शेषः ॥ १३ ॥

स्वामिभावे निग्रहानुग्रहकृद्राजभावे व्यवस्थितः। अपराधः कालातिक्रमरूपः। गतान् स्वसमीपं प्राप्तान् ॥ १४ ॥

अप्रवृत्तौ प्रवृत्तिप्रतिपादनाभावे। पापं बधरूपम् ॥ १५ ॥

पुत्रादित्यक्त्वा प्रायोपवेशनं गन्तुं कर्त्तुं क्षमम् युक्तमित्यन्वयः। तत्र हेतुः ध्रुवमिति ॥ १६ ॥

अप्रतिरूपेण अपराधमूलत्वेनास्य बधस्याप्रतिरूपत्वम्। ननु युव-

नरेन्द्रेणाभिषिक्तोऽस्मि रामेणाक्लिष्टकर्म्मणा।
स पूर्व्वं बद्धवैरो मां राजा दृष्ट्वा व्यतिक्रमम्॥ १८॥
घातयिष्यति दण्डेन तीक्ष्णेन कृतनिश्चयः।
किं मे सुहृद्भिर्व्यसनं पश्यद्भिर्जीवितान्तरे।
इहैव प्रायमासिष्ये पुण्ये सागररोधसि॥ १९॥
एतत् श्रुत्वा कुमारेण युवराजेन भाषितम्।
सर्व्वे ते वानरश्रेष्ठाः करुणं वाक्यमब्रुवन्॥ २०॥
तीक्ष्णः प्रकृत्या सुग्रीवः प्रियारक्तश्च राघवः।
समीक्ष्याकृतकार्य्यांस्तु तस्मिंश्च समये गते॥ २१॥
अदृष्टायाश्च वैदेह्यां दृष्ट्वा चैव समागतान्।
राघवप्रियकामाय घातयिष्यत्यसंशयम्॥ २२॥
न क्षमश्चापराद्धानां गमनं स्वामिपार्श्वतः।

राजत्वेनाभिषिच्य कथमसौ त्वां हनिष्यतीत्यत आह,—न चाहमिति॥ १७॥

पूर्वं मां प्रति बद्धवैरः। स राजा सुग्रीवो व्यतिक्रममाज्ञालङ्घनं दृष्ट्वा घातयिष्यत्येव॥ १८॥

जीवितान्तरे राजाज्ञया जीवितनाशावधौ काले प्राप्ते मम व्यसनं पश्यद्भिरपि सुहृद्भिः किं कार्य्यमिति किं साध्यमित्यर्थकं प्रश्नः। यदेवमत इहैवेति॥ १९॥ २०॥

प्रियायां रक्तोऽनुरक्तः तस्मिन् समयेऽन्वेषणावधिकाले॥ २१॥ २२॥

प्रधानभूताश्च वयं सुग्रीवस्य समागताः ॥ २३ ॥
इहैव सीतामन्वीक्ष्य प्रवृत्तिमुपलभ्य वा।
नो चेद्गच्छामन्तं वीरं गमिष्यामो यमक्षयम् ॥ २४ ॥

प्लवङ्गमानान्तु भयार्दितानां
श्रुत्वा वचस्तार इदं बभाषे।
अलं विषादेन बिलं प्रविश्य
वसाम सर्व्वे यदि रोचते वः ॥ २५ ॥
इदं हि मायाविहितं सुदुर्गमं
प्रभूतपुष्पोदकभोज्यपेयम्।
इहास्ति नो नैव भयं पुरन्दरात्
न राघवाद्वानरराजतोऽपि वा ॥ २६ ॥
श्रुत्वाङ्गदस्यापि वचोऽनुकूल-
मूचुश्च सर्व्वे हरयः प्रतीताः।

अपराद्धानां कृतापराधानां स्वामिपार्श्वतः स्वामिपार्श्वे सुग्रीवस्य प्रधानभूताः सेवका वयमिह समागताः ॥ २३ ॥

उपलभ्य वा गच्छाम। नोचेदिहैव स्थित्वा यमगृहं गमिष्यामः ॥ २४ ॥

बिलं स्वयम्प्रभाया बिलम् ॥ २५ ॥

कथमत्र प्राणत्राणमत आह,—इदं हीति। नो इति लोकौ ॥ २६ ॥

यथा न हन्येम तथाविधान-

मसक्तमद्यैव विधीयतां नः ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे

त्रिपञ्चाशः सर्गः ॥ ५३ ॥

अङ्गदस्यापि अपि तारस्य असक्तमविलम्बम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धा-

काण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

## चतुःपञ्चाशः सर्गः।

तथा ब्रुवति तारे तु ताराधिपतिवर्चसि।
अथ मेने हृतं राज्यं हनूमानङ्गदेन तत् ॥ १ ॥
बुद्ध्या ह्यष्टाङ्गया युक्तं चतुर्बलसमन्वितम्।
चतुर्दशगुणं मेने हनूमान् वालिनः सुतम् ॥ २ ॥
आपूर्य्यमाणं शश्वच्च तेजोबलपराक्रमैः।
शशिनं शुक्लपक्षादौ वर्द्धमानमिव श्रिया ॥ ३ ॥

ताराधिपतिवर्चसि तारे तथा ब्रुवति तु शब्दादङ्गदे प्रतिषेधाकरणात्तदनुमन्यमाने सति। अथानन्तरमङ्गदेन राज्यं सुग्रीवीयं कपिराज्यं हृतमिति मेने। तद्राज्यं स्वयम्प्रभा बिलराज्यमित्यर्थ इत्यन्ये ॥ १ ॥

ननु अङ्गदे कथं राज्यापहारचिन्ताऽत आह,—बुद्ध्येति। अष्टाङ्गया अष्टगुणया। तेऽत्र गुणाः। शुश्रूषाश्रवणञ्चैव ग्रहणं धारणं तथा। ऊहापोहार्थविज्ञानं तत्त्वज्ञानञ्च धीगुणा इति प्रसिद्धाः। चतुर्बलम्। सामदानभेदनिग्रहरूपोपायचतुष्टयजम्। चतुर्दशगुणाम्। देशकालज्ञतादार्ढ्यं सर्वक्लेशसहिष्णुता। सर्वविज्ञानता दाक्ष्यमूर्जः संवृतमन्त्रता। अविसंवादिता शौर्य्यं भक्तिज्ञत्वं कृतज्ञता। शरणागतवात्सल्यममर्षित्वमचापलम्। इत्युक्तचतुर्दशगुणयुक्तम् ॥ २ ॥ ३ ॥

बृहस्पतिसमं बुद्ध्या विक्रमे सदृशं पितुः।
शुश्रूषमाणं तारस्य शुक्रस्येव पुरन्दरम् ॥ ४ ॥
भर्त्तुरर्थे परिश्रान्तं सर्व्वशास्त्रविशारदः।
अभिसन्धातुमारेभे हनूमानङ्गदं ततः ॥ ५ ॥
स चतुर्णामुपायानां द्वितीयमुपवर्णयन्।
भेदयामास तान् सर्व्वान् वानरान् वाक्यसम्पदा ॥ ६ ॥
तेषु सर्व्वेषु भिन्नेषु ततो भीषयदङ्गदम्।
भीषणैर्विविधैर्वाक्यैः कोपोपायसमन्वितैः ॥ ७ ॥

तारस्य वचः शुश्रूषमाणं यतो पश्यत्ततो राज्यं हृतं मेने। शुक्रस्येव पुरन्दरम्। विपरीतोपदेशग्रहे उपमेषा। शुक्रशब्दोऽत्र बृहस्पतिपर इति कश्चित् ॥ ४ ॥

भर्त्तुः सुग्रीवस्यार्थेऽर्थकरणे परिश्रान्तं विमुखम्। सर्वशास्त्रविशारद इति हनुमद्विशेषणम्। अभिसन्धातुं तारादिभ्यो भेदयितुम् ॥ ५ ॥

स इति। अभिसन्धित्सुर्हनुमानित्यर्थः। द्वितीय उपायो भेदः तमुपवर्णयन् हेतौ शता। तदुपायावलम्बनहेतुना। तान् सर्वानङ्गदानुवर्त्तिनः। वाक्यसम्पदा भेदजननक्षमन्यायोपेतेन। हीनाश्रयो न कर्त्तव्यः कर्त्तव्यो महदाश्रय इत्यादिवाक्यसमूहेन ॥ ६ ॥

कोपोपायोदयस्तत्समन्वितैः। कोपायसमन्वितैरिति पाठ्कः पाठः। कोपापनयनसामर्थ्ययुक्तैः। अभीषयत्। न्यायप्रदर्शनपूर्वं भयमुत्पादयामास ॥ ७ ॥

त्वं समर्थतरः पित्रा युद्धे तारेय ! वै ध्रुवम्।
दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥ ८ ॥
नित्यमस्थिरचित्ता हि कपयो हरिपुङ्गव ! ।
नाज्ञाप्यं विषहिष्यन्ति पुत्रदारं विना त्वया ॥ ९ ॥
त्वां नैते ह्यनुरज्येयुः प्रत्यचं प्रवदामि ते ।
यथायं जाम्बवान्नीलः सुहोत्रश्च महाकपिः ॥ १० ॥
न ह्यहन्ते इमे सर्व्वे सामदानादिभिर्गुणैः ।
दण्डेन न त्वया शक्याः सुग्रीवादपकर्षितुम् ॥ ११ ॥

भीषणमेव स्तुतिपूर्वं करोति। त्वमिति। त्वं पित्रा सुग्रीवेण युद्धे समर्थतरः। यद्वा त्वं पित्रा सदृश इति शेषः। अतएव युद्धे समर्थतर इत्यर्थः। दृढं धारयितुं शक्तः अस्य यदि सर्वे कपयस्त्वामनुवर्त्स्यन्तीति शेषः। कपिराज्यं किष्किन्धायां वा ऋच्चबिले वा ॥ ८ ॥

न च तदस्तीत्याह,—नित्यमिति स्वभावादिति भावः। अस्थैर्य्ये कारणान्तरमप्याह,—पुत्रदारं विनेति। पुत्रदाराणां किष्किन्धावर्त्तिनां सुग्रीवायत्तत्वात्। त्वया सह बिलवस्थाने तद्वियोगस्य स्पष्टत्वात् निगृह्य स्थापनमप्यशक्यमित्याह,—त्वयाज्ञाप्यं त्वत्कर्तृकमाज्ञापनं न सहिष्यन्ति। त्वत्तोऽप्यधिकबलत्वादिति भावः ॥ ९ ॥

पुत्रदारं हित्वा एते तां नानुरज्येयुः त्वयि नानुरक्ता भवेयुः। उक्तमर्थं स्पष्टं यथा भवति तथा प्रवदामि प्रदर्शयामि। तदेव दर्शयति। अयं जाम्बवानिति। १० ॥

विगृह्यासनमप्याहुर्दुर्बलेन बलीयसा।
आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बलः॥ १२॥
यां चेमां मन्यसे धात्रीमेतद्बिलमिति श्रुतम्।
एतल्लक्ष्मणबाणानामीषत्कार्य्यं विदारणम्॥ १३॥
स्वल्पं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा।
लक्ष्मणो निशितैर्बाणैर्भिन्द्यात्पत्रपुटं यथा॥ १४॥
लक्ष्मणस्य च नाराचा बहवः सन्ति तद्विधाः।
वज्राशनिसमस्पर्शा गिरीणामपि दारकाः॥ १५॥

अहमिति स्वनिर्देशः। ते इमे सर्वे सामदानादिभिर्गुणैरुपायै-स्त्वया सुग्रीवादपकर्षितुं शक्या न हि नापि दण्डेन॥ ११॥

ननु गच्छत यूयमपि एकेनैव मया स्थेयमत आह,—विगृह्येति। दुर्बलेन सह विगृह्य बलीयसा आसनं स्थितिः। शक्यत्वमाहुः। न तु दुर्बलस्य बलीयसा विगृह्यासनं शक्यम्। तस्मादात्मरक्षाकरः आत्म-रक्षाकरणेच्छुः पुरुषः दुर्बलः सन् बलीयसा न विगृह्णीत॥ १२॥

नन्वेषा गुहा न बलवतः साध्येत्याशङ्क्याह,— यामिति। यामिमां गुहां धात्रीं रक्षिकां मन्यसे नेयं रक्षिकेति शेषः। कुतस्तत्राह,—यदे-तद्बिलम् ऋक्षबिलं निर्भयमिति तारात् श्रुतम्। एतत् एतद्बिषय-विदारणं लक्ष्मणबाणानामीषत्कार्य्यम् ईषत्करं खलभाव आर्षः॥ १३॥

पुरा पूर्व्वं मायया भूतलान्तर्निर्मितैतत्पुरवर्त्तिमयवधार्थम् अशनिं तत्प्रदेशभुवि क्षिपता इन्द्रेण स्वल्पमेव कृतं मयवधमात्रं कृतं न तु पुरं भग्नम्। लक्ष्मणस्तु निशितैर्बाणैरेतत्पुरमपि पत्रपुटमिव भिन्द्यात्॥ १४॥

अवस्थानं यदैव त्वमासिष्यसि परन्तप ! ।
तदैव हरयः सर्व्वे त्यच्यन्ति कृतनिश्चयाः ॥ १६ ॥
स्मरन्तः पुत्रदाराणां नित्योद्विग्ना बुभुक्षिताः ।
खेदिता दुःखशय्याभिस्त्वां करिष्यन्ति पृष्ठतः ॥ १७ ॥
स त्वं हीनः सुहृद्भिश्च हितकामैश्च बन्धुभिः ।
तृणादपि भृशोद्विग्नः स्पन्दमानाद्भविष्यसि ॥ १८ ॥
अत्युग्रवेगा निशिता घोरा लक्ष्मणसायकाः ।
अपावृत्तं जिघांसन्तो महावेगा दुरासदाः ॥ १९ ॥

कुतस्तत्राह,—लक्ष्मणस्येति। तद्विधा इत्यस्य विवरणं वज्राशनी-त्यादि। वज्रमिन्द्रकरस्थम्। अशनिर्मेघस्थः। यद्वा तद्विधाः वालि-हन्तृबाणसदृशाः ॥ १५ ॥

यदैवात्र बिले त्वमवस्थानमासिष्यसि प्राप्स्यसि तदैव सर्वे हरयः कृतनिश्चयास्त्वान्त्यच्यन्ति ॥ १६ ॥

नित्योद्विग्नाः रामलक्ष्मणसुग्रीवेभ्यो बुभुक्षिताः पुत्रदारादिजसुख-भोगेच्छवः। त्वया दुःखशय्याभिर्दुःखस्थित्यादिभिः खेदिताः सन्तस्त्वां पृष्ठतः करिष्यन्ति सर्वथा त्यच्यन्त्येवेत्यर्थः ॥ १७ ॥

स्पन्दमानात्तृणादपि लघुरिति शेषः। अतएव भृशोद्विग्नो भवि-ष्यसि। यद्वा तादृशतृणात्तं दृष्ट्वा भृशोद्विग्नो रामाद्यागमनशङ्कयेति भावः ॥ १८ ॥

अतोऽत्युग्रवेगानिशिता घोरा लक्ष्मणसायकाः अपावृत्तं व्युत्थितं

अस्माभिस्तु गतं सार्द्धं विनीतवदुपस्थितम् ।
आनुपूर्व्यात्तु सुग्रीवो राज्ये त्वां स्थापयिष्यति ॥ २० ॥
धर्मराजः पितृव्यस्ते प्रीतिकामो दृढव्रतः ।
शुचिः सत्यप्रतिज्ञश्च स त्वां जातु न नाशयेत् ॥ २१ ॥
प्रियकामश्च ते मातुस्तदर्थञ्चास्य जीवितम् ।
तस्यापत्यञ्च नास्त्यन्यत्तस्मादङ्गद ! गम्यताम् ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
चतुःपञ्चाशः सर्गः ॥ ५४ ॥

त्वां जिघांसन्तो भवेयुः । सर्वत्रात्र लक्ष्मणनामग्रहणं तस्य क्रूरस्वभावत्वात् । इष्टप्राणां रामालक्ष्यत्वाच्च ॥ १९ ॥

एवं वास्तवं भयं प्रदर्श्य सुग्रीवसमाश्रयणमेव हितमित्याह,—अस्माभिरिति । आनुपूर्व्याज्ज्येष्ठपुत्रत्वप्रयुक्तानुक्रमात् ॥ २० ॥

राज्येऽवस्थाने हेतुमाह,—धर्मराजः धर्ममार्गवर्त्तिराजा । तथा प्रीतिकाम एव त्वयि नतु त्वद्वधकामः ॥ २१ ॥

इतश्च सर्वथैवमेवेत्याह,—प्रियकाम इति । अस्य जीवितं तदर्थं त्वन्मातुः प्रीतिसम्पादनप्रयोजनम् । गम्यताम् अस्माभिः सार्द्धमिति शेषः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धाकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

---

## पञ्चपञ्चाशः सर्गः ।

श्रुत्वा हनुमतो वाक्यं प्रश्रितं धर्मसंहितम् ।
स्वामिसत्कारसंयुक्तमङ्गदो वाक्यमब्रवीत् ॥ १ ॥
स्थैर्य्यमात्ममनःशौचमानृशंस्यमथार्जवम् ।
विक्रमश्चैव धैर्य्यञ्च सुग्रीवे नोपपद्यते ॥ २ ॥
भ्रातुर्ज्येष्ठस्य यो भार्य्यां जीवतो महिषीं प्रियाम् ।
धर्म्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥ ३ ॥
कथं स धर्म्मं जानीते येन भ्रात्रा दुरात्मना ।

प्रश्रितं विनीतं स्वामिसत्कारसंयुक्तम् । सुग्रीवसन्मानयुक्तमिति हनुमद्वाक्यविशेषणम् ॥ १ ॥

आत्ममनसोः शौचं कामादिदोषराहित्यम् ॥ २ ॥

तदनुपपत्तिमेव दर्शयति । भ्रातुरिति । ज्येष्ठस्य भ्रातुर्भार्य्याम् । धर्मेण मातरम् । धर्ममार्गेण वर्त्तमानाम् । ज्येष्ठभ्रातृपत्नीं तां मातृतुल्यां जीवतो मम समक्षम् । अनेन देवराच्च सुतोत्पत्तिमित्यतोऽपि धर्मत्वं वारितम् । यद्वा जीवतो महिषीमिति महिषयुद्धकालिकस्वीकारपरं यः स्वीकरोति कथं स धर्मं जानीते इत्यन्वयः । एतेन हनुमदुक्तं धर्मराजत्वं प्रत्याख्यातम् । एतद्वचोऽङ्गदस्य केवलरोषमूलं त्रैवर्णिकातिरिक्तधर्मास्मरणमूलकम् ॥ ३ ॥

युद्धायाभिनियुक्तेन बिलस्य पिहितं मुखम् ॥ ४ ॥
सत्यात्पाणिगृहीतश्च कृतकर्मा महायशाः ।
विस्मृतो राघवो येन स कस्य सुकृतं स्मरेत् ॥ ५ ॥
लक्ष्मणस्य भयेनेह नाधर्मभयभीरुणा ।
आदिष्टा मार्गितुं सीता धर्म्मस्तस्मिन् कथं भवेत् ॥ ६ ॥
तस्मिन् पापे कृतघ्ने तु स्मृतिभिन्ने चलात्मनि ।
आर्य्यः को विश्वसेज्जातु तत्कुलीनो विशेषतः ॥ ७ ॥
राज्ये पुत्रं प्रतिष्ठाप्य सगुणो विगुणोऽपि वा ।
कथं शत्रुकुलीनं मां सुग्रीवो जीवयिष्यति ॥ ८ ॥

स उक्तजुगुप्सितकर्मकारी । धर्माज्ञाने उपपत्त्यन्तरमप्याह,—युद्धाय युद्धार्थं गच्छता भ्रात्राभिनियुक्तेन बिलरक्षणनियुक्तेनेत्यर्थः ॥ ४ ॥

सत्यादग्निसाक्षिकतया पाणिगृहीतो मित्रं कृतो राघवोऽपि येन विस्मृतः स कस्य सुकृतमुपकारं स्मरेत् । न कस्यापीत्यतः कथं कृतघ्न इत्यर्थः ॥ ५ ॥

ननु तत्कार्य्ये प्रवृत्तत्वात्कथं न कृतज्ञोऽत आह,—लक्ष्मणस्येति । भयोपाधिकैषा प्रवृत्तिर्न धर्ममूलेति भावः । धर्मस्तस्मिन्निति पाठे धर्मं धर्मधीमूलं प्रवर्त्तनमित्यर्थः ॥ ६ ॥

स्मृतिभिन्ने । स्मृतिर्मन्वादीनां भिन्ना त्यक्ता येन । चलात्मनि चञ्चलान्तःकरणे तत्कुलीनः तज्ज्ञातिकोटिप्रविष्टः ॥ ७ ॥

तदेव विवृणोति । राज्ये इति । सुग्रीवः सगुणो निर्गुणो वास्तु

भिन्नमन्त्रोऽपराद्धश्च भिन्नशक्तिः कथं ह्यहम्।
किष्किन्धां प्राप्य जीवयम् अनाथ इव दुर्बलः॥ ९॥
उपांशुदण्डेन हि मां बन्धनेनोपपादयेत्।
शठः क्रूरो नृशंसश्च सुग्रीवो राज्यकारणात्॥ १०॥
बन्धनाच्चावसादान् मे श्रेयः प्रायोपवेशनम्।
अनुजानन्तु मां सर्व्वे गृहं गच्छन्तु वानराः॥ ११॥
अहं वः प्रतिजानामि न गमिष्याम्यहं पुरीम्।
इहैव प्रायमासिष्ये श्रेयो मरणमेव मे॥ १२॥
अभिवादनपूर्व्वन्तु राजा कुशलमत्र च।
अभिवादनपूर्व्वन्तु राघवौ बलशालिनौ॥ १३॥

न मे तद्विचारेण किञ्चित्। अपि तु शत्रुकुलीनं मां पुत्रं राज्ये प्रतिष्ठाप्य कथं सुग्रीवो जीवयिष्यति। न कथमपीत्यर्थः॥ ८॥

इतोऽपि न जीविष्यतीत्याह,—भिन्नेति। भिन्नो बिलप्रवेशरूपो मन्त्रो यस्य सः। एवं मन्त्रस्य यस्य कस्यापि मुखात् श्रवणेऽवश्यम्भाविनि स्पष्टमपराद्धश्च भवामि। हीनशक्तिः सुग्रीवापेक्षया हीनबलः। हनुमदुक्तरीत्या सहायबलहीनश्च॥ ९॥

उपांशुदण्डस्यैव रूपं बन्धनेनेति। पुत्र इति ज्ञात्वा वधाभावः। अपराद्ध इति च बन्धननिश्चयः॥ १०॥

तदेव द्रढयन्नाह,—बन्धनादिति। अवसादो बन्धनजं दुःखम्॥ ११॥ १२॥

वाच्यस्तातो यवीयान् मे सुग्रीवो वानरेश्वरः ।
आरोग्यपूर्व्वं कुशलं वाच्या माता रुमा च मे ॥ १४ ॥
मातरञ्चैव मे तारामाश्वासयितुमर्हथ ।
प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी ॥ १५ ॥
विनष्टमिह मां श्रुत्वा व्यक्तं हास्यति जीवितम् ।
एतावदुक्त्वा वचनं वृद्धांस्तानभिवाद्य च ॥ १६ ॥
विवेश चाङ्गदो भूमौ रुदन् दर्भेषु दुर्मुखः ।
तस्य संविशतस्तत्र रुदन्तो वानरर्षभाः ॥ १७ ॥
नयनेभ्यः प्रमुमुचुरुष्णं वै वारि दुःखिताः ।
सुग्रीवञ्चैव निन्दन्तः प्रशशंसन्त वालिनम् ॥ १८ ॥
परिवार्य्याङ्गदं सर्व्वे व्यवसन् प्रायमासितुम् ।
तद्वाक्यं वालिपुत्रस्य विज्ञाय प्लवगर्षभाः ॥ १९ ॥
उपस्पृश्योदकं सर्व्वे प्राङ्मुखाः समुपाविशन् ।
दक्षिणाग्रेषु दर्भेषु उदक्तीरं समाश्रिताः ॥ २० ॥

राजा सुग्रीवः कुशलमेव वाच्य इत्यनुकर्षः। नत्विदानीं दुःखवशादुक्तमित्यर्थः। राघवौ कुशलं वाच्यौ ॥ १३ ॥

अथ मातुः कुशलविज्ञापनशेषतया आरोग्यपूर्वकत्वविशेषाभिधित्सया च पुनः सुग्रीवे कुशलविज्ञापनमाह,—वाच्यस्तात इति ॥ १४ ॥ १५ ॥

वृद्धान् जाम्बवदादीन् ॥ १६ ॥ १७ ॥

सुग्रीवं निन्दन्तः अकृष्पष्या इति शेषः ॥ १८ ॥

मुमूर्षवो हरिश्रेष्ठा एतत् क्षममिति स्म ह।
रामस्य वनवासञ्च क्षयं दशरथस्य च॥ २१॥
जनस्थानवधञ्चैव वधञ्चैव जटायुषः।
हरणञ्चैव वैदेह्या वालिनश्च वधं तथा।
रामकोपञ्च वदतां हरीणां भयमागतम्॥ २२॥
स संविशद्भिर्बहुभिर्महीधरो
महाद्रिकूटप्रतिमैः प्लवङ्गमैः।
बभूव सन्नादितनिर्झरान्तरो
भृशं नदद्भिर्जलदैरिवाम्बरम्॥ २३॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
पञ्चपञ्चाशः सर्गः॥ ५५॥

व्यवसन् व्यवास्यन्नित्यर्थः॥ १९॥ २०॥

हरिश्रेष्ठा अपि एतत्प्रायोपवेशनमेवास्माकमद्य क्षमं युक्तमिति मन्यन्तेस्मेति शेषः। स्वामिनि म्रियमाणे तं परित्यज्यास्माकं गमनमयुक्तम् इति तत् क्षमत्वव्यवसायः। रामस्य वनवासमित्यादिनाऽग्रिमसर्गार्थसंक्षेपः॥ २१॥

भयमागतं सम्पातिजं वक्ष्यमाणं भयमित्यर्थः॥ २२॥

भृशं नदद्भिः सम्पातिजभयादिति शेषः॥ २३॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धाकाण्डे पञ्चपञ्चाशः सर्गः॥ ५५॥

---



## षट्पञ्चाशः सर्गः ।

उपविष्टास्तु ते सर्व्वे यस्मिन् प्रायं गिरिस्थले ।
हरयो गृध्रराजस्य तं देशमुपचक्रमे ॥ १ ॥
सम्पातिर्नाम नाम्ना तु चिरजीवी विहङ्गमः ।
भ्राता जटायुषः श्रीमान् विख्यातबलपौरुषः ॥ २ ॥
कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः ।
उपविष्टान् हरीन् दृष्ट्वा हृष्टात्मा गिरमब्रवीत् ॥ ३ ॥
विधिः किल नरं लोके विधानेनानुवर्त्तते ।
यथायं विहितो भक्ष्यश्चिरान् मह्यमुपागतः ॥ ४ ॥
परम्पराणां भक्षिष्ये वानराणां मृतं मृतम् ।
उवाचैतद्वचः पक्षी तान्निरीक्ष्य प्लवङ्गमान् ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा भक्ष्यलुब्धस्य पक्षिणः ।

गिरिस्थले गिरिप्रदेशे ॥ १ ॥ २ ॥ ३ ॥

विधिः क्रियाफलम् । नरं प्राणिनं विधानेन प्राचीनकर्मानुसारेण । यथा, तद्यथा तथोच्यत इत्यर्थः । अयमामिषरूपोऽस्माकं भक्ष्यः चिरात् मह्यं स्वत एवोपागतः ॥ ४ ॥

यतः परम्पराणां पङ्क्तित उपविष्टानां वानराणां मध्ये मृतं मृतं क्रमात् भक्षिष्ये तस्मात् इति पूर्वेण सम्बन्धः ॥ ५ ॥

अङ्गदः परमायत्तो हनूमन्तमथाब्रवीत् ॥ ६ ॥
पश्य सीतापदेशेन साक्षाद्वैवस्वतो यमः ।
इमं देशमनुप्राप्तो वानराणां विपत्तये ॥ ७ ॥
रामस्य न कृतं कार्य्यं न कृतं राजशासनम् ।
हरीणामियमज्ञाता विपत्तिः सहसागता ॥ ८ ॥
वैदेह्याः प्रियकामेन कृतं कर्म्म जटायुषा ।
गृध्रराजेन यत्तत्र श्रुतं वस्तदशेषतः ॥ ९ ॥
तथा सर्व्वाणि भूतानि तिर्य्यग्योनिगतान्यपि ।
प्रियं कुर्व्वन्ति रामस्य त्यक्त्वा प्राणान यथा वयम् ॥ १० ॥
अन्योऽन्यमुपकुर्व्वन्ति स्नेहकारुण्ययन्त्रिताः ।
ततस्तस्योपकारार्थं त्यजतात्मानमात्मना ॥ ११ ॥

परमायत्तः । परमखिन्नः ॥ ६ ॥

सीतापदेशेनेति । सीताव्याजेन प्राप्तप्रायोपवेशनामित्यर्थः । गृध्रापदेशेनेति पाठः सुगमः ॥ ७ ॥

अज्ञाता अचिन्तिता ॥ ८ ॥

तिर्य्यग्योनिभूतानामस्माकमिव तिर्य्यग्योन्यन्तरस्यापि सीतानिमित्तं विपत्तिर्जातेत्याह,—वैदेह्या इति । प्रत्यक्षं क्रियमाणाया इति शेषः ॥९॥

रामस्य प्रियं कुर्वन्तीत्यनेन तस्मिन् सर्वप्रेमास्पदत्वं सूचयता सर्वात्मत्वं सूचितम् ॥ १० ॥

सर्वात्म्यमेव द्रढयति । अन्योऽन्यमिति । स्नेहकारुण्ययन्त्रिताः । रामे इति शेषः । सर्वस्य रामत्वात्तदीयस्नेहेनैव परस्परोपकारकरणमित्यर्थः ।

प्रियं कृतं हि रामस्य धर्म्मज्ञेन जटायुषा।
राघवार्थे परिश्रान्ता वयं सन्त्यक्तजीविताः॥ १२॥
कान्ताराणि प्रपन्नाः स्म न च पश्याम मैथिलीम्।
स सुखी गृध्रराजस्तु रावणेन हतो रणे।
मुक्तश्च सुग्रीवभयाद्गतश्च परमां गतिम्॥ १३॥
जटायुषो विनाशेन राज्ञो दशरथस्य च।
हरणेन च वैदेह्याः संशयं हरयो गताः॥ १४॥
रामलक्ष्मणयोर्वासमरण्ये सह सीतया।
राघवस्य च बाणेन वालिनश्च तथा बधम्॥ १५॥

स्नेहविषयता रामातिरिक्ते नेति अनेन सूचितम्। ततः उक्तस्नेहादियन्त्रणतः। तस्य रामस्य उपकारार्थमित्यस्य प्रवृत्ता इति शेषः॥ ११॥

ननु प्राणत्यागेन कथं रामस्य सन्तोषोऽत आह,—प्रियमिति। हि यतो जटायुषा प्राणान् त्यजता प्रियं कृतमिति रामस्य मतमिति शेषः। तथास्मन्मरणेनापि रामस्तथा मंस्यतीति भावः॥ १२॥

सुखीति। सुखित्वमेव परमगतिप्राप्त्या दर्शयति रावणेनेत्यादि। मुक्तश्चेति। अनेन सर्वतिर्य्यग्योनिराजत्वं कपीन्द्रस्य सूचितम्। गतश्च परमां गतिं रामानुग्रहादिति शेषः॥ १३॥

जटायुषो विनाशेन प्राणिति शेषः। यदि पुनर्मुहूर्त्तमपि युद्धे रावणं निरुन्ध्यात्तदा रामदृग्गोचरो रावणः सीतां न हरेदिति भावः। राज्ञो दशरथस्य च प्राणविनाशेन यदि पक्षमात्रमपि राजजीवनं स्यात् तदा रामं प्रत्यानयेदेवेति भावः। वैदेहीहरणन्तु स्पष्टमेव वानराणां प्राणसंशयकारणम्॥ १४॥ १५॥

रामकोपादशेषाणां रक्षसाञ्च तथा बधम्।
कैकेय्या वरदानेन इदञ्च विकृतं कृतम्॥ १६॥

तदसुखमनुकीर्त्तितं वचो
भुवि पतितांश्च निरीक्ष्य वानरान्।
भयचकितमतिर्महामतिः
कृपणमुदाहृतवान् स गृध्रराजः॥ १७॥

तत्तु श्रुत्वा तथा वाक्यमङ्गदस्य मुखोद्गतम्।
अब्रवीद्वचनं गृध्रस्तीक्ष्णतुण्डो महास्वनः॥ १८॥
कोऽयं गिरा घोषयति प्राणैः प्रियतरस्य मे।
जटायुषो बधं भ्रातुः कम्पयन्निव मे मनः॥ १९॥
कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः।
नामधेयमिदं भ्रातुश्चिरस्याद्य मया श्रुतम्॥ २०॥
इच्छेयं गिरिदुर्गाच्च भवद्भिरवतारितुम्।
यवीयसो गुणज्ञस्य श्लाघनीयस्य विक्रमैः॥ २१॥

विकृतम् अरण्यवासवालिबधरक्षोबधरूपं इदञ्च अस्मन्मरणरूपञ्च। कैकेय्या वरदानेनैव कृतमित्यर्थः॥ १६॥

भयचकितमतिः क्षुभितचित्तः कृपणं दीनम्॥ १७॥

अस्यैव प्रपञ्चस्तत्त्विति॥ १८॥

को घोषयति स मया प्रष्टव्य इति शेषः॥ १९॥

प्रश्नमेवाह,—कथमिति॥ २०॥

अतिदीर्घस्य कालस्य परितुष्टोऽस्मि कीर्त्तनात्।
तदिच्छेयमहं श्रोतुं विनाशं वानरर्षभाः! ॥ २२ ॥
भ्रातुर्जटायुषस्तस्य जनस्थाननिवासिनः।
तस्यैव च मम भ्रातुः सखा दशरथः कथम्॥ २३ ॥
यस्य रामः प्रियः पुत्रो ज्येष्ठो गुरुजनप्रियः।
सूर्य्यांशुदग्धपक्षत्वान्न शक्नोमि विसर्पितुम्॥ २४ ॥
इच्छेयं पर्व्वतादस्मादवतर्त्तुमरिन्दमाः! ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
षट्पञ्चाशः सर्गः ॥ ५६ ॥

गिरिदुर्गाद्भवद्भिरवतारितुमिच्छेयम् आत्मानमिति शेषः। अवतारणफलमाह,—यवीयस इति। कनिष्ठस्येत्यर्थः॥ २१ ॥

श्रोतुमिच्छेयं युष्मत्समीपमागत्येति शेषः। अन्वयस्तु यस्य रामः प्रियः पुत्रः स दशरथो मम भ्रातुः तस्यैव जटायुषः सखा।तत्स्नेहात् प्रयतमानस्य तस्य जनस्थानवासिनस्तस्य प्रसिद्धविक्रमस्य जटायुषो विनाशः कथमभवदिति तस्य विनाशं श्रोतुमिच्छेयमिति। कथं सखेत्यन्वयस्तु नोचितः। तदुत्तरस्याग्रे भावात् स्वस्यावतारणसापेक्षत्वे हेतुमाह,—सूर्य्येति॥ २२ ॥ २३ ॥ २४ ॥

अवतर्त्तुमवतारयितुम्॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धाकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

## सप्तपञ्चाशः सर्गः।



शोकाद्भ्रष्टस्वरमपि श्रुत्वा वानरयूथपाः।
श्रद्दधुर्नैव तद्वाक्यं कर्म्मणा तस्य शङ्किताः॥ १॥
ते प्रायमुपविष्टास्तु दृष्ट्वा गृध्रं प्लवङ्गमाः।
चक्रुर्बुद्धिं तदा रौद्रां सर्व्वान्नो भक्षयिष्यति॥ २॥
सर्व्वथा प्रायमासीनान्यदि नो भक्षयिष्यति।
कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः॥ ३॥
एतां बुद्धिं ततश्चक्रुः सर्व्वे ते हरियूथपाः।
अवतार्य्य गिरेः शृङ्गात् गृध्रमाहाङ्गदस्तदा॥ ४॥
बभूवर्क्षरजो नाम वानरेन्द्रः प्रतापवान्।
ममार्य्यः पार्थिवः पक्षिन्! धार्म्मिकौ तस्य चात्मजौ॥ ५॥

भ्रष्टस्वरमपि भक्षणवचनस्वरापेक्षया भ्रष्टस्वरमित्यर्थः। तेन स्वरेण यद्यपि स निश्चितशोकः परितुष्टोऽस्मीति श्रद्धेयवचनो भवति तथापि न श्रद्दधुः यतस्तस्य कर्मणा शङ्किताः भक्षणार्थं वचनमेव करोति इति बुद्ध्येति भावः॥ १॥

तदेवाह,—चक्रुरित्यादि। अस्यार्थस्येतीति शेषः॥ २॥

सिद्धिं मरणरूपाम्॥ ३॥

एतां बुद्धिं भक्षणाभीष्टत्वबुद्धिम्॥ ४॥

कोऽयं घोषयतीति प्रथमप्रश्नोत्तरमाह,—बभूवेति। आर्य्यः पितामहः पार्थिवो वानराणामिति शेषः॥ ५॥

सुग्रीवश्चैव वाली च पुत्रौ घनबलावुभौ ।
लोके विश्रुतकर्म्माभूद्राजा वाली पिता मम ॥ ६ ॥
राजा कृत्स्नस्य जगत इक्ष्वाकूणां महारथः ।
रामो दाशरथिः श्रीमान् प्रविष्टो दण्डकावनम् ॥ ७ ॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या सह भार्य्यया ।
पितुर्निर्देशनिरतो धर्म्मं पन्थानमाश्रितः ॥ ८ ॥
तस्य भार्य्या जनस्थानाद्रावणेन हृता बलात् ।
रामस्य तु पितुर्मित्रं जटायुर्नाम गृध्रराट् ।
ददर्श सीतां वैदेहीं ह्रियमाणां विहायसा ॥ ९ ॥
रावणं विरथं कृत्वा स्थापयित्वा च मैथिलीम् ।
परिश्रान्तश्च वृद्धश्च रावणेन हतो रणे ॥ १० ॥
एवं गृध्रो हतस्तेन रावणेन बलीयसा ।
संस्कृतश्चापि रामेण जगाम गतिमुत्तमाम् ॥ ११ ॥
ततो मम पितृव्येन सुग्रीवेण महात्मना ।
चकार राघवः सख्यं सोऽवधीत्पितरं मम ॥ १२ ॥
मम पित्रा निरुद्धो हि सुग्रीवः सचिवैः सह ।
निहत्य वालिनं रामस्ततस्तमभिषेचयत् ॥ १३ ॥

घनबलौ बद्धबलौ । स्रोघबलाविति पाठान्तरम् ॥ ६ ॥ ७ ॥ ८ ॥
रावणेन विहायसीति पाठे ह्रियमाणामिति शेषः ॥ ९ ॥
स्थापयित्वा भूमाविति शेषः ॥ १० ॥ ११ ॥ १२ ॥

स राज्ये स्थापितस्तेन सुग्रीवो वानरेश्वरः।
राजा वानरमुख्यानां तेन प्रस्थापिता वयम्॥ १४॥
एवं रामप्रयुक्तास्तु मार्गमाणास्ततस्ततः।
वैदेहीं नाधिगच्छामो रात्रौ सूर्य्यप्रभामिव॥ १५॥
ते वयं दण्डकारण्यं विचित्य सुसमाहिताः।
अज्ञानात्तु प्रविष्टाः स्म धरण्या विवृतं बिलम्॥ १६॥
मयस्य मायाविहितं तद्बिलञ्च विचिन्वताम्।
व्यतीतस्तत्र नो मासो यो राज्ञा समयः कृतः॥ १७॥
ते वयं कपिराजस्य सर्व्वे वचनकारिणः।
कृतां संस्थामतिक्रान्ता भयात्प्रायमुपासिताः॥ १८॥
क्रुद्धे तस्मिंस्तु काकुत्स्थे सुग्रीवे च सलक्ष्मणे।
गतानामपि सर्व्वेषां तत्र नो नास्ति जीवितम्॥ १९॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
सप्तपञ्चाशः सर्गः॥ ५७॥

स्वपितृवधे कारणमाह,—ममेति। निबद्धो निबद्धराज्यः॥ १३॥
॥ १४॥ १५॥ १६॥ १७॥ १८॥ १९॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धा-
काण्डे सप्तपञ्चाशः सर्गः॥ ५७॥

---

## अष्टपञ्चाशः सर्गः ।

---

इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितः ।
सबाष्पो वानरान् गृध्रः प्रत्युवाच महास्वनः ॥ १ ॥
यवीयान् स मम भ्राता जटायुर्नाम वानराः ! ।
यमाख्यात हतं युद्धे रावणेन बलीयसा ॥ २ ॥
वृद्धभावादपक्षत्वात् शृण्वंस्तदपि मर्षये ।
न हि मे शक्तिरस्त्यद्य भ्रातुर्वैरविमोचणे ॥ ३ ॥
पुरा वृत्रवधे वृत्ते स चाहञ्च जयैषिणौ ।
आदित्यमुपयातौ स्वो ज्वलन्तं रश्मिमालिनम् ॥ ४ ॥
आवृत्याकाशमार्गेण जवेन स्वर्गतौ भृशम् ।
मध्यं प्राप्ते तु सूर्य्ये तु जटायुरवसीदति ॥ ५ ॥

त्यक्तजीवितैः त्यक्तजीवनाशाभयैः सबाष्पोऽश्रुपूर्णनयनः । सबाष्पानिति पाठान्तरम् ॥ १ ॥

आख्यात आख्यातवन्तः ॥ २ ॥

तदपि भ्रातृवधमपि ॥ ३ ॥

अथ शक्तिहानिं स्वात्मनेन पूर्व्वं महती शक्तिरासीदिति सूचितं तदेवाह,—पुरेति । पुरा पूर्व्वं वृत्रवधे वृत्ते सति स जटायुरहञ्च जयैषिणौ वृत्रवधेनेन्द्रस्यातिप्रबलत्वं निर्णीय तज्जयैषिणौ भूत्वा प्रथम-

तमहं भ्रातरं दृष्ट्वा सूर्य्यरश्मिभरर्दितम्।
पक्षाभ्यां छादयामास स्नेहात्परमविक्लवम्॥ ६॥
निर्दग्धपक्षः पतितो विन्ध्येऽहं वानरर्षभाः!।
अहमस्मिन् वसन् भ्रातुः प्रवृत्तिं नोपलक्षये॥ ७॥
जटायुषस्त्वेव मुक्तो भ्रात्रा सम्पातिना तदा।
युवराजो महाप्राज्ञः प्रत्युवाचाङ्गदस्तदा॥ ८॥
जटायुषो यदि भ्राता श्रुतं ते गदितं मया।
आख्याहि यदि जानासि निलयं तस्य रक्षसः॥ ९॥

माकाशमार्गेण स्वर्गं गतौ ततो गरुड़वद्भृशं जवेन तं त्रिजित्य आवृत्या प्रत्यावृत्या आवृत्य दर्पादुपजातौ स्वः। अथ तमुपयातयोरावयोर्मध्ये जटायुः सवितरि मध्यं प्राप्तेऽवसीदति स्मेति कतकः। अन्ये तु जयैषिणौ परस्परौ येनोत्पत्त्यादित्यः प्रथमं प्राप्यते स आवयोः प्रबल इति प्रतिज्ञापूर्वमिति शेष इत्याहुः। तेषामावृत्यंति पदस्येन्द्रप्रसङ्गस्य चासङ्गतिः॥ ४॥ ५॥

छादयामास। अपरोक्षेऽपि लिडुत्तमः आर्षः॥ ६॥

निर्दग्धपक्षः सूर्य्यकिरणैरिति शेषः। भ्रातुर्जटायुषः प्रवृत्तिमित्यन्वयः॥ ७॥

जटायुषो भ्रातेत्यन्वयः॥ ८॥

यदि जटायुषो रामभक्तस्य भ्राता यदि च मत्कथितं रामवृत्तान्तरूपं वस्तु ते त्वया श्रुतं यदि च तस्य रक्षसो निलयं जानासि तदाख्याहीति प्रार्थने लोट्॥ ९॥

अदीर्घदर्शिनं तं वै रावणं राक्षसाधमम्।
अन्तिके यदि वा दूरे यदि जानासि शंस नः॥ १०॥
ततोऽब्रवीन् महातेजा भ्राता ज्येष्ठो जटायुषः।
आत्मानुरूपं वचनं वानरान् सम्प्रहर्षयन्॥ ११॥
निर्दग्धपक्षो गृध्रोऽहं गतवीर्य्यः प्लवङ्गमाः!।
वाङ्मात्रेणापि रामस्य करिष्ये साह्यमुत्तमम्॥ १२॥
जानामि वारुणान् लोकान् विष्णोस्त्रैविक्रमानपि।
देवासुरविमर्दांश्च ह्यमृतस्य विमन्थनम्॥ १३॥
रामस्य यदिदं कार्य्यं कर्त्तव्यं प्रथमं मया।
जरया च हृतं तेजः प्राणाश्च शिथिला मम॥ १४॥
तरुणी रूपसम्पन्ना सर्व्वाभरणभूषिता।
ह्रियमाणा मया दृष्टा रावणेन दुरात्मना॥ १५॥
क्रोशन्ती राम रामेति लक्ष्मणेति च भामिनी।

अदीर्घदर्शिनं भाव्यनर्थविचारासमर्थं रावणमन्तिके दूरे वा तिष्ठन्तं यदि जानासि तदा नः शंस॥ १०॥ ११॥

रामस्य साह्यं रामकार्य्यप्रवृत्तानां युष्माकं सहायत्वमित्यर्थः॥ १२॥

वारुणान् लोकान् जलप्रधानान् लोकान्। त्रैविक्रमान् त्रिविक्रमावतारे आक्रान्तान् भूरादिलोकान् देवासुरविमर्दान् तद्युद्धानि। हिस्यार्थे। अमृतस्य मन्थनञ्च। अनेन च ब्रह्माण्डरादिक्षणमारभ्यैतत्क्षणपर्य्यन्तं सर्व्ववृत्तान्तज्ञत्वं स्वस्य निवेदितम्॥ १३॥

भूषणान्यपविध्यन्ती गात्राणि च विधुन्वती ॥ १६ ॥
सूर्य्यप्रभेव शैलाग्रे तस्याः कौशेयमुत्तमम्।
असिते राक्षसे भाति यथा विद्युदिवाम्बरे ॥ १७ ॥
तान्तु सीतामहं मन्ये रामस्य परिकीर्त्तनात्।
श्रूयतां मे कथयतो निलयं तस्य रक्षसः ॥ १८ ॥
पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च।
अध्यास्ते नगरीं लङ्कां रावणो नाम राक्षसः ॥ १९ ॥
इतो द्वीपे समुद्रस्य सम्पूर्णे शतयोजने।
तस्मिन् लङ्का पुरी रम्या निर्म्मिता विश्वकर्म्मणा ॥ २० ॥
जाम्बूनदमयैर्द्वारैश्चित्रैः काञ्चनवेदिकैः।
प्रासादैर्हेमवर्णैश्च महद्भिः सुसमाकृता ॥ २१ ॥
प्राकारेणार्क्कवर्णेन महता च समन्विता।
तस्यां वसति वैदेही दीना कौशेयवासिनी ॥ २२ ॥

रामस्येदं कार्य्यं प्रथममवश्यं मया कर्त्तव्यं परन्तु जरादिमत्त्वादशक्यमिति भावः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

तान्तु रावणह्रियमाणत्वेन दृष्टां सीतात्वेन ज्ञानहेतुः रामस्य परिकीर्त्तनम् ॥ १८ ॥ १९ ॥

सा च लङ्कैतः शतयोजने शतयोजनात्परतः स्थिते समुद्रस्य द्वीपे तिष्ठतीति शेषः। तस्मिन् द्वीपे सा लङ्कापुरी विश्वकर्म्मणा निर्म्मिता ॥ २० ॥ २१ ॥ २२ ॥

रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता।
जनकस्यात्मजां राज्ञस्तस्यां द्रक्ष्यथ मैथिलीम्॥ २३॥
लङ्कायामभिगुप्तायां सागरेण समन्ततः।
सम्प्राप्य सागरस्यान्ते सम्पूर्णे शतयोजने।
आसाद्य दक्षिणं कूलं ततो द्रक्ष्यथ रावणम्।
तत्र वै त्वरिताः क्षिप्रं विक्रमध्वं प्लवङ्गमाः!।
ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ।
आद्यः पन्था कुलिङ्गानां ये चान्ये धान्यजीविनः॥ २४॥
द्वितीयो बलिभोजानां ये च वृक्षफलाशनाः।
भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैः सह॥ २५॥
श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमम्।
बलवीर्य्योपपन्नानां रूपयौवनशालिनाम्॥ २६॥

तस्यां मैथिलीं द्रक्ष्यथ॥ २३॥

एतदग्रे लङ्कायामित्यादिश्लोकद्वयं प्रक्षिप्तमिति कतकः। देवयोनित्वेन दिव्यज्ञानेन यूयं तां दृष्ट्वा प्रत्यागमिष्यथेत्यपि पश्यामि। अतो निःसंशयं गच्छतेति शेषः। अथ स्वस्य देवयोनित्वप्रदर्शनशेषतया पक्षिमार्गानाह,—आद्य इति। पन्था आकाशमार्गः अन्ये धान्यजीविनः पारावतादयः॥ २४॥

बलिभोजाः काकाः वृक्षफलाशनाः शुकादयः। भासाः पक्षिविशेषाः॥ २५॥

बलवीर्य्येत्यादिहंसविशेषणम्॥ २६॥

षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा।
वैनतेयाच्च नो जन्म सर्व्वेषां वानरर्षभाः॥ २७॥
गर्हितन्तु कृतं कर्म्म येन स्म पिशिताशिनः।
प्रतिकार्य्यञ्च मे तस्य वैरं भ्रातृकृतं भवेत्॥ २८॥
इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा।
अस्माकमपि सौपर्णं दिव्यं चक्षुर्बलं तथा॥ २९॥
तस्मादाहारवीर्य्येण निसर्गेण च वानराः!।
आयोजनशतात् साग्रादयं पश्याम नित्यशः॥ ३०॥
अस्माकं विहिता वृत्तिर्निसर्गेण च दूरतः।
विहिता वृक्षमूले तु वृत्तिश्च रणयोधिनाम्॥ ३१॥

वैनतेयाद्विनतापुत्रादरुणात्। तस्माज्जातोऽहमरुणात्सम्पातिस्तु ममाग्रज इति आरण्ये जटायुवाक्यात्। एवं दिव्यज्ञानेन युष्मद्वृत्तज्ञानम्॥ २७॥

युष्मत्सहायकरणाच्च वैरशुद्धा स्वप्रयोजनमपीत्याह,—येन रावणेन परदारहरणरूपं गर्हितं कर्म कृतं तस्य पिशिताशिनः भ्रातृकृतं वैरमुद्दिश्य यत्प्रतिकार्य्यं तच्च मे कृतं भवेत्। युष्मत्प्रवर्त्तनेनेति शेषः॥ २८॥

ननु कथं लङ्कास्था सीतेति त्वया ज्ञातं तत्राह,—इहस्थ इति। सौपर्णं सुवर्णलिङ्गकचक्षुष्मतीविद्यासिद्धिजम्। सा च विद्या बह्वृच ब्राह्मणे तृतीयपञ्चिकायामुक्ता॥ २९॥

तस्मादुक्तविद्यासिद्धेः निसर्गेणाहारवीर्य्येण च मांसविशेषाहारबलेन च। आङभिविधौ। साग्रात्किञ्चिदधिकाद्योजनशतात्॥ ३०॥

उपायो दृश्यतां कश्चिल्लङ्घने लवणाम्भसः ।
अभिगम्य तु वैदेहीं समृद्धार्था गमिष्यथ ॥ ३२ ॥
समुद्रं नेतुमिच्छामि भवद्भिर्वरुणालयम् ।
प्रदास्याम्युदकं भ्रातुः स्वर्गतस्य महात्मनः ॥ ३३ ॥
ततो नीत्वा तु तं देशं तीरे नदनदीपतेः ।
निर्दग्धपक्षं सम्पातिं वानराः सुमहौजसः ॥ ३४ ॥
तं पुनः प्रापयित्वा च तं देशं पतगेश्वरम् ।
बभूवुर्वानरा हृष्टाः प्रवृत्तिमुपलभ्य ते ॥ ३५ ॥

## इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

अस्माकन्तु निसर्गेण जातिस्वभावेन दूरतः दूरवर्त्तिदर्शनबलसम्पादकेन भक्ष्यविशेषेण वृत्तिर्विहिता धात्रेति शेषः। कुक्कुटादीनान्तु स्वावासवृक्षमूले एव तावद्दूरदृष्टिमात्रसम्पादिका च वृत्तिर्विहिता ॥३१॥

गमिष्यथ किष्किन्धामिति शेषः ॥ ३२ ॥

नेतुं नाययितुम् ॥ ३३ ॥ ३४ ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धाकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

## एकोनषष्टितमः सर्गः।



ततस्तदमृतास्वादं गृध्रराजेन भाषितम्।
निशम्य वदतो हृष्टास्ते वचः प्लवगेश्वराः॥ १॥
जाम्बवान् वानरश्रेष्ठः सह सर्व्वैः प्लवङ्गमैः।
भूतलात् सहसोत्थाय गृध्रराजानमब्रवीत्॥ २॥
क्व सीता केन वा दृष्टा को वा हरति मैथिलीम्।
तदाख्यातु भवान् सर्व्वं गतिर्भव वनौकसाम्॥ ३॥
को दाशरथिबाणानां वज्रवेगनिपातिनाम्।
स्वयं लक्ष्मणमुक्तानां न चिन्तयति विक्रमम्॥ ४॥

तत इति। ते प्लवगर्षभाः। अमृतास्वादं गृध्रराजाभिभाषितं निशम्य हर्षादेव तद्वदतः अनुवदन्तो हृष्टा बभूवुरित्यर्थः। वदत इत्यत्र नुमभाव आर्षः॥ १॥

अब्रवील्लङ्कायां सीतादर्शनं त्वदेकसाक्षिकमन्यसाक्षिकमपिवेति दार्ढ्यायापृच्छदित्यर्थः। भूतलादुत्थाय प्रायोपवेशन्त्यक्त्वेत्यर्थः॥ २॥

प्रश्नमेवाह,—क्वेति सीतां को हरति स्म ह्रियमाणा च केन दृष्टा त्वयान्येनापि वा। हृता च क्व वा वर्त्तते इति सर्वं भवानाख्यातु। सामान्यतः श्रुत्वा प्रायोपवेशादुत्थितानां विशिष्य वदत्वित्यर्थः॥ ३॥

को जानकीहर्त्ता स्वयं रामबाणानां विक्रमं न चिन्तयतीत्यन्वयः॥ ४॥

स हरीन् प्रतिसंमुक्तान् सीताश्रुतिसमाहितान् ।
पुनराश्वासयन् प्रीत इदं वचनमब्रवीत् ॥ ५ ॥
श्रूयतामिह वैदेह्या यथा मे हरणं श्रुतम् ।
येन चापि ममाख्यातं यत्र चायतलोचना ॥ ६ ॥
अहमस्मिन् गिरौ दुर्गे बहुयोजनमायते ।
चिरान्निपतितो वृद्धः क्षीणप्राणपराक्रमः ॥ ७ ॥
तं मामेवं गतं पुत्रः सुपार्श्वो नाम नामतः ।
आहारेण यथाकालं बिभर्त्ति पततां वरः ॥ ८ ॥
तीक्ष्णकामास्तु गन्धर्वा तीक्ष्णकोपा भुजङ्गमाः ।
मृगाणान्तु भयं तीक्ष्णं ततस्तीक्ष्णक्षुधा वयम् ॥ ९ ॥

प्रतिसम्मुक्तान् त्यक्तप्रायोपवेशान् । सीताश्रुतिसमाहितान् सीताविषयवृत्तान्तश्रवणे सावधानान् पुनराश्वासयन् । अन्यसाक्षिकताप्रदर्शनेन भूयः स्वोक्तार्थं प्रत्याययन् ॥ ५ ॥

वैदेह्या हरणं यथा मे मया श्रुतं येन च ममाख्यातं यत्र सा आयतलोचना वर्त्तत इति श्रुतं तदपीहेदानीं श्रूयताम् ॥ ६ ॥

तदेवाह,—अहमिति । दुर्गे दुर्गमे क्षीणः प्राणो बलं पराक्रमश्च यस्य सः ॥ ७ ॥ ८ ॥

तीक्ष्णकामाः । स्त्रीकामा वै गन्धर्वा इति श्रुतेः । यथाकामादिविषये गन्धर्वादेस्तैक्ष्ण्यं स्वभावात् तथैव स्वभावादेव वयं पतगास्तीक्ष्णक्षुधा इत्यर्थः ॥ ९ ॥

स कदाचित् क्षुधार्त्तस्य ममाहाराभिकाङ्क्षिणः ।
गतः सूर्य्येऽहनि प्राप्तो मम पुत्रो ह्यनामिषः ॥ १० ॥
स मयाहारसंरोधात् पीड़ितः प्रीतिवर्द्धनः ।
अनुमान्य यथातत्त्वमिदं वचनमब्रवीत् ॥ ११ ॥
अहं तात ! यथाकालमामिषार्थी खमाप्लुतः ।
महेन्द्रस्य गिरेर्द्वारमावृत्य सुसमाश्रितः ॥ १२ ॥
तत्र सत्त्वसहस्राणां सागरान्तरचारिणाम् ।
पन्थानमेकोऽध्यवसं सन्निरोद्धुमवाङ्मुखः ॥ १३ ॥
तत्र कश्चिन्मया दृष्टः सूर्य्योदयसमप्रभाम् ।
स्त्रियमादाय गच्छन् वै भिन्नाञ्जनचयोपमः ॥ १४ ॥
सोऽहमभ्यवहारार्थं तौ दृष्ट्वा कृतनिश्चयः ।
तेन साम्ना विनीतेन पन्थानमनुयाचितः ॥ १५ ॥

यस्मादेवमतः क्षुधार्त्तस्यातएवाहारकाङ्क्षिणो ममाहारार्थं सूर्य्येऽहनि अह्नि सूर्य्ये सूर्य्योदयकाले गतो मम पुत्रः सायमनामिषः प्राप्त आगतः ॥१०॥

यत एवमतः स मम प्रीतिवर्द्धनः मयाहारसंरोधात् पीड़ितो दुर्वचनेन खेदं प्रापितः सन् मामनुमान्य क्षमापयित्वा यथातत्त्वमिदं वक्ष्यमाणं वचनमब्रवीत् ॥ ११ ॥

सुसमाश्रितः स्थितः ॥ १२ ॥

पन्थानं सन्निरोद्धुमवसमित्यन्वयः ॥ १३ ॥

सूर्य्योदयसमप्रभां उदयकालिकसूर्य्यसमप्रभाम् ॥ १४ ॥

तौ स्त्रीपुरुषौ कृतनिश्चयः इमावेव हत्वा पितुरभ्यवहारार्थं नेष्या-

न हि सामोपपन्नानां प्रहर्त्ता विद्यते भुवि।
नीचेष्वपि जनः कश्चित् किमङ्ग ! बन मद्विधः ॥ १६ ॥
स यातस्तेजसा व्योम सङ्क्षिपन्निव वेगितः।
अथाहं खेचरैर्भूतैरभिगम्य सभाजितः ॥ १७ ॥
दिष्ट्या जीवति सीतेति अब्रुवन् मां महर्षयः।
कथञ्चित् सकलत्रोऽसौ गतस्ते स्वस्त्यसंशयम् ॥ १८ ॥
एवमुक्तस्ततोऽहन्तैः सिद्धैः परमशोभनैः।
स च मे रावणो राजा रक्षसां प्रतिवेदितः ॥ १९ ॥
पश्यन् दाशरथेर्भार्य्यां रामस्य जनकात्मजाम्।

मीति कृतनिश्चय इत्यर्थः। ततस्तेन विनीतेन सता सामैव पश्चानमभियाचितोऽस्मि। अतएवासौ त्यक्त इति शेषः ॥ १५ ॥

तत्र हेतुर्नहि सामेति ॥ १६ ॥

अथ सस्त्रीकस्य तस्य गमनानन्तरं खेचरैर्भूतैः सिद्धचारणादिभिः सभाजितः पूजितोऽस्मि ॥ १७ ॥

दिष्ट्या जीवति सीतेति पाठः। दिष्ट्या सीता त्वत् दृष्टिपथं प्राप्ता जीवति स्म। त्वया तद्धननस्याशक्यत्वात्। एवं पूजयित्वा मां महर्षयोऽब्रुवन्। असौ त्वया दृष्टः पुरुष सकलत्रः कथञ्चित् कुशली गतोऽतोऽसंशयं ते स्वस्त्यस्तु इति कतकः। अन्ये तु दिष्ट्या जीवति तातेति पाठः। हे तात त्वं दिष्ट्या रावणं प्राप्यापि जीवसीत्यब्रुवन्। यतोऽसौ सकलत्रोऽतोऽसंशयं त्वा संशयमप्राप्य गतोऽतस्ते स्वस्तिजातमित्यर्थमाहुः ॥ १८ ॥

अथ स हर्त्ता रावण इति सा रामभार्य्येति चाहं प्रतिवेदितः ॥ १९ ॥

भ्रष्टाभरणकौशेयां शोकवेगपराजिताम् ॥ २० ॥
रामलक्ष्मणयोर्नाम क्रोशन्तीं मुक्तमूर्द्धजाम् ।
एष कालात्ययस्तात ! इति वाक्यविदां वरः ॥ २१ ॥
एतदर्थं समग्रं मे सुपार्श्वः प्रत्यवेदयत ।
तत् श्रुत्वापि हि मे बुद्धिर्नासीत् काचित् पराक्रमे ॥ २२ ॥
अपक्षो हि कथं पक्षी कर्म्म किञ्चित् समारभेत् ।
यत्तु शक्यं मया कर्त्तुं वाग्बुद्धिगुणवर्त्तिना ॥ २३ ॥
श्रूयतां तच्च वक्ष्यामि भवतां पौरुषाश्रयम् ।
वाङ्मतिभ्यां हि सर्व्वेषां करिष्यामि प्रियं हि वः ॥ २४ ॥
यद्धि दाशरथेः कार्य्यं मम तन्नात्र संशयः ।

अतोऽहं भ्रष्टाभरणत्वादिगुणां रामभार्य्यां पश्यन् स्थित इति। एष तावन्मे कालात्ययः कालातिपातहेतुरिति समग्रमेतदर्थं वाक्यविदां वरः सुपार्श्वो मे प्रत्यवेदयत् तत् श्रुत्वापीति सामान्यतः एवं मया दृष्टमपि पुत्राद्भर्त्ता रावणोहृता रामपत्नीति निश्चित्य श्रुत्वापि ॥ २० ॥ २१ ॥ २२ ॥

वाग्बुद्धिभ्यां साध्यो यो गुणः उपकारलक्षणस्तन्मात्रवर्त्तनशीलेन ॥ २३ ॥

पौरुषाश्रयं पराक्रमप्रतिष्ठाभूतम्। किञ्चैष उपकारो न केवलं भवत्प्रयोजन एवापि तु स्वप्रयोजनफलोऽपीत्याह,—वाङ्मतिभ्यामिति। दाशरथेः कार्य्यमुद्दिश्य वः सर्वेषां वाङ्मतिभ्यां यत्प्रियं करिष्यामि तन्ममैव कार्य्यम् अत्र संशयो न ॥ २४ ॥

तद्भवन्तो मतिश्रेष्ठा बलवन्तो मनस्विनः ॥ २५ ॥
प्रहिताः कपिराजेन देवैरपि दुरासदाः ।
रामलक्ष्मणबाणाश्च विहिताः कङ्कपत्रिणः ॥ २६ ॥
त्रयाणामपि लोकानां पर्य्याप्तास्त्राणनिग्रहे ।
कामं खलु दशग्रीवस्तेजोबलसमन्वितः ।
भवतान्तु समर्थानां न किञ्चिदपि दुष्करम् ॥ २७ ॥
तदलं कालसङ्गेन क्रियतां बुद्धिनिश्चयः ।
न हि कर्म्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
एकोनषष्टितमः सर्गः ॥ ५९ ॥

तत्तस्मात् मया भवतां कार्य्यसिद्धेरसंशयं दृष्टत्वात् । भवन्तोऽवश्यं कार्य्यं यतन्तामिति शेषः ॥ २५ ॥

विहिताः । विधात्रेति शेषः ॥ २६ ॥

त्राणनिग्रहे त्राणे निग्रहे च पर्य्याप्ताः । समाहारद्वन्द्वः । यद्यपि दशग्रीवो लोकदृष्ट्या प्रबलस्तथापि भवतां रामलक्ष्मणसहायत्वेनैव समर्थानां सुकरएवेति भावः ॥ २७ ॥

कालसङ्गः कालविलम्बः । सज्जन्ते अलसा भवन्ति ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धाकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

## षष्टितमः सर्गः ।

ततः कृतोदकं स्नातं तं गृध्रं हरियूथपाः ।
उपविष्टा गिरौ रम्ये परिवार्य्य समन्ततः ॥ १ ॥
तमङ्गदमुपासीनं तैः सर्व्वैर्हरिभिर्वृतम् ।
जनितप्रत्ययो हर्षात् सम्पातिः पुनरब्रवीत् ॥ २ ॥
कृत्वा निःशब्दमेकाग्राः शृण्वन्तु हरयो मम ।
तथ्यं सङ्कीर्त्तयिष्यामि यथा जानामि मैथिलीम् ॥ ३ ॥
अस्य विन्ध्यस्य शिखरे पतितोऽस्मि पुरानघ ! ।
सूर्य्यतापपरीताङ्गो निर्दग्धः सूर्य्यरश्मिभिः ॥ ४ ॥
लब्धसंज्ञस्तु षड्रात्राद्विवशो विह्वलन्निव ।
वीक्ष्यमाणो दिशः सर्व्वा नाभिजानामि किञ्चन ॥ ५ ॥

तत इति ॥ १ ॥

जनितप्रत्ययः एष्यन्त्यन्वेषका इति निशाकरमुनयुक्तरीत्या रामदूतागमनदर्शनान्निशाकरोक्तपक्षप्ररोहादिदर्शनाच्च निशाकरवचसि विश्वस्तः । हर्षात् पक्षलाभजनितहर्षात । आत्मानमुपासीनमङ्गदं प्रति पुनरब्रवीत् ॥ २ ॥

तथ्यं मैथिलीं जानामीति मद्वाक्यं सत्यं यथा भवद्भिः प्रतिपत्तव्यं तथा सङ्कीर्त्तयिष्यामि ॥ ३ ॥

ततस्तु सागरान् शैलान् नदीः सर्व्वाः सरांसि च।
वनानि च प्रदेशांश्च निरीक्ष्य मतिरागता ॥ ६ ॥
हृष्टपक्षिगणाकीर्णः कन्दरोदरकूटवान्।
दक्षिणस्योदधेस्तीरे विन्ध्योऽयमिति निश्चितः ॥ ७ ॥
आसीच्चात्राश्रमं पुण्यं सुरैरपि सुपूजितम्।
ऋषिर्निशाकरो नाम यस्मिन्नुग्रतपाभवत् ॥ ८ ॥
अष्टौ वर्षसहस्राणि तेनास्मिन्नृषिणा गिरौ।
वसतो मम धर्मज्ञे स्वर्गते तु निशाकरे ॥ ९ ॥
अवतीर्य्य च विन्ध्याग्रात् कृच्छ्रेण विषमाच्छनैः।
तीक्ष्णदर्भां वसुमतीं दुःखेन पुनरागतः ॥ १० ॥
तमृषिं द्रष्टुकामोऽस्मि दुःखेनाभ्यागतो भृशम्।
जटायुषा मया चैव बहुशोऽधिगतो हि सः ॥ ११ ॥

सूर्य्यरश्मिभिर्निर्दग्धोऽतएव विवशः षड्रात्रात्परं लब्धसंज्ञः विह्वलन्निव परमार्त्त एव सन् ॥ ४ ॥ ५ ॥ ६ ॥

कन्दराण्युदरे यस्य स चासौ कूटवान् शृङ्गवानित्यर्थः ॥ ७ ॥

यस्मिन्नाश्रमे उग्रतपा भवदिति सन्धिरार्षः ॥ ८ ॥

निशाकरे ऋषौ स्वर्गते तेन विनात्र गिरौ वसतो ममाष्टौ वर्षसहस्राणि गतानीति शेषः ॥ ९ ॥

अथ तत् स्थितिकालिकीं तद्दर्शनप्रवृत्तिमाह,—अवतीर्य्येति। तीक्ष्णदर्भां तीक्ष्णाग्रा दर्भा यस्याम् ॥ १० ॥

तस्याश्रमपदाभ्याशे ववर्वीता: मृगन्चिन: ।
वृक्षो नापुष्पित: कश्चिदफलोवा न दृश्यते ॥ १२ ॥
उपेत्य चाश्रमं पुण्यं वृक्षमूलमुपाश्रित: ।
द्रष्टुकाम: प्रतीक्षे च भगवन्तं निशाकरम् ॥ १३ ॥
अथ पश्यामि दूरस्थमृषिं ज्वलिततेजसम् ।
कृताभिषेकं दुर्धर्षमुपावृत्तमुदङ्मुखम् ॥ १४ ॥
तमृक्षा: सृमरा व्याघ्रा: सिंहा नानासरीसृपा: ।
परिवार्य्योपगच्छन्ति दातारं प्राणिनो यथा ॥ १५ ॥
तत: प्राप्तमृषिं ज्ञात्वा तानि सत्त्वानि वै ययु: ।
प्रविष्टे राजनि यथा सर्व्वं सामात्यकं बलम् ॥ १६ ॥
ऋषिस्तु दृष्ट्वा मां तुष्टः प्रविष्टश्चाश्रमं पुन: ।
मुहूर्त्तमात्रान्निर्गम्य तत: कार्य्यमपृच्छत ॥ १७ ॥
सौम्य ! वैकल्यतां दृष्ट्वा रोम्णान्ते नावगम्यते ।

तमृषिं द्रष्टुकामोऽस्मि द्रष्टुकामोऽभूवमित्यर्थः। अतएव दुःखेन तदभ्याशमभ्यागतः। ननु तदासोऽचेति त्वया कथं ज्ञातमत आह,— जटायुषेति। अधिगतः प्राप्तः सेवित इत्यर्थः॥ ११ ॥ १२ ॥ १३ ॥

उदङ्मुखमुपावृत्तं समुद्रे स्नात्वोदङ्मुखतया प्रत्यावृत्तम् ॥ १४ ॥

तस्य स्वसेवायोग्यत्वप्रदर्शनाय तिर्य्यग्योनिसेव्यत्वं तपोमहिमानं दर्शयति तमृक्षा इति ॥ १५ ॥

प्राप्तमाश्रममागतम् ॥ १६ ॥ १७ ॥

अग्निदग्धाविमौ पक्षौ प्राणाश्चापि शरीरके ॥ १८ ॥
गृध्रौ द्वौ दृष्टपूर्व्वौ मे मातरिश्वसमौ जवे ।
गृध्राणाञ्चैव राजानौ भ्रातरौ कामरूपिणौ ॥ १९ ॥
ज्येष्ठोऽवितस्त्वं सम्पाते ! जटायुरनुजस्तव ।
मानुषं रूपमास्थाय गृह्णीतां चरणौ मम ॥ २० ॥
किं ते व्याधिसमुत्थानं पक्षयोः पतनं कथम् ।
दण्डो वाऽयं धृतः केन सर्व्वमाख्याहि पृच्छतः ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
षष्टितमः सर्गः ॥ ६० ॥

ते रोम्णां वैकल्यं दृष्ट्वा नावगम्यते न प्रत्यभिज्ञायते भवानित्यर्थः । वैकल्यमेवाह,—अग्निदग्धा ताविम अतएव शरीरके अल्पे शरीरे प्राणाश्चाविक्रमबलेऽपि ते दग्धकल्पाः ॥ १८ ॥

अथ प्रत्यभिज्ञामूलामभिज्ञामाह,—गृध्राविति ॥ १९ ॥

अवितोज्ञातः गृह्णीतामगृह्णीताम् ॥ २० ॥

किं कीदृशं व्याधिसमुत्थानमिति षष्ठीतत्पुरुषः । अयं दण्डः प्रगा-करः प्रहारः केन धृतः केन कृतः ॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे षष्टितमः सर्गः ॥ ६० ॥

---

## एकषष्टितमः सर्गः ।

ततस्तद्दारुणं कर्म्म दुष्करं सहसा कृतम् ।
आचचक्षे मुनेः सर्व्वं सूर्य्यानुगमनं तथा ॥ १ ॥
भगवन् ! व्रणयुक्तत्वाल्लज्जया चाकुलेन्द्रियः ।
परिश्रान्तो न शक्नोमि वचनं परिभाषितुम् ॥ २ ॥
अहञ्चैव जटायुश्च सङ्घर्षात् गर्व्वमोहितौ ।
आकाशं पतितौ दूराज्जिज्ञासन्तौ पराक्रमम् ॥ ३ ॥
कैलासे शिखरे बध्वा मुनीनामग्रतः पणम् ।
रविः स्यादनुयातव्यो यावदस्तं महागिरिम् ॥ ४ ॥

तद्दारुणं कर्म इन्द्रेण युद्धरूपम् अनेन दुष्करं सहसा दर्पात् कृतं प्रथममाचचक्षे। तथा तदनन्तरकृतं सूर्य्यानुगमनं सर्वं प्रकृतविन्ध्य-पतनप्रयोजनत्वेनाचचक्षे ॥ १ ॥

तदेवाह,—भगवन्निति। व्रणयुक्तत्वादिन्द्रयुद्धे वज्रप्रहारजव्रणयुक्त-त्वात् परिश्रान्तस्तथा पक्षनाशफलकानुचितकर्मकरणजलज्जया आकु-लितेन्द्रियश्चाहं प्रतिभाषितुं सम्यगुत्तरं दातुं न शक्नोमि तथापि कथ-ञ्चित् ब्रवीमीति शेषः ॥ २ ॥

सङ्घर्षात् पतनविषयस्पर्धातः गर्वमोहितौ इन्द्रजयगर्वमोहितौ ॥ ३ ॥

पणं बध्वा प्रतिज्ञां कृत्वा। प्रतिज्ञामेवाह,—रविरिति। रवि-

अथावां युगपत् प्राप्तौ अपश्याव महीतले ।
रथचक्रप्रमाणानि नगराणि पृथक् पृथक् ॥ ५ ॥
क्वचिद्वादित्रघोषश्च क्वचिद्भूषणनिस्वनः ।
गायन्तीः स्माङ्गनाबह्वीः पश्यावो रक्तवाससः ॥ ६ ॥
तूर्णमुत्पत्य चाकाशमादित्यपदमाश्रितौ ।
आवामालोकयावस्तद्वनं शाद्वलसंस्थितम् ॥ ७ ॥
उपलैरिव संछन्ना दृश्यते भूः शिलोच्चयैः ।
आपगाभिश्च संवीता सूत्रैरिव वसुन्धरा ॥ ८ ॥
हिमवांश्चैव विन्ध्यश्च मेरुश्च सुमहागिरिः ।
भूतले सम्प्रकाशन्ते नागा इव जलाशये ॥ ९ ॥
तीव्रः स्वेदश्च खेदश्च भयञ्चासीत्तदावयोः ।
समाविशत मोहश्च ततो मूर्च्छा च दारुणा ॥ १० ॥

यावदस्तं महागिरिं यायात्ततः प्रागावाभ्यां रविरनुपातव्योऽनुप्राप्तव्य इति प्रतिज्ञा ॥ ४ ॥

युगपत् प्राप्तावाकाशमिति शेषः । अपश्याव दृष्टवन्तौ ॥ ५ ॥

क्वचिदूर्द्धदिक् प्रदेशविशेषे ॥ ६ ॥

आकाशम् आकाशपथादर्वाक्तनं भुवर्त्तिवनम् । शाद्वलसंस्थित शाद्वलानां बालतृणवद्देशानामिव संस्थानं यस्य तत् ॥ ७ ॥

उपलैः सूक्ष्मपाषाणैः ॥ ८ ॥

नागाः गजाः ॥ ९ ॥

न च दिक् ज्ञायते याम्या न चाग्नेयी न वारुणी।
युगान्ते नियतो लोको हतो दग्ध इवाग्निना॥ ११॥
मनश्च मे हतं भूयश्चक्षुः प्राप्य तु संश्रयम्।
यत्नेन महता ह्यस्मिन् मनः सन्धाय चक्षुषी॥ १२॥
यत्नेन महता भूयो भास्करः प्रतिलोकितः।
तुल्यः पृथ्वीप्रमाणेन भास्करः प्रतिभाति नौ॥ १३॥
जटायुर्मामनापृच्छ्य निपपात महीं ततः।
तं दृष्ट्वा तूर्णमाकाशादात्मानं मुक्तवानहम्॥ १४॥

तदा सवितरि मध्यं प्राप्ते मोहो दिङ्मोहः ततो मोहादनन्तरं दारुणा मूर्च्छा। सेन्द्रियमन उपप्लवो मूर्च्छा॥ १०॥

मोहमूर्च्छे एव प्रकाशयति। न चेति। युगान्ते नियतो नियतदाहोऽपि लोकः आवाभ्यां तत्कालेऽग्निना दग्धो हत इव दृष्टोऽभूत्॥ ११॥

मनश्च मे भूयोऽप्यधिकं संश्रयं दर्शनाश्रयं चक्षुः प्राप्य तेन सह हतं सौरतेजसा प्रतिहतदर्शनशक्तिकमभूत्। अस्मिन् सूर्य्ये पुनश्चक्षुषी मनश्च सन्धाय॥ १२॥

कथं सूर्य्योऽदृष्ट इत्यत्र तत्प्रकारमाह,—तुल्य इति। पृथ्व्यत्र जम्बूद्वीपावच्छिन्ना बोद्धा॥ १३॥

ततः सूर्य्यदर्शनानन्तरम् अनापृच्छ्य मोहवशादिति शेषः। तं दृष्ट्वेति मोहात् पतन्तं जटायुं दृष्ट्वा। आकाशादात्मानं मुक्तवानिति सूर्य्यसमीपवर्त्त्याकाशप्रदेशादात्मानं स्वशरीरं जटायुरक्षणार्थं मुक्तवान् पक्षौ विस्तार्य्य पतितवानित्यर्थः॥ १४॥

पक्षाभ्याञ्च मया गुप्तो जटायुर्न प्रदह्यत।
प्रमादात्तत्र निर्दग्धः पतन् वायुपथादहम् ॥ १५ ॥
आशङ्के तं निपतितं जनस्थाने जटायुषम्।
अहन्तु पतितो विन्ध्ये दग्धपक्षो जड़ीकृतः ॥ १६ ॥
राज्याच्च हीनो भ्रात्रा च पक्षाभ्यां विक्रमेण च।
सर्वथा मर्त्तुमेवेच्छन् पतिष्ये शिखरात् गिरेः ॥ १७ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

प्रमादाज्जटायुपरित्यागविषयचित्ताभिष्वङ्गात्। तत्र तस्मिन् काले निर्दग्धपक्षः अथ वायुपथात् पतन्नहम् ॥ १५ ॥

आशङ्के अनुमितवान् न तु प्रत्यक्षतो दृष्टवानित्यर्थः ॥ १६ ॥

सर्वथा मर्त्तुमिवेच्छन् शिखरात् पतिष्ये इत्याहेति शेषः ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धाकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

# द्विषष्टितमः सर्गः।



एवमुक्त्वा मुनिश्रेष्ठमरुदं भृशदुःखितः।
अथ ध्यात्वा मुहूर्त्तञ्च भगवानिदमब्रवीत् ॥ १ ॥
पक्षौ च ते प्रपक्षौ च पुनरन्यौ भविष्यतः।
चक्षुषी चैव प्राणाश्च विक्रमश्च बलञ्च ते ॥ २ ॥
पुराणे सुमहत् कार्य्यं भविष्यं हि मया श्रुतम्।
दृष्टं मे तपसा चैव श्रुत्वा च विदितं मम ॥ ३ ॥
राजा दशरथो नाम कश्चिदिक्ष्वाकुवर्द्धनः।
तस्य पुत्रो महातेजा रामो नाम भविष्यति ॥ ४ ॥
अरण्यञ्च सह भ्रात्रा लक्ष्मणेन गमिष्यति।
तस्मिन्नर्थे नियुक्तः सन् पित्रा सत्यपराक्रमः ॥ ५ ॥

एवमिति ॥ १ ॥

पक्षप्रपक्षौ सूक्ष्मपक्षमहापक्षौ। प्राणाः पुरुप्राणाः चक्षुषी उद्भूतशक्तिके ॥ २ ॥

पुराणे नारदादिभिरुच्यमाने भविष्यरामचरितरूपे पुराणे श्रुत्वा विदितं तपसा दृष्टञ्च ॥ ३ ॥

किन्तत्राह,—राजेत्यादि ॥ ४ ॥

नैर्ऋतो रावणो नाम तस्य भार्य्यां हरिष्यति।
राक्षसेन्द्रो जनस्थाने अवध्यः सुरदानवैः ॥ ६ ॥
सा च कामैः प्रलोभन्ती भक्ष्यैर्भोज्यैश्च मैथिली।
न भोक्ष्यति महाभागा दुःखमग्ना यशस्विनी ॥ ७ ॥
परमान्नञ्च वैदेह्या ज्ञात्वा दास्यति वासवः।
यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ॥ ८ ॥
तदन्नं मैथिली प्राप्य विज्ञायेन्द्रादिदन्त्विति।
अग्रमुद्धृत्य रामाय भूतले निर्वपिष्यति ॥ ९ ॥

तस्मिन्नर्थे अरण्यगमनरूपे ॥ ५ ॥ ६ ॥

प्रलोभ्यन्ती प्रलोभ्यमाना ॥ ७ ॥

परमान्नं पायसं ज्ञात्वा निराहारतामिति शेषः। वासवः दास्यति स्वपुरुष द्वारेति शेष ॥ ८ ॥

इन्द्रादिन्द्रपुरुषात् नतु रावणपुरुषादिति विज्ञाय। अभूतलस्पर्शित्वादिरूपैर्देवचिह्नैः राम आगत्य एनं हत्वा त्वां नयिष्यति। संवत्सरतृप्तिकरमिदमन्नं भुक्त्वा देवकार्य्यसिद्धये मनुष्यभावं धृतवत्या प्राणा धर्त्तव्या देवैरपि मनुष्यभावे आहारं विना जीवितुं न शक्यते इत्यादि वचनैश्च निश्चित्येत्यर्थः। निर्वपिष्यति दास्यति। ननु त्रेतायामस्थिगतप्राणावासस्योक्तत्वाज्जीवितुं शक्य एवेति चेन्न। तथा सत्यपि क्षीणतायां देहवैरूप्ये रावणस्यानुरागभङ्गेन तत्पुण्यक्षये तस्य वधो न स्यादिति। रूपलावण्याद्यहानायतद्दानेनादोषात्। रावणस्य तु तथैव रूपादिदर्शनेन महदाहारापहरणेऽपि वन्यफलादिन्याहारं करोतीति बुद्ध्या

यदि जीवति मे भर्त्ता लक्ष्मणो वापि देवर:।
देव त्वं गच्छतोऽपि तयोरङ्गमिदन्त्विति॥ १०॥
एष्यन्ति प्रेषिताश्च रामदूता: प्लवङ्गमाः।
आख्येया राममहिषी त्वया तेभ्यो विहङ्गम!॥ ११॥
सर्वथा तु न गन्तव्यमीदृश: क्व गमिष्यसि।
देशकालौ प्रतीक्षस्व पक्षौ त्वं प्रतिपत्स्यसे॥ १२॥
उत्सहे यमहं कर्त्तुमद्यैव त्वां सपक्षकम्।
दहस्यस्त्वं हि लोकानां हितं कार्य्यं करिष्यसि॥ १३॥
त्वया पि खलु तत्कार्य्यं तयोस्तु नृपपुत्रयो:।
ब्राह्मणानां गुरूणाञ्च मुनीनां वासवस्य च॥ १४॥

तस्यां नामनुष्यत्वनिश्चयः। एतेनाहारं विनापि पूर्वरूपादिसत्वज्ञानेन तस्य तस्याममनुष्यत्वबुद्धौ तत्सम्बन्धाद्रामेऽपि तत्त्वबुद्धौ रामतो रावणबधो न स्यादित्यपास्तम्॥ ९॥

दानमन्त्रः यदीति। यदि जीवति तदाप्युपतिष्ठतु कालान्तरे देवत्वं गच्छतोः प्राप्नुवतोरपि उपतिष्ठत्विति शेषः॥ १०॥

तत्र लङ्कायां गन्तुम्। एष्यन्ति आगमिष्यन्ति इहेति शेषः॥ ११॥

न गन्तव्यम् इमं देशं विहायेति शेषः॥ १२॥

उत्सहेयं यदि त्वया देवकार्य्यायेहस्थातव्यं स्यादिति शेषः। पक्षवत्त्वे हि चापल्याद्गन्तव्यमेवेतोऽन्यत्र त्वयेति भावः॥ १३॥

लोकानामेवेत्येव न अपितु तयोर्नृपपुत्रयोः तत्कार्य्यं दूतानां सीताबोधनरूपं त्वयापि कार्य्यं तत्रापि कर्त्तुमहं तत्रापि देवांशत्वेन त्वद्धित-

इच्छाम्यहमपि द्रष्टुं भ्रातरौ रामलक्ष्मणौ ।
नेच्छे चिरं धारयितुं प्राणांस्त्यक्ष्ये कलेवरम् ।
महर्षिस्त्वब्रवीदेवं दृष्टतत्त्वार्थदर्शनः ॥ १५ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
द्विषष्टितमः सर्गः ॥ ६२ ॥

मपि तदिति भावः । तत्कार्य्यस्य लोकसम्बन्धित्वं दर्शयति ब्राह्मणा-नामिति । तत्कार्य्यमिति शेषः ॥ १४ ॥

इच्छाम्यहमिति । दृष्टतत्त्वार्थदर्शनः दृष्टं सिद्धं तत्त्वार्थदर्शनं यस्य महर्षिरेवं भाव्यर्थमब्रवीदतोहेतोरहमपि भ्रातरौ रामलक्ष्मणौ द्रष्टुमिच्छामि । यदि महर्षिरेवं मां प्रति नावक्ष्यत् तदा प्राणान् चिरं धारयितुं नेच्छे नैच्छम् अपि तु कलेवरं त्यक्ष्ये इत्येवच्छमित्यर्थः इति कतकः । अन्ये तु निशाकरवाक्यमेवेदम् अहं पदार्थोऽपि स एवे-त्याहुः ॥ १५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धा-काण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

# त्रिषष्टितमः सर्गः ।

---

एतैरन्यैश्च बहुभिर्वाक्यैर्वाक्यविशारदः ।
मां प्रशस्याभ्यनुज्ञाप्य प्रविष्टः स स्वमालयम् ॥ १ ॥
कन्दरात्तु विसर्पित्वा पर्वतस्य शनैः शनैः ।
अहं विन्ध्यं समारुह्य भवतः प्रतिपालये ॥ २ ॥
अद्य त्वेतस्य कालस्य वर्षं साग्रशतं गतम् ।
देशकालप्रतीक्षोऽस्मि हृदि कृत्वा मुनेर्वचः ॥ ३ ॥
महाप्रस्थानमासाद्य स्वर्गते तु निशाकरे ।
मां निर्दहति सन्तापो वितर्कैर्बहुभिर्वृतम् ॥ ४ ॥

एतैरिति । मां प्रशस्य भाविदेवकार्यसाधकत्वेन स्तुत्वा । अभ्यनुज्ञाप्य आमन्त्र्य ॥ १ ॥

पर्वतकन्दरादहं शनैः शनैः विसर्पित्वा निःसृत्य विन्ध्यं विन्ध्यशिखरम् ॥ २ ॥

एतस्य कालस्य मुनिसंवादानन्तरकालस्य साग्रं वर्षशतं गतम् । शतशब्दोऽनन्तवाची । तेन किञ्चिदधिकाष्टवर्षसहस्राणीत्यर्थः । प्राक् वधैव तेनोक्तः ॥ ३ ॥

उदितां मरणे बुद्धिं मुनिवाक्यैर्निवर्त्तये ।
बुद्धिर्या तेन मे दत्ता प्राणानां रक्षणे मम ॥ ५ ॥
सा मेपनयते दुःखं दीप्तेवाग्निशिखा तमः ।
बुद्ध्वा च मया वीर्य्यं रावणस्य दुरात्मनः ॥ ६ ॥
पुत्रः सन्तर्जितो वाग्भिर्न त्राता मैथिली कथम् ।
तस्या विलपितं श्रुत्वा तौ च सीतावियोजितौ ॥ ७ ॥
न मे दशरथस्नेहात् पुत्रेणोत्पादितं प्रियम् ।
तस्य त्वेवं ब्रुवाणस्य संहतैर्वानरैः सह ॥ ८ ॥
उत्पेततुस्तदा पक्षौ समक्षं वनचारिणाम् ।
स दृष्ट्वा स्वां तनुं पक्षैरुद्गतैररुणच्छदैः ॥ ९ ॥

वितर्कैर्विचारैः सन्तापः पक्षादिहीनजीवनजः ॥ ४ ॥

निवर्त्तये स्मेति शेषः । मम प्राणानां रक्षणे तेन या मे बुद्धिर्दत्तेत्यन्वयः । रावणस्य वीर्य्यं बुद्ध्वा मत्पुत्रवीर्य्यादल्पमिति जानता ॥ ५ ॥ ६ ॥

कथं न त्रातेति सन्तर्जितः ननु सोतेत्यज्ञानादरक्षणमत आह,— तस्या इति । हा राम हा लक्ष्मणेत्येवमात्मकं तस्या विलपितं श्रुत्वा तौ रामलक्ष्मणौ सीताविनाकृतौ इति सिद्धानां वचः श्रुत्वाऽनया विनाकृतौ रामलक्ष्मणाविति सुज्ञानम् एषा रामपत्नीति च सुज्ञानमिति भावः ॥ ७ ॥

तस्माद्दशरथस्नेहादवश्यकर्त्तव्यं प्रियं मे पुत्रेण नोत्पादितम् ॥ ८ ॥

प्रहर्षमतुलं लेभे वानरांश्चेदमब्रवीत् ।
निशाकरस्य राजर्षेः प्रसादादमितौजसः ॥ १० ॥
आदित्यरश्मिनिर्दग्धौ पक्षौ पुनरुपस्थितौ ।
यौवने वर्त्तमानस्य ममासीद्यः पराक्रमः ॥ ११ ॥
तमेवाद्यावगच्छामि बलं पौरुषमेव च ।
सर्व्वथा क्रियतां यत्नः सीतामधिगमिष्यथ ॥ १२ ॥
पक्षलाभो ममायं वः सिद्धिप्रत्ययकारकः ।
इत्युक्त्वा तान् हरीन् सर्व्वान् सम्पातिः पतगोत्तमः ॥ १३ ॥
उत्पपात गिरेः शृङ्गाज्जिज्ञासुः खगमो गतिम् ।
तस्य तद्वचनं श्रुत्वा प्रतिसंहृष्टमानसाः ।
बभूवुर्हरिशार्दूला विक्रमाभ्युदयोन्मुखाः ॥ १४ ॥
अथ पवनसमानविक्रमाः
प्लवगवराः प्रतिलब्धपौरुषाः ।

अवयास्कृदैरक्षरावर्णपक्षैः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

सिद्धिप्रत्ययः कार्य्यसिद्धिविश्वासः ॥ १३ ॥

गतिं जिज्ञासुः उत्थितपक्षैः प्राग्वत् खगतिं विज्ञातुमिच्छुः विक्रमसाध्येऽभ्युदये सीताधिगमनरूपे उन्मुखाः ॥ १४ ॥

प्रतिलब्धं प्राप्तं पौरुषं पौरुषप्रवृत्तिकालो यैस्ते अभिजिदभिमुखाम् अभिजिन्नक्षत्रसन्मुखां दिशं दक्षिणाम् । यद्वाभिजिद्-

अभिजिदभिमुखां दिशं ययु-
र्जनकसुतापरिमार्गणोन्मुखाः ॥ १५ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
त्रिषष्टितमः सर्गः ॥ ६३ ॥

बाहुलकात् कर्मणि क्विप् अभिजेतव्यो रावणः सम्मुखो यस्यां तां दिशम् ॥ १५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धा-
काण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

# चतुःषष्टितमः सर्गः ।



आख्याता गृध्रराजेन समुत्प्लुत्य प्लवङ्गमाः ।
सङ्गताः प्रीतिसंयुक्ता विनेदुः सिंहविक्रमाः ॥ १ ॥
सम्पातेर्वचनं श्रुत्वा हरयो रावणक्षयम् ।
हृष्टाः सागरमाजग्मुः सीतादर्शनकाङ्क्षिणः ॥ २ ॥
अभिगम्य तु तं देशं ददृशुर्भीमविक्रमाः ।
कृत्स्नं लोकस्य महतः प्रतिबिम्बमवस्थितम् ॥ ३ ॥
दक्षिणस्य समुद्रस्य समासाद्योत्तरां दिशम् ।
सन्निवेशं ततश्चक्रुर्हरिवीरा महाबलाः ॥ ४ ॥

आख्याताः आख्यातसीतावृत्तान्ताः सङ्गताः मिलिताः ॥ १ ॥

रावणक्षयं रावणनाशं रावणगृहस्थोद्देशोक्तं वचनं श्रुत्वा ॥ २ ॥

तं देशं सागरतीररूपं देशमभिगम्य यत्रेत्यादिः । यत्र महतो लोकस्य सचन्द्रार्कग्रहस्य कृत्स्नं प्रतिबिम्बं स्थितं तं समुद्रं ददृशुः । प्रतिबिम्बमवस्थितमिति प्राचीनः पाठः । प्रतिबिम्बमिव स्थितमित्याधुनिकपाठो न युक्तः । कृत्स्नलोकप्रतिबिम्बभावाप्रसिद्धेः ॥ ३ ॥

तस्य च दक्षिणसमुद्रस्योत्तरां दिशमाश्रित्य सन्निवेशम् अवस्थितिस्थलं चक्रुः ॥ ४ ॥

प्रसुप्तमिव चान्यत्र क्रीड़न्तमिव चान्यतः।
क्वचित्पर्वतमात्रैश्च जलराशिभिरावृतम् ॥ ५ ॥
सङ्कुलं दानवेन्द्रैश्च पातालतलवासिभिः।
रोमहर्षकरं दृष्ट्वा विषेदुः कपिकुञ्जराः ॥ ६ ॥
आकाशमिव दुष्पारं सागरं प्रेक्ष्य वानराः।
विषेदुः सहिताः सर्व्वे कथं कार्य्यमिति ब्रुवन् ॥ ७ ॥
विषण्णां वाहिनीं दृष्ट्वा सागरस्य निरीक्षणात्।
आश्वासयामास हरीन् भयार्त्तान् हरिसत्तमः ॥ ८ ॥
न विषादे मनः कार्य्यं विषादो दोषवत्तरः।
विषादो हन्ति पुरुषं बालं क्रुद्ध इवोरगः ॥ ९ ॥
यो विषादं प्रसहते विक्रमे समुपस्थिते।
तेजसा तस्य हीनस्य पुरुषार्थो न सिध्यति ॥ १० ॥
तस्यां रात्र्यां व्यतीतायामङ्गदो वानरैः सह।
हरिवृद्धैः समागम्य पुनर्मन्त्रममन्त्रयत् ॥ ११ ॥
सा वानराणां ध्वजिनी परिवार्य्याङ्गदं बभौ।

प्रसुप्तमिव चान्यत्र निस्तरङ्गप्रदेशे अन्यतः अन्यत्र पर्वतमात्रैः तत्सदृशैर्जलराशिभिरूर्मिभिः ॥ ५ ॥ ६ ॥

ब्रुवन्नब्रुवन् ॥ ७ ॥

हरिसत्तमः अङ्गदः ॥ ८ ॥

विषादो दोषवत्तर इत्यस्य विवरणं विषादो हन्तीत्यादि ॥ ९ ॥

वासवं परिवार्य्येव मरुतां वाहिनी स्थिता ॥ १२ ॥
को न्यस्तां वानरीं सेनां शक्तस्तम्भयितुं भवेत् ।
अन्यत्र वालितनयादन्यत्र च हनूमतः ॥ १३ ॥
ततस्तान् हरिवृद्धांश्च तच्च सैन्यमरिन्दमः ।
अनुमान्याङ्गदः श्रीमान् वाक्यमर्थवदब्रवीत् ॥ १४ ॥
क इदानीं महातेजा लङ्घयिष्यति सागरम् ।
कः करिष्यति सुग्रीवं सत्यसन्धमरिन्दमम् ॥ १५ ॥
को वीरो योजनशतं लङ्घयेत प्लवङ्गमः ।
इमांश्च यूथपान् सर्व्वान् मोचयेत् को महाभयात् ॥ १६ ॥
कस्य प्रसादाद्दारांश्च पुत्रांश्चैव गृहाणि च ।
इतो निवृत्ताः पश्येम सिद्धार्थाः सुखिनो वयम् ॥ १७ ॥
कस्य प्रसादाद्रामञ्च लक्ष्मणञ्च महाबलम् ।
अभिगच्छेम संहृष्टाः सुग्रीवञ्च वनौकसम् ॥ १८ ॥
यदि कश्चित् समर्थो वः सागरप्लवने हरिः ।
स ददात्विह नः शीघ्रं पुण्यामभयदक्षिणाम् ॥ १९ ॥
अङ्गदस्य वचः श्रुत्वा न कश्चित् किञ्चिदब्रवीत् ।

प्रसह्य विषादे प्रवर्त्तते । तेजसाहीनस्य विषादवशादिति भावः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

अनुमान्य अभिपूज्य ॥ १४ ॥

स्तिमितेवाभवत् सर्व्वा सा तत्र हरिवाहिनी ॥ २० ॥
पुनरेवाङ्गदः प्राह तान् हरीन् हरिसत्तमः।
सर्व्वे बलवतां श्रेष्ठा भवन्तो दृढविक्रमाः।
व्यपदेशकुले जाताः पूजिताश्चाप्यभीक्ष्णशः ॥ २१ ॥
न हि वो गमने सङ्गः कदाचित् कस्यचित् भवेत्।
ब्रुवध्वं यस्य या शक्तिः प्लवने प्लवगर्षभाः! ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
चतुःषष्टितमः सर्गः ॥ ६४ ॥

सत्यसन्धं सत्या सन्धा सीताप्रत्यर्पणप्रतिज्ञा यस्य तादृशम् ॥ १५ ॥
॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

व्यपदेशकुले विगतोऽपदेशः कलङ्को यस्मात्तादृशे कुले पूजिता राज्ञा महाबलत्वेन सत्कृताः ॥ २१ ॥

सङ्गः प्रतिबन्धः। ब्रुवद्धं ब्रूद्धम् ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
किष्किन्धाकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

## पञ्चषष्टितमः सर्गः।



अथाङ्गदवचः श्रुत्वा ते सर्व्वे वानरर्षभाः।
स्वं स्वं गतौ समुत्साहमूचुस्तत्र यथाक्रमम्॥ १॥
गजो गवाक्षो गवयः शरभो गन्धमादनः।
मैन्दश्च द्विविदश्चैव अङ्गदो जाम्बवांस्तथा॥ २॥
आबभाषे गजस्तत्र प्लवेयं दशयोजनम्।
गवाक्षो योजनान्याह गमिष्यामीति विंशतिम्॥ ३॥
शरभो वानरस्तत्र वानरांस्तानुवाच ह।
त्रिंशतन्तु गमिष्यामि योजनानां प्लवङ्गमाः॥ ४॥
ऋषभो वानरस्तत्र वानरांस्तानुवाच ह।
चत्वारिंशद्गमिष्यामि योजनानां न संशयः॥ ५॥
वानरांस्तु महातेजा अब्रवीत् गन्धमादनः।
योजनानां गमिष्यामि पञ्चाशत्तु न संशयः॥ ६॥
मैन्दस्तु वानरस्तत्र वानरांस्तानुवाच ह।
योजनानां परं षष्टिमहं प्लवितुमुत्सहे॥ ७॥

अथेति॥ १॥ २॥ ३॥

ततस्तत्र महातेजा द्विविदः प्रत्यभाषत ।
गमिष्यामि न सन्देहः सप्ततिं योजनान्यहम् ॥ ८ ॥
सुषेणस्तु महातेजाः सत्ववान् कपिसत्तमः ।
अशीतिं प्रतिजानेऽहं योजनानां पराक्रमे ॥ ९ ॥
तेषां कथयतां तत्र सर्व्वांस्ताननुमान्य च ।
ततो वृद्धतमस्तेषां जाम्बवान् प्रत्यभाषत ॥ १० ॥
पूर्व्वमस्माकमप्यासीत् कश्चित् गतिपराक्रमः ।
ते वयं वयसः पारमनुप्राप्ताः स्म साम्प्रतम् ॥ ११ ॥
किन्तु नैवंगते शक्यमिदं कार्य्यमुपेक्षितुम् ।
यदर्थं कपिराजस्य रामस्य कृतनिश्चयौ ॥ १२ ॥
साम्प्रतं कालमस्माकं या गतिस्तां निबोधत ।
नवतिं योजनानान्तु गमिष्यामि न संशयः ॥ १३ ॥
तांश्च सर्व्वान् हरिश्रेष्ठान् जाम्बवानिदमब्रवीत् ।
न खल्वेतावदेवासीद्गमने मे पराक्रमः ॥ १४ ॥

त्रिंशदित्यर्थे त्रिंशतमित्यार्षम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

पराक्रमे गमने ॥ ९ ॥

वृद्धतमस्तेषामिति निर्धारणे षष्ठी ॥ १० ॥

स्म स्मः इत्यर्थः ॥ ११ ॥

एवंगते कष्टप्राप्ते यदर्थं कृतनिश्चयौ अस्मत्प्रतिष्ठिततयैतद्विषये कृतनिश्चयौ ॥ १२ ॥

मया वैरोचने यज्ञे प्रभविष्णुः सनातनः ।
प्रदक्षिणीकृतः पूर्व्वं क्रममाणस्त्रिविक्रमः ॥ १५ ॥
स इदानीमहं वृद्धः प्लवने मन्दविक्रमः ।
यौवने च तदासीन् मे बलमप्रतिमं परम् ॥ १६ ॥
सम्प्रत्येतावदेवाद्य शक्यं मे गमने स्वतः ।
नैतावता च संसिद्धिः कार्य्यस्यास्य भविष्यति ॥ १७ ॥
अथोत्तरमुदारार्थमब्रवीदङ्गदस्तदा ।
अनुमान्य तदा प्राज्ञो जाम्बवन्तं महाकपिम् ॥ १८ ॥
अहमेतत् गमिष्यामि योजनानां शतं महत् ।
निवर्त्तने तु मे शक्तिः स्यान्नवेति न निश्चितम् ॥ १९ ॥
तमुवाच हरिश्रेष्ठं जाम्बवान् वाक्यकोविदः ।
ज्ञायते गमने शक्तिस्तव हर्य्यृक्षसत्तम ! ॥ २० ॥
कामं शतसहस्रं वा नह्येष विधिरुच्यते ।
योजनानां भवान् शक्तो गन्तुं प्रतिनिवर्त्तितुम् ॥ २१ ॥

साम्प्रतङ्कालं सम्प्रतिकाले ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

एतावता प्लवनेन ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

काममिति। शतसहस्रमपि योजनानां गन्तुं त्वं कामं समर्थस्तथापि स्वामिनस्तव एष विधिः प्लवनं न युक्तमित्युच्यतेऽस्माभिरिति शेषः। इममेवार्थं प्रपञ्चयति। योजनानामिति शतसहस्रमितिशेषः। गन्तुं प्रतिनिवर्त्तितुञ्च शक्त इत्यर्थः ॥ २१ ॥

नहि प्रेषयिता तात ! स्वामी प्रेष्यः कथञ्चन ।
भवतायं जनः सर्व्वः प्रेष्यः प्लवगसत्तम ! ॥ २२ ॥
भवान् कलत्रमस्माकं स्वामिभावे व्यवस्थितः ।
स्वामी कलत्रं सैन्यस्य गतिरेषा परन्तप ! ॥ २३ ॥
अपि वै तस्य कार्य्यस्य भवान् मूलमरिन्दम ! ।
तस्मात् कलत्रवत्तात ! प्रतिपाल्यः सदा भवान् ॥ २४ ॥
मूलमर्थस्य संरक्ष्यमेष कार्य्यविदां नयः ।
मूले हि सति सिध्यन्ति गुणाः सर्व्वे फलोदयाः ॥ २५ ॥
तद्भवानस्य कार्य्यस्य साधनं सत्यविक्रम ! ।
बुद्धिविक्रमसम्पन्नो हेतुरत्र परन्तप ! ॥ २६ ॥
गुरुश्च गुरुपुत्रश्च त्वं हि नः कपिसत्तम ! ।

प्रेषयिता स्वामी न प्रेष्यः प्रेष्यैरिति शेषः ॥ २२ ॥

भवान् कलत्रं कलत्रवत् दृढ़स्वीयत्वबुद्धा यावत् स्वप्राणबलं परिपाल्य इत्यर्थः । स्वामिभावे स्वामित्वे एतेन लोके कलत्रस्य भर्त्ता संसारव्यवहारविषये आज्ञाप्यस्तत्प्रभुत्वञ्च कलत्रस्येति दर्शितं तस्मात् स्वामी सैन्यस्य कलत्रवत् परिपाल्यः स्वामिना च कलत्रेण भर्त्तेव सैन्यमाज्ञाप्यम् । एषा गतिः लोकस्येति शेषः ॥ २३ ॥

तदेव स्पष्टमाह,—तस्मात् कलत्रवदिति ॥ २४ ॥

नयो निश्चयः गुणा गुणभूताः अप्रधानभूताः इति यावत् तादृशाः फलोदयाः फलोत्पत्तयः सिध्यन्ति ॥ २५ ॥

साधनपदस्यैव व्याख्या हेतुरिति ॥ २६ ॥

भवन्तमाश्रित्य वयं समर्था ह्यर्थसाधने ॥ २७॥
उक्तवाक्यं महाप्राज्ञं जाम्बवन्तं महाकपिः।
प्रत्युवाचोत्तरं वाक्यं वालिसूनुरथाङ्गदः॥ २८॥
यदि नाहं गमिष्यामि नान्यो वानरपुङ्गवः।
पुनः खल्विदमस्माभिः कार्य्यं प्रायोपवेशनम्॥ २९ ॥
न ह्यकृत्वा हरिपतेः सन्देशं तस्य धीमतः।
तत्रापि गत्वा प्राणानां न पश्ये परिरक्षणम्॥ ३० ॥
स हि प्रसादे चात्यर्थं कोपे च हरिरीश्वरः।
अतीत्य तस्य सन्देशं विनाशो गमने भवेत्॥ ३१ ॥
तत्तथा ह्यस्य कार्य्यस्य न भवत्यन्यथा गतिः।
तद्भवानेव दृष्टार्थः सञ्चिन्तयितुमर्हति॥ ३२ ॥
सोऽङ्गदेन तदा वीरः प्रत्युक्तः प्लवगर्षभः।

गुरुर्युवराजत्वात्॥ २७॥ २८॥

यद्यहं न गमिष्यामि अन्यस्य न गमिष्यति तदा पुनर्मरणमेव न्याय इति भावः॥ २९॥

तस्य धीमतो हरिपतेः सन्देशमकृत्वा प्राणानां परिरक्षणं न पश्यामि। तत्रापि लङ्कायामपि गत्वा आगमनशक्त्यभावात्तं न पश्यामीत्यन्वयः॥ ३०॥

सुग्रीवः प्रसादेऽत्यर्थंकोपे चेश्वरः निग्रहानुग्रहाधिकृत इति भावः। गमने किष्किन्धागमने॥ ३१॥

जाम्बवानुत्तमं वाक्यं प्रोवाचेदं ततोऽङ्गदम् ॥ ३३ ॥
तस्य ते वीर ! कार्य्यस्य न किञ्चित् परिहास्यते ।
एष सञ्चोदयाम्येनं यः कार्य्यं साधयिष्यति ॥ ३४ ॥

ततः प्रतीतं प्लवतां वरिष्ठ-
मेकान्तमाश्रित्य सुखोपविष्टम् ।
सञ्चोदयामास हरिप्रवीरो
हरिप्रवीरं हनुमन्तमेव ॥ ३५ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
पञ्चषष्टितमः सर्गः ॥ ६५ ॥

तत्तस्मादस्य कार्य्यस्य समुद्रलङ्घनस्य गतिः प्राप्तिरन्यथा यथा न भवति असिद्धा यथा न भवति हि निश्चयेन तथा भवानेव तदुद्दिश्य सञ्चिन्तयितुमर्हति यतो भवान् दृष्टार्थः। बुद्धिमत्वाच्चिरवृद्धत्वाच्चा-परोक्षीकृतसमस्तकृत्याकृत्यतत्त्वार्थं इत्यर्थः ॥ ३२ ॥ ३३ ॥

कार्य्यस्य न परिहास्यते शेषे षष्ठी अनुष्ठानमिति शेषो वा। एषः एषोऽहमित्यर्थः। एनं तम् ॥ ३४ ॥

एकान्तमाश्रित्येति यूथात् बहिः क्वचिदिति शेषः ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धा-काण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

## षट्षष्टितमः सर्गः ।



अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् ।
जाम्बवान् समुदीक्ष्यैवं हनूमन्तमथाब्रवीत् ॥ १ ॥
वीर ! वानरलोकस्य सर्व्वशास्त्रविदां वर ! ।
तूष्णीमेकान्तमाश्रित्य हनूमन् ! किं न जल्पसि ॥ २ ॥
हनूमन् ! हरिराजस्य सुग्रीवस्य समो ह्यसि ।
रामलक्ष्मणयोश्चापि तेजसा च बलेन च ॥ ३ ॥
अरिष्टनेमिनः पुत्रो वैनतेयो महाबलः ।
गरुत्मानिति विख्यात उत्तमः सर्व्वपक्षिणाम् ॥ ४ ॥
बहुशो हि मया दृष्टः सागरे स महाबलः ।

अनेकेति ॥ १ ॥

एवमब्रवीदित्येवं शब्दार्थौ वीरवानरेति । वानरलोकस्य वीरेत्यन्वयः । निर्धारणे षष्ठी । यद्वा हे वीर वानरलोकस्य कृत्यमुद्दिश्य किं न जल्पसि इत्यन्वयः ॥ २ ॥

बलेन च सम इत्यनुकर्षः ॥ ३ ॥

अरिष्टनेमिनः काश्यपस्य नामान्तरमार्षम् । सर्वपक्षिणामुत्तमो गरुत्मानिव भवान् सर्वोत्तमो विख्यात इत्यन्वयः ॥ ४ ॥

भुजङ्गानुद्धरन् पक्षी महाबाहुर्महाबलः ॥ ५ ॥
पक्षयोर्यत् बलं तस्य भुजवीर्य्यबलं तव ।
विक्रमश्चापि तेजश्च न ते तेनापहीयते ॥ ६ ॥
बलं बुद्धिश्च तेजश्च सत्वञ्च हरिपुङ्गव ! ।
विशिष्टं सर्व्वभूतेषु किमात्मानं न सज्जसे ॥ ७ ॥
अप्सराप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला ।
अञ्जनेति परिख्याता पत्नी केसरिणो हरेः ॥ ८ ॥
त्रिख्याता त्रिषु लोकेषु रूपेणाप्रतिमा भुवि ।
अभिशापादभूत्तात ! कपित्वे कामरूपिणी ॥ ९ ॥

महाबल इत्येकत्र बलं शारीरं परत्रान्तरमिति भेदः ॥ ५ ॥

भुजवीर्य्यबलं तवेति प्राचीनपाठे तस्य पक्षयोर्यत् बलं तव च यत् भुजवीर्य्यबलं उभयं तुल्यमिति शेषः । ते विक्रमश्च तेजश्च तेन गरुत्मता नापहीयते न न्यूनो भवति ॥ ६ ॥

विशिष्टम् आत्मानम् अभिजनबलपराक्रमवैभवविशिष्टमात्मानं किन्न सज्जसे समुद्रलङ्घनाय किन्न सज्जीकरोषीत्यर्थः ॥ ७ ॥

तदेव बोधयति । अप्सराप्सरसामिति । अप्सरा इत्येकवचनान्तोऽपि सन्धिरार्षः । अप्सरा इत्याबन्त आर्ष इत्यन्ये । पुञ्जिकस्थलेति नाम्ना या विख्याता सैव केसरिणः पत्नी अञ्जनेति नाम्ना ख्याता ॥ ८ ॥

तस्या वानरपत्नीत्वे हेतुः अभिशापादिति । ऋषिशापाद्वानरीजन्म-कपित्वे कपिशरीरत्वेऽपीत्यर्थः । कामरूपिणी देवतास्वभावानुवृत्तेरिति भावः ॥ ९ ॥

दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः।
मानुषं विग्रहं कृत्वा रूपयौवनशालिनी ॥ १० ॥
विचित्रमाल्याभरणा कदाचित् क्षौमधारिणी।
अचरत् पर्व्वतस्याग्रे प्रावृडम्बुदसन्निभे ॥ ११ ॥
तस्या वस्त्रं विशालाक्ष्याः पीतं रक्तदशं शुभम्।
स्थितायाः पर्व्वतस्याग्रे मारुतोऽपहरच्छनैः ॥ १२ ॥
स ददर्श ततस्तस्यावृत्तावूरू सुसंहतौ।
स्तनौ च पीनौ सहितौ सुजातञ्चारु चाननम् ॥ १३ ॥
तां बलादायतश्रोणीं तनुमध्यां यशस्विनीम्।
दृष्ट्वैव शुभसर्व्वाङ्गीं पवनः काममोहितः ॥ १४ ॥
स तां भुजाभ्यां दीर्घाभ्यां पर्य्यष्वजत मारुतः।
मन्मथाविष्टसर्व्वाङ्गो गतात्मा तामनिन्दिताम् ॥ १५ ॥

कुत्र तज्जन्मेत्यत आह,—दुहितेति ॥ १० ॥

अम्बुदसन्निभे इति पर्वताग्रविशेषणम् ॥ ११ ॥

रक्ता दशाः प्रान्ततन्तवो यस्य तत् ॥ १२ ॥

सुसंहतौ सुसंश्लिष्टौ सहितौ परस्परसंसक्तौ पीनौ च स्तनौ ददर्श ॥ १३ ॥

पवनः काममोहित आसीदिति शेषः ॥ १४ ॥

मारुतस्तां पर्य्यष्वजत्। मन्मथाविष्टसर्वाङ्गः कामाक्रान्ततत्तत्स्थानकर्म्मेन्द्रियः अतएव तां गतात्मा तद्गर्भप्रविष्टात्मतेजाः बभूव देवत्वादिनापि योनिसम्बन्धं निजतेजःप्रवेशनमिति बोध्यम् ॥ १५ ॥

सा तु तत्रैव सम्भ्रान्ता सुव्रता वाक्यमब्रवीत्।
एकपत्नीव्रतमिदं को नाशयितुमिच्छति॥ १६॥
अञ्जनाया वचः श्रुत्वा मारुतः प्रत्यभाषत।
न त्वां हिंसामि सुश्रोणि! माभूत्ते मनसो भयम्॥ १७॥
मनसाऽस्मि गतो यत्त्वां परिष्वज्य यशस्विनि!।
वीर्य्यवान् बुद्धिसम्पन्नस्तवपुत्रो भविष्यति॥ १८॥
महासत्त्वो महातेजा महाबलपराक्रमः।
लङ्घने प्लवने चैव भविष्यति मया समः॥ १९॥
एवमुक्ता ततस्तुष्टा जननी ते महाकपे!।
गुहायां त्वां महाबाहो! प्रजज्ञे प्लवगर्षभ!॥ २०॥
अभ्युत्थितं ततः सूर्य्यं बालो दृष्ट्वा महावने।

एकः पतिर्यस्यास्तत् व्रतं तं धर्मम्॥ १६॥

त्वां न हिंसामि योनिसम्बन्धेन तावकमेकपत्नीव्रतं न नाशयामि। अनेन बलात् परपुरुषेणालिङ्गनादावपि न पातिव्रत्यभङ्गः किन्तु योनिभोगेनैवेति सूचितम्॥ १७॥

यद्यस्मात्त्वां परिष्वज्य मनसा मानसभोगेनैव त्वां गतोऽस्मि स्वतेजसा त्वद्गर्भं प्राप्तोऽस्मि तस्मादीदृशस्ते पुत्रो भविष्यति॥ १८॥

मया मारुतेन॥ १९॥

ततस्तुष्टा मनसा महादेवततेजःसंक्रमकथनात्। गुहायां तत्पर्वतगुहायां तदानीमेवेति भावः॥ २०॥

फलञ्चेति जिघृक्षुस्त्वम् उत्पत्याभ्युत्पतो दिवम् ॥ २१ ॥
शतानि त्रीणि गत्वाथ योजनानां महाकपे !।
तेजसा तस्य निर्धूतो न विषादं गतस्ततः ॥ २२ ॥
त्वामप्युपगतं तूर्णमन्तरीक्षं महाकपे !।
क्षिप्तमिन्द्रेण ते वज्रं कोपाविष्टेन तेजसा ॥ २३ ॥
तदा शैलाग्रशिखरे वामो हनुरभज्यत।
ततोऽभिनामधेयन्ते हनुमानिति कीर्त्तितम् ॥ २४ ॥
ततस्त्वां निहतं दृष्ट्वा वायुर्गन्धवहः स्वयम्।
त्रैलोक्यं भृशसंक्रुद्धो न ववौ वै प्रभञ्जनः ॥ २५ ॥
संभ्रान्ताश्च सुराः सर्व्वे त्रैलोक्ये क्षुभिते सति।

फलमिति। जिघृक्षुस्त्वम् उत्प्लुत्य दिवमभ्युत्पतः। उत्प्लुत्याभ्युत्थितो दिवमिति पाठान्तरे उत्प्लुत्य दिवमभ्युत्थित इति योजना उदयकालिकभास्करस्याम्रफलवद्रक्तवर्णत्वात् फलबुद्धिविषयत्वम्। यथा जातमात्राऽजादिबालानां प्राचीनवासनया स्तनपानादौ प्रवृत्तिस्तथैवास्य जातमात्रस्य वानरोचितफलादानप्रवृत्तिरिति बोध्यम् ॥ २१ ॥

तस्य रवेस्तेजसा निर्धूतः क्षिप्तोऽपि ततः वायुबलवत्त्वान्न विषादं गतः ॥ २२ ॥

तूर्णं शीघ्रमन्तरिक्षमुपगतं प्राप्तं त्वां दृष्ट्वा इन्द्रेण ते तव शरीरे वज्रं क्षिप्तम् ॥ २३ ॥

तदा तस्मिन् काले ॥ २४ ॥

प्रसादयन्ति संक्रुद्धं मारुतं भुवनेश्वराः ॥ २६ ॥
प्रसादिते च पवने ब्रह्मा तुभ्यं वरं ददौ ।
अशस्त्रबध्यतां तात ! समरे सत्यविक्रम ! ॥ २७ ॥
वज्रस्य च निपातेन वीरुजं त्वां समीक्ष्य च ।
सहस्रनेत्रः प्रीतात्मा ददौ ते वरमुत्तमम् ॥ २८ ॥
स्वच्छन्दतश्च मरणं तव स्यादिति वै प्रभो ! ।
स त्वं केसरिणः पुत्रः क्षेत्रजो भीमविक्रमः ॥ २९ ॥
मारुतस्यौरसः पुत्रस्तेजसा चापि तत्समः ।
त्वं हि वायुसुतो वत्स ! प्लवने चापि तत्समः ॥ ३० ॥
वयमद्य गतप्राणा भवानस्मासु साम्प्रतम् ।
दाक्ष्यविक्रमसम्पन्नः कपिराज इवापरः ॥ ३१ ॥
त्रिविक्रमे मया तात ! सशैलवनकानना ।
त्रिःसप्तकृत्वः पृथिवी परिक्रान्ता प्रदक्षिणम् ॥ ३२ ॥
तदा चौषधयोऽस्माभिः सञ्चिता देवशासनात् ।

त्रैलोक्यं न ववौ न गच्छति स्म ॥ २५ ॥ २६ ॥ २७ ॥

वज्रस्य निपातेन चाद्रिरौ निपातेन च वीरुजं तज्जनितपीडाभाववन्तं तेनाप्यनुत्पादितव्यथमिति यावत् ॥ २८ । २९ ॥

मारुतस्यौरस इति तथा दर्शितं प्राक् ॥ ३० ॥

कपिराजः सुग्रीवः ॥ ३१ ॥

त्रिविक्रमे त्रिविक्रमावतारसमये ॥ ३२ ॥

निर्मथ्यममृतं याभिस्तदानीं नो महत् बलम् ॥ २३ ॥
स इदानीमहं वृद्धः परिहीनपराक्रमः।
साम्प्रतं कालमस्माकं भवान् सर्व्वगुणान्वितः ॥ २४ ॥
तत् विजृम्भस्व विक्रान्तः प्लवतामुत्तमो ह्यसि।
त्वद्वीर्य्यं द्रष्टुकामा हि सर्व्वा वानरवाहिनी ॥ २५ ॥
उत्तिष्ठ हरिशार्दूल! लङ्घयस्व महार्णवम्।
परा हि सर्व्वभूतानां हनूमन्या गतिस्तव ॥ २६ ॥
विषण्णा हरयः सर्व्वे हनुमन्! किमुपेक्षसे।
विक्रमस्व महावेग! विष्णुस्त्रीन् विक्रमानिव ॥ २७ ॥
ततः कपीनामृषभेण चोदितः
प्रतीतवेगः पवनात्मजः कपिः।

देवगणसमात् सञ्चिताः याभिः सागरे प्रक्षिप्य अमृतं निर्मथ्य निर्मथनेन लब्धम् ॥ २३ ॥

साम्प्रतं कालमिति सप्तम्यर्थे द्वितीया। अस्माकमिति निर्धारणे षष्ठी। अस्मिन् कालेऽस्माकं मध्ये भवानेव सर्वगुणान्वित इत्यर्थः ॥ २४ ॥

तद्विजृम्भस्व निःसीमनिजबलविजृम्भणं कुरु ॥ २५ ॥

उत्तिष्ठ लङ्घयस्वेत्यत्र हेतुः परा हीति। हे हनूमन्! परा श्रेष्ठतरा या तव गतिर्लङ्घनादीयगमनं सा सर्व्वभूतानामुपकाराय न केवलमस्माकमेवेति शेषः ॥ २६ ॥

विषण्णा अर्थस्य स्वासाध्यत्वाद्दीनाः किमुपेक्षसे तानिति शेषः ॥ २७ ॥

कपीनामृषभेण कपिश्रेष्ठेन अत्र कृषिन्यायेन ऋषभशब्दप्रयोगः। कथं

प्रहर्षयं स्तां हरिवीरवाहिनीं
चकार रूपं पवनात्मजस्तदा ॥ ३८ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
षट्षष्टितमः सर्गः ॥ ६६ ॥

समुद्रतरणोचित महाविग्रहं प्रकृतेस्तदग्यत्वाद्रूपमहत्त्वस्वल्पत्वकरणं नानुपपन्नम्। एवं जाम्बवता हनुमदभिजनपराक्रमादिज्ञापनं तस्य सहजबलाविर्भावाय। तथा ज्ञापनं हि तस्य तदाविर्भावकारणमिति दैवकृतः समयः। यद्यपि इतरदिक्त्रय प्रेषितवानराणामपि सप्तसमुद्रपरवर्त्त्युदयास्ताचलादिपर्य्यन्तगमनमुपदिष्टं तथापि तन्मार्गे समुद्रमध्ये विंशतित्रिंशदादियोजनेषु पर्व्वतानां सत्त्वात्तदवलम्बेन प्लवनेन तथा कष्टमिह तु निरवलम्बं शतयोजनप्लवनमन्यासाध्यमिति भावः। अन्यत्र मध्यपर्व्वतास्तु राक्षसैर्भक्ता मज्जिता दुर्गसिद्धये प्लवास्त्र मज्जिताः अतएवात्र सुग्रीवेण तेनोक्ताः अतएव चत्वारिंशे सर्गे पूर्व्वदिक्प्रेषितवानरान् प्रति समुद्रान्तरगतदेशमुपक्रम्य गिरिभिर्ये च गम्यन्ते प्लवनेन चेत्युक्तम्॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धाकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

## सप्तषष्टितमः सर्गः ।

तं दृष्ट्वा जृम्भमाणं ते क्रमितुं शतयोजनम् ।
वेगेनापूर्य्यमाणञ्च सहसा वानरोत्तमम् ॥ १ ॥
सहसा शोकमुत्सृज्य प्रहर्षेण समन्विताः ।
विनेदुस्तुष्टुवुश्चापि हनूमन्तं महाबलम् ॥ २ ॥
प्रहृष्टा विस्मिताश्चापि ते वीक्षन्ते समन्ततः ।
त्रिविक्रमं कृतोत्साहं नारायणमिव प्रजाः ॥ ३ ॥
संस्तूयमानो हनुमान् व्यवर्द्धत महाबलः ।
समाविध्य च लाङ्गूलं हर्षात् बलमुपेयिवान् ॥ ४ ॥
तस्य संस्तूयमानस्य वृद्धैर्वानरपुङ्गवैः ।
तेजसा पूर्य्यमानस्य रूपमासीदनुत्तमम् ॥ ५ ॥
यथा विजृम्भते सिंहो विवृते गिरिगह्वरे ।
मारुतस्यौरसः पुत्रस्तथा सम्प्रति जृम्भते ॥ ६ ॥

अथ गृहीतमहाविग्रहस्य हनूमतो वानरबलाश्वासनाय निजबल-प्रख्यापनपूर्व्वं समुद्रलङ्घनाय महेन्द्रपर्व्वतारोहणमाह,—तमिति। जृम्भमाणं वर्द्धमानम् । ते वानराः ॥ १ ॥ २ ॥

कृतोत्साहं त्रिलोकीविक्रमणे इति शेषः ॥ ३ ॥

समाविध्यास्फाल्य ॥ ४ ॥ ५ ॥ ६ ॥

अशोभत मुखं तस्य जृम्भमाणस्य धीमतः।
अम्बरीषोपमं दीप्तं विधूम इव पावकः ॥ ७ ॥
हरीणामुत्थितो मध्यात् स प्रहृष्टतनूरुहः।
अभिवाद्य हरीन् वृद्धान् हनूमानिदमब्रवीत् ॥ ८ ॥
अरुजन् पर्व्वताग्राणि हुताशनसखोऽनिलः।
बलवानप्रमेयश्च वायुराकाशगोचरः ॥ ९ ॥
तस्याहं शीघ्रवेगस्य शीघ्रगस्य महात्मनः।
मारुतस्यौरसः पुत्रः प्लवनेनास्मि तत्समः ॥ १० ॥
उत्सहेयं हि विस्तीर्णमालिखन्तमिवाम्बरम्।
मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः ॥ ११ ॥
बाहुवेगप्रणुन्नेन सागरेणाहमुत्सहे।
समाप्लावयितुं लोकं सपर्व्वतनदीह्रदम् ॥ १२ ॥

अम्बरीषं भ्राष्ट्रं तदुपमम् अतएव दीप्तं प्रज्वलत् अङ्गारवर्णप्रतप्त-भ्राष्ट्रोपममिति यावत्। स्वयञ्च विधूमः पावक इवाशोभत। अम्ब-रीषोपमं दीप्तं विधूम इव पावक इति प्राचीनः पाठः ॥ ७ ॥ ८ ॥

अरुजन् अत्यन्तं भिन्दमानः। हुताशनस्य सखा उच्यमानगुणो यो वायुर्गमनशीलोऽनिलोऽस्ति ॥ ९ ॥

तस्य मारुतस्याहमौरसः पुत्रः प्लवनेन गुणेन तत्समोऽस्मि ॥ १० ॥

मेरुं गिरिमसङ्गेन मध्ये विश्रामाय क्वचित् क्षणमपि स्थिति-राहित्येनैव सहस्रशः परिगन्तुमुत्सहे एकेनैव वेगेन सहस्रवारं प्रद-क्षिणं कर्त्तुं शक्नोमीत्याशयः ॥ ११ ॥ १२ ॥

ममोरुजङ्घावेगेन भविष्यति समुत्थितः।
समुत्थितमहाग्राहः समुद्रो वरुणालयः॥ १३॥
पन्नगाशनमाकाशे पतन्तं पक्षिसेवितम्।
वैनतेयमहं शक्तः परिगन्तुं सहस्रशः॥ १४॥
उदयात् प्रस्थितं वापि ज्वलन्तं रश्मिमालिनम्।
अनस्तमितमादित्यमहं गन्तुं समुत्सहे॥ १५॥
ततो भूमिमसंस्पृष्ट्वा पुनरागन्तुमुत्सहे।
प्रवेगेनैव महता भीमेन प्लवगर्षभाः !॥ १६॥
उत्सहेयमतिक्रान्तुं सर्व्वानाकाशगोचरान्।
सागरान् शोषयिष्यामि दारयिष्यामि मेदिनीम्॥ १७॥
पर्व्वतांश्चूर्णयिष्यामि प्लवमानः प्लवङ्गमः।
हरिष्याम्यूरुवेगेन प्लवमानो महार्णवम्॥ १८॥

समुत्थितः अतिक्रान्तवेलः॥ १३॥

पक्षिसेवितं पक्षिराजं वैनतेयमाकाशे पतन्तमहमपि सहस्रशः परिगन्तुं शक्तः। तस्यैकपातं यावदहं सहस्रवारं पतितुं शक्त इति यावत्॥ १४॥

उदयगिरेः प्रस्थितम् अनस्तमितमेव गन्तुं गत्वा स्प्रष्टुमुत्सहे। ततः तं स्पृष्ट्वा पुनः प्रत्यावृत्य भूपर्य्यन्तमागत्य भुवमस्पृष्ट्वैव पुनस्तदभिमुखं गन्तुमुत्सहे। प्रवेगेन प्रस्तुतैकयत्नेन। एवञ्च शतयोजनगमनागमनयोर्न कश्चित् प्रयास इति ध्वनितम्॥ १५॥ १६॥

आकाशगोचरा ग्रहर्क्षादयः॥ १७॥ १८॥

लतानां विविधं पुष्पं पादपानाञ्च सर्व्वशः ।
अनुयास्यति मामद्य प्लवमानं विहायसा ॥ १९ ॥
भविष्यति हि मे पन्थाः स्वातेः पन्था इवाम्बरे ।
चरन्तं घोरमाकाशमुत्पतिष्यन्तमेव च ॥ २० ॥
द्रक्ष्यन्ति निपतन्तञ्च सर्व्वभूतानि वानराः ! ।
महामेरुप्रतीकाशं मां द्रक्ष्यध्वं प्लवङ्गमाः ! ॥ २१ ॥
दिवमावृत्य गच्छन्तं ग्रसमानमिवाम्बरम् ।
विधमिष्यामि जीमूतान् कम्पयिष्यामि पर्व्वतान् ।
सागरं शोषयिष्यामि प्लवमानः समाहितः ॥ २२ ॥
वैनतेयस्य वा शक्तिर्मम वा मारुतस्य वा ।
ऋते सुपर्णराजानं मारुतं वा महाबलम् ।
न तद्भूतं प्रपश्यामि यन्मां प्लतमनुव्रजेत् ॥ २३ ॥

लतानां विविधं पुष्पं पादपानाञ्च पुष्पं हरिष्यामीत्यन्वयः । तच्च पुष्पं वायुवेगेनाहृतं मामनुयास्यति ॥ १९ ॥

स्वातेः पन्था इति स्वातिपथः छायापथ इत्युच्यते । स तु प्रकीर्णबहुनक्षत्रः मम पन्था अपि प्रकीर्णबहुपुष्पकः चरन्तं मां मध्ये । आकाशं प्रति उत्पतिष्यन्तमेव ॥ २० ॥

निपतन्तं परे पारे इति शेषः द्रक्ष्यन्ति । अनेनोत्पतनपतनयोरेककालत्वोक्त्यातिवेगः सूचितः । अम्बरं ग्रसमानमिव मां द्रक्ष्यध्वमित्यन्वयः ॥ २१ ॥ २२ ॥

वैनतेयस्य वेति । त्वयायामेवैषा सर्वभूतातिशायिनी शक्ति-

निमेषान्तरमात्रेण निरालम्बनमम्बरम्।
सहसा निपतिष्यामि घनाद्विद्युदिवोत्थिता ॥ २४ ॥
भविष्यति हि मे रूपं प्लवमानस्य सागरम्।
विष्णोः प्रक्रममाणस्य तदा त्रीन् विक्रमानिव ॥ २५ ॥
बुद्ध्या चाहं प्रपश्यामि मनश्चेष्टा च मे तथा।
अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवङ्गमाः! ॥ २६ ॥
मारुतस्य समो वेगे गरुड़स्य समो जवे।
अयुतं योजनानान्तु गमिष्यामीति मे मतिः ॥ २७ ॥
वासवस्य सवज्रस्य ब्रह्मणो वा स्वयम्भुवः।
विक्रम्य सहसा हस्तादमृतं तदिहानये ॥ २८ ॥

जांन्यस्येति भावः। श्रुतं मां तौ ऋते यदनुव्रजेत् तत् भूतं न पश्यामि ॥ २३ ॥

विद्युदुपमया शैघ्र्यं बडदेश्यत्वाग्निर्ध्वन्यते ॥ २४ ॥

तदा त्रिविक्रमावतारकाले ॥ २५ ॥

सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय इति न्यायेनाह,—बुद्ध्येति। निश्चयात्मकान्तःकरणेनेत्यर्थः। तथा मे मनश्चेष्टा मनोव्यापारोऽनुमानरूपः। किं पश्यसि किंविषया च ते मनश्चेष्टेत्यपाह,—द्रक्ष्यामीति ॥ २६ ॥

वेगजवौ पर्य्यायौ अयुतमित्यनेनाप्रमेयबलत्वं प्रकाश्यते न तु परिच्छेदः वस्तुतः तदभावात्। रावणोऽपि वक्ष्यति। न मारुतेरस्ति गतिप्रमाणमिति ॥ २७ ॥

लङ्कां वापि समुत्क्षिप्य गच्छेयमिति मे मतिः ।
तमेवं वानरश्रेष्ठं गर्जन्तममितप्रभम् ॥ २९ ॥
प्रहृष्टा हरयस्तत्र समुदैक्षन्त विस्मिताः ।
तच्चास्य वचनं श्रुत्वा ज्ञातीनां शोकनाशनम् ॥ ३० ॥
उवाच परिसंहृष्टो जाम्बवान् प्लवगेश्वरः ।
वीर ! केसरिणः पुत्र ! वेगवन् ! मारुतात्मज ! ॥ ३१ ॥
ज्ञातीनां विपुलः शोकस्त्वया तात ! प्रणाशितः ।
तव कल्याणरुचयः कपिमुख्याः समागताः ॥ ३२ ॥
मङ्गलान्यर्थसिद्ध्यर्थं करिष्यन्ति समाहिताः ।
ऋषीणाञ्च प्रसादेन कपिवृद्धमतेन च ॥ ३३ ॥
गुरूणाञ्च प्रसादेन संप्लव त्वं महार्णवम् ।
स्थास्यामश्चैकपादेन यावदागमनं तव ॥ ३४ ॥

वासवस्येति । वासवहस्ते स्वर्गिभोग्यममृतम् । ब्रह्मणो हस्ते च योगिभोग्यममृतं तदानयनवचोऽत्युक्त्यलङ्कारपरम् ॥ २८ ॥

समुत्क्षिप्य स्वस्थानादुत्पाटनपूर्वकं गृहीत्वा यद्वा ततः परतोऽपि गच्छेयमित्यर्थः ॥ २९ ॥ ३० ॥

वेगवन्निति सम्बुद्धिः ॥ ३१ ॥

त्वत्सम्बन्धिन्यां कल्याणवृद्धौ रुचिराभिलाषो एषां ते । यद्वा तव कल्याणां वाञ्छितारः ॥ ३२ ॥

वृद्धमतम् आशीर्वादः ॥ ३३ ॥

त्वद्गतानि च सर्व्वेषां जीवनानि वनौकसाम् ।
ततस्तु हरिशार्दूलस्तानुवाच वनौकसः ॥ ३५ ॥
कोऽपि लोके न मे वेगं प्लवने धारयिष्यति ।
एतानीह नगस्यास्य शिलासङ्कटशालिनः ॥ ३६ ॥
शिखराणि महेन्द्रस्य स्थिराणि च महान्ति च ।
येषु वेगं गमिष्यामि महेन्द्रशिखरेष्वहम् ॥ ३७ ॥
नानाद्रुमविकीर्णेषु धातुनिष्यन्दशोभिषु ।
एतानि मम वेगं हि शिखराणि महान्ति च ॥ ३८ ॥
प्लवतो धारयिष्यन्ति योजनानामितः शतम् ।
ततस्तु मारुतप्रख्यः स हरिर्मारुतात्मजः ।
आरुरोह नगश्रेष्ठं महेन्द्रमरिमर्दनः ॥ ३९ ॥
वृत्तं नानाविधैः पुष्पैः मृगसेवितशाद्वलम् ।
लताकुसुमसम्बाधं नित्यपुष्पफलद्रुमम् ॥ ४० ॥

तव यावदागमनम् एकपादेन स्थास्यामः त्वरया प्रियं श्रोतुम् एकपादेन स्थित्वा तपश्चरिष्याम इत्यर्थः ॥ ३४ ॥ ३५ ॥

प्लवने सति मम वेगं न कोऽपि धारयिष्यति । शिलासङ्कटं शिलासमूहः । अतएव एतानि स्थिराणि शिखराणीत्यन्वयः ॥ ३६ ॥ ३७ ॥

धातुनिष्यन्दः धातुसमूहः ॥ ३८ ॥

मारुतप्रख्यः तत्सदृशः ॥ ३९ ॥

मृगैः सेवितं शाद्वलं तृणवद्देशो यस्य ॥ ४० ॥

सिंहशार्दूलसहितं मत्तमातङ्गसेवितम् ।
मत्तद्विजगणोद्‌घुष्टं सलिलोत्पीड़सङ्कुलम् ॥ ४१ ॥
महद्भिरुच्छ्रितः शृङ्गैर्महेन्द्रस्य महाबलः ।
विचचार हरिश्रेष्ठो महेन्द्रसमविक्रमः ॥ ४२ ॥
बाहुभ्यां पीड़ितस्तेन महाशैलो महात्मना ।
ररास सिंहाभिहतो महान् मत्त इव द्विपः ॥ ४३ ॥
मुमोच सलिलोत्पीड़ान् विप्रकीर्णशिलोच्चयः ।
वित्रस्तमृगमातङ्गः प्रकम्पितमहाद्रुमः ॥ ४४ ॥
नानागन्धर्व्वमिथुनैः पानसंसर्गकर्कशैः ।
उत्पतद्भिर्विहङ्गैश्च विद्याधरगणैरपि ॥ ४५ ॥
त्यज्यमानमहासानुः सन्निलीनमहोरगः ।
शैलशृङ्गशिलोत्पातस्तदाभूत् स महागिरिः ॥ ४६ ॥
निश्वसद्भिस्तदा तैस्तु भुजगैरर्द्धनिःसृतैः ।
सपताक इवाभाति स तदा धरणीधरः ॥ ४७ ॥
ऋषिभिस्त्राससम्भ्रान्तैस्त्यज्यमानः शिलोच्चयः ।

सलिलोत्पीड़ा निर्झरः ॥ ४१ ॥

उच्छ्रितो महाबलो हनूमान् महेन्द्रस्य महद्भिः शृङ्गैर्विचचार शृङ्गात् शृङ्गान्तरं जगाम ॥ ४२ ॥

ररास खवर्त्तिप्राणिशब्देनेति शेषः ॥ ४३ ॥ ४४ ॥

पाने संसर्गे च कर्कशैरत्यासक्तैः गन्धर्वाणां तथात्वञ्च स्वभावः ॥ ४५ ॥

सीदन् महति कान्तारे सार्थहीन इवाध्वगः ॥ ४८ ॥

स वेगवान् वेगसमाहितात्मा
हरिप्रवीरः परवीरहन्ता ।
मनः समाधाय महानुभावो
जगाम लङ्कां मनसा मनस्वी ॥ ४९ ॥

इत्यार्षे रामायणे वाल्मीकीये किष्किन्धाकाण्डे
सप्तषष्टितमः सर्गः ॥ ६७ ॥

शैलशृङ्गस्य शिलानामुत्पातः पतनं यस्मिन् सः ॥ ४६ ॥ ४७ ॥ ४८ ॥
मनसा जगाम सस्मारेत्यर्थः । ४९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके किष्किन्धा-
काण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

इति किष्किन्धाकाण्डं समाप्तम् ।